॥ ॐ अर्हं नमः ॥

भव्यसत्त्वानुग्रहसंस्कृतप्राकृतगद्यपद्यात्मानेकलक्षश्लोकप्रमितविरहाङ्कचतुश्चत्वारिंशदुत्तरचतुर्दशशत-शास्त्रप्रासादसूत्रणसूत्रधारपूर्वधरासन्नकालवर्तिसुविहिताग्रणीसुविहितनामधेयसकलसूरिपुरन्दर श्रीमद्धरिभद्रसूरिसन्दृब्धः स्वोपज्ञव्याख्यासमेतः



# ॥ श्री योगदृष्टिसमुच्चयः ॥

योगतन्त्रप्रत्यासन्नभूतस्य योगदृष्टिसमुच्चयस्य व्याख्या प्रारभ्यते । इह चादावेवाचार्यः शिष्टसमयप्रतिपालनाय विघ्न-विनायकोपशान्तये प्रयोजनादिप्रतिपादनार्थं श्लोकसूत्रमुपन्यस्तवान्—

नत्वेच्छायोगतोऽयोगं, योगिगम्यं जिनोत्तमम् । वीरं वक्ष्ये समासेन, योगं तद्दृष्टिभेदतः ॥ १ ॥

इति ॥ तत्र शिष्टानामयं समयो यदुत "शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतानमस्कारपूर्वकं प्रवर्तन्ते" । अयमप्याचार्यो न हि न शिष्ट इति, अतस्तत्समयप्रतिपालनाय । तथा चोक्तम् " शिष्टानामेष समयस्ते सर्वत्र शुभे

किल ॥ प्रवर्तन्ते सदैवेष्टदेवतास्तवपूर्वकम् ॥ १ ॥ इत्यादि ॥" तथा "श्रेयांसि बहुविघ्नानि भवन्ति" इति, उक्तं च – "श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि ॥ अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥ १ ॥ इति ॥" इदं प्रकरणं तु सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूतम्। अतो मा भूद्विघ्न इति विघ्नविनायकोपशान्तये। तथा प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनादिप्रतिपादनार्थं च। तथा चोक्तम्–"सर्वस्यैव हि शास्त्रस्य, कर्मणो वापि कस्यचित्। यावत्प्रयोजनं नोक्तं, तावत्तत्केन गृह्यते ॥ १ ॥ न चाप्यविषयस्येह, शक्यं वक्तुं प्रयोजनम् ॥ काकदन्तपरीक्षादे-स्तत्प्रयोगाप्रसिद्धितः ॥ २ ॥ अस्येदं फलमित्येवं, योगः सम्बन्ध उच्यते। तदुक्त्यन्तर्गतत्वेन, न पृथक्कैश्चिदिष्यते ॥ ३ ॥ इत्यादि" ॥ तत्र नत्वेच्छायोगतोऽयोगं योगिगम्यं जिनोत्तमम्। वीरं इत्यनेनेष्टदेवतास्तवमाह, वक्ष्ये समासेन, योगं तद्दृष्टिभेदतः॥ इत्यनेन तु प्रयोजनादित्रयमिति श्लोकसूत्रसमुदायार्थः ॥ अवयवार्थस्तु नत्वा प्रणम्य वीरं इति योगः। कथमित्याह इच्छायोगतः इति। क्रियाविशेषणमाह। इच्छायोगेन। शास्त्रयोगसामर्थ्ययोगव्यवच्छेदार्थमेतत्॥ इष्टव्यवच्छेदश्चायं तदनधिकारित्वेन प्रकरणारम्भे मृषावादपरिहारेण सर्वत्रौचित्यारम्भप्रवृत्तिप्रदर्शनार्थः। एतेषां च त्रयाणामपि योगानां स्वरूपमनन्तरमेव वक्ष्यति। किंविशिष्टं वीरमित्याह जिनोत्तमं इति वस्तुविशेषणम्। इह रागादिजेतृत्वात्सर्व एव विशिष्टश्रुतधरादयो जिना उच्यन्ते। तद्यथा। ×श्रुतजिनाः, अवधिजिनाः, मनःपर्यायज्ञानजिनाः, केवलिजिनाश्च। तेषामुत्तमः केवलित्वात्तीर्थंकरत्वाच्च। अनेन भगवतस्तथाभव्यत्वाक्षिप्तवरबोधिलाभगर्भहेतुवात्सल्योपात्तानुत्तरपुण्यस्वरूपतीर्थंकरनामकर्मविपाकफलरूपां परंपरार्थसम्पादनीं कर्मकायावस्थामाह। अयमेव विशिष्यते अयोगं इति। "कायवाङ्मनःकर्म योगः," अविद्यमानयोगोऽयोगः तम्। अनेन च भगवतः शैलेश्यवस्थोत्तर-



॥मङ्गलादि-
स्वरूपम्॥

॥ १ ॥

कालभाविनीं समस्तकर्मविगमरूपां तथाभव्यत्वपरिक्षयोद्भूतपरमज्ञानसुखलक्षणां कृतकृत्यतया निष्ठितार्थां परमफलरूपां तत्त्वकायावस्थामिति। अत एवाह **योगिगम्यं** इति। योगिनां गम्यो योगिगम्यः, तम्। योगिनोऽत्र श्रुतजिनादयो गृह्यन्ते। अनेनापि भगवतोऽयोगिमिथ्यादृष्टिगम्यत्वव्यवच्छेदमाह। एतज्जिज्ञासाया अपि चरमयथाप्रवृत्तकरणभावित्वादन्यदा तदनुपपत्तिरिति। **वीरं** इति चान्वर्थसंज्ञेयं, महावीर्यविराजनात्तपःकर्मविदारणेन कषायादिशत्रुजयात्केवलश्रीस्वयंग्रहणेन विक्रान्तो वीरः, तम्। इत्थमनेन यथाभूतान्यासाधारणगुणोत्कीर्तनरूपत्वाद्भावस्तवस्येष्टदेवतास्तवमाहेति। इष्टत्वं च गुणतो गुणप्रकर्षरूपत्वाद्भगवतः, देवतात्वं च परमगत्यवाप्त्येति। **वक्ष्ये समासेन योगं तद्दृष्टिभेदतः** इत्यनेन तु प्रयोजनादित्रयमाह। कथमित्युच्यते **वक्ष्ये** अभिधास्ये, **योगं** मित्रादिलक्षणं, **समासेन** संक्षेपेण, विस्तरेण तु पूर्वाचार्यैरेवायमुक्तोऽप्युत्तराध्ययनयोगनिर्णयादिषु, **तद्दृष्टिभेदतः** इति योगदृष्टिभेदेन। तदत्र समासतो योगाभिधानं कर्तुरनन्तरं प्रयोजनम्। परंपराप्रयोजनं तु निर्वाणमेव, शुद्धाशयतस्तथासत्त्वहितप्रवृत्तेरस्याश्चावन्ध्यनिर्वाणवीजत्वादिति। अभिधेयं योग एव। साध्यसाधनलक्षणः सम्बन्ध इति क्षुण्णोऽयं मार्गः। श्रोतॄणां त्वनन्तरप्रयोजनं प्रकरणार्थपरिज्ञानं परंपराप्रयोजनं त्वमीषामपि निर्वाणमेव, प्रकरणार्थपरिज्ञानादौचित्येनात्रैव प्रवृत्तेरस्याश्चाप्यवन्ध्यनिर्वाणवीजत्वादिति ॥ १ ॥

एवं सम्पादितेष्टदेवतास्तवप्रयोजनाद्यभिधाय प्रकरणोपकारकं प्रासङ्गिकमभिधातुमाह–

**इहैवेच्छादियोगानां, स्वरूपमभिधीयते। योगिनामुपकाराय, व्यक्तं योगप्रसङ्गतः ॥ २ ॥**

**इहैव** इति प्रक्रमे। किमित्याह **इच्छादियोगानां** इति। इच्छायोगशास्त्रयोगसामर्थ्ययोगानाम्। किमत आह, **स्वरूपमभिधीयते** इति स्वलक्षणमुच्यते। किमर्थमेतदित्याह **योगिनामुपकाराय** इति। योगिनोऽत्र कुलयोगिनः प्रवृत्त-

-चक्रा गृह्यन्ते वक्ष्यमाणलक्षणाः, न निष्पन्नयोगा वक्ष्यमाणलक्षणा एव । तेषामत उपकाराभावात्, तदितरेषामेवोपकारार्थम् । उपकारश्चातो योगहृदयाववबोधः, कथमभिधीयत इत्याह व्यक्तं स्पष्टं, न चाप्रस्तुतमप्येतदित्याह योगप्रसङ्गत इति, मित्रादियोगप्रसङ्गेन प्रसङ्गाख्यतन्त्रयुक्त्याक्षिप्तमित्यर्थः ॥ २॥ इच्छायोगस्वरूपप्रतिपादनायाह—

॥ इच्छायोगादिस्वरूपम् ॥

**कर्तुमिच्छोः श्रुतार्थस्य, ज्ञानिनोऽपि प्रमादतः । विकलो धर्मयोगो यः, स इच्छायोग उच्यते ॥३॥**

कर्तुमिच्छोः कस्यचिन्निर्व्याजमेव तथाविधक्षयोपशमभावेन । अयमेव विशिष्यते । किंविशिष्टस्यास्य चिकीर्षोः, श्रुतार्थस्य श्रुतागमस्य; अर्थशब्दस्यागमवचनत्वात्, अर्थ्यतेऽनेन तत्त्वं इति कृत्वा । अयमपि कदाचिदज्ञान्येव भवति, क्षयोपशमवैचित्र्यात् । अत आह ज्ञानिनोऽपि अवगतानुष्ठेयतत्त्वार्थस्यापीति । एवंभूतस्यापि सतः किमित्याह प्रमादतः प्रमादेन विकथादिना, विकलः असंपूर्णः कालादिवैकल्यमाश्रित्य, धर्मयोगो धर्मव्यापारः, यः इति योऽर्थः वन्दनादिविषयः स इच्छायोग उच्यते इच्छाप्रधानत्वं चास्य तथाकालादावपि करणादिति ॥ ३ ॥ शास्त्रयोगस्वरूपाभिधित्सयाह—

**शास्त्रयोगस्त्विह ज्ञेयो, यथाशक्त्यप्रमादिनः ॥ श्राद्धस्य तीव्रबोधेन, वचसाऽविकलस्तथा ॥ ४ ॥**

शास्त्रयोगस्तु इति। शास्त्रप्रधानो योगः शास्त्रयोगः प्रक्रमाद्धर्मव्यापार एव । स तु पुनः, इह योगतन्त्रे, ज्ञेयो विज्ञेयः। कस्य कीदृगित्याह यथाशक्ति शक्त्यनुरूपं, अप्रमादिनः विकथादिप्रमादरहितस्य । अयमेव विशिष्यते श्राद्धस्य तथाविधमोहापगमात्संप्रत्ययात्मिकादिश्रद्धावतः, तीव्रबोधेन पटुबोधेन हेतुभूतेन, वचसा आगमेन, अविकलः अखण्डः, तथा कालादिवैकल्यावाधया, "न ह्यपटवोऽतिचारदोषज्ञा इति" ॥ ४ ॥ सामर्थ्ययोगलक्षणमाह—

**शास्त्रसन्दर्शितोपाय—स्तदतिक्रान्तगोचरः ॥ शक्त्युद्रेकाद्विशेषेण, सामर्थ्याख्योऽयमुत्तमः ॥ ५ ॥**

॥ श्रीजैनग्रन्थप्रकाशकसभा ग्रन्थमाला ग्रन्थांकः २४-२५ ॥

परमकारुणिक-पूर्वधरासन्नकालवर्ति-सुविहिताग्रणी-सूरिपुरन्दर
श्रीहरिभद्रसूरिभगवत्प्रणीतौ स्वोपज्ञविवरणविभूषितौ

# ॥ श्रीयोगदृष्टिसमुच्चयः श्रीयोगबिन्दुश्च ॥

तौ चेमौ अहम्मदावादस्थश्रीजैनग्रन्थप्रकाशकसंस्थाकार्यवाहकेन
ईश्वरदासमूलचन्द्रेण अहम्मदावादस्थ

महेन्द्रमुद्रणालये मुद्रयित्वा प्राकट्यं नीतौ

वीर सं. २४६६ प्रतय : १००० विक्रम सं. १९९६ सन् १९४०

## આ ગ્રંથમુદ્રણમાં અગાઉથી ગ્રાહક થઈ પ્રોત્સાહન આપનાર સદ્દગૃહસ્થોના નામો

| | | | |
|---|---|---|---|
| ૫૧ | શેઠ. ચંદુલાલ બુલાખીદાસ | ૩૧ | શેઠ. કસ્તુરચંદ સાંકલચંદ હા. બુધાભાઇ |
| ૪૧ | શેઠ. ચીમનલાલ લાલભાઇ | ૨૫ | શેઠ. રતિલાલ કેશવલાલ |
| ૩૧ | શેઠ. જેશંગભાઈ કાલીદાસ શેરદલાલ | ૧૫ | શેઠ. જેશંગભાઈ ઉગરચંદ |
| ૩૧ | શેઠ. ઇશ્વરદાસ મૂળચંદ | ૧૧ | શેઠ. સાંકળચંદ એચરદાસ |

"આ પુસ્તક ધી મહેન્દ્ર પ્રીન્ટીંગ પ્રેસમાં." છોટાલાલ બાલચંદ દોશીએ છાપ્યું,
ઠેકાણું : રતનપોળ ગોલવાડના નાકે, અમદાવાદ.

## ॥ ग्रन्थनिर्मातृपरिचयादिज्ञापकं प्रकाशकीयं निवेदनम् ॥

### (॥ पूर्वाचार्यविनिर्मिता श्रीहरिभद्रसूरिभगवत्स्तुतिः ॥)

ग्रावग्रन्थिप्रमाथिप्रकटपटुरणत्कारवाग्भारतुष्ट-प्रेङ्खद्दर्पिष्टदुष्टप्रमदवशभुजास्फालनोत्तालवालाः ॥
यद्दृष्ट्वा मुक्तवन्तः स्वयमतनुमदं वादिनो हारिभद्रं, तद्गम्भीरप्रसन्नं न हरति हृदयं भाषितं कस्य जन्तोः ॥१॥
नित्यं श्रीहरिभद्रसूरिगुरवो जीयासुरत्यद्भुत-ज्ञानश्रीसमलङ्कृताः सुविशदाचारप्रभाभासुराः ॥
येषां वाक्प्रपया प्रसन्नतरया शीलाम्बुसम्पूर्णया, भव्यस्येह न कस्य कस्य विदधे चेतोमलक्षालनम् ॥२॥
विषं विनिर्धूय कुवासनामयं, व्यचीचर (रीरच)द्यः कृपया मदाशये ॥
अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥३॥

श्रीसौजन्यभ्राजिष्णवो विद्वांसो विदाङ्कुर्वन्तु समस्तविद्वत्समाजे सुविदितमेवैतद्यदुतैतद्ग्रन्थरत्नयुगलप्रणेतॄणां भगवतां श्रीवीतरागपारगतगदितशासनप्रभावनाबद्धकक्षोद्धुराणां परमकारुणिकानां षड्दर्शनीसमस्तवाङ्मयपारदृश्वनां चतुश्चत्वारिंशदुत्तरचतुर्दशशतग्रन्थप्रासादसूत्रणसूत्रधारायमाणानां कुशाग्रीयाकुण्ठमतिमत्तामादधानानां सुविहितशिरोवतंसानां सुगृहीतनामधेयानां श्रीमतां हरिभद्रसूरिपुङ्गवानां प्रवचनपुरुषद्वादशाङ्गीशिरःस्वरूपदृष्टिवादान्तर्वर्तिपूर्वश्रुतधारिनिकटानेहोवर्तिता ॥ सद्भावसमयश्च श्रीवीरविभोः पञ्चमनिर्वाणकल्याणककालादेकादशशताब्दीरूपः श्रीविक्रमार्कसंवत्सरप्रवृत्तेश्च षष्ठशताब्दीरूप इति तद्गोचरायासस्तु रोमन्थप्राय इति ॥ पूर्वव्यवच्छेदकालश्च श्रीवीराद्वर्षसहस्रातिक्रमरूपो विक्रमार्काब्दाच्च त्रिंशदुत्तरवर्षपञ्चशत्यात्मको निर्णीततम एव "वीराद्वर्षसहस्रेत्यादि" तत्तत्पूर्वमहापुरुषवचःसन्दर्भसंवादेन ॥ भगवतां

श्रीहरिभद्रसूरिपादानामपि तत्समयसामीप्यसत्ताकत्वं श्रीवीरविभोः कालात् " पणपन्नदससएहि हरिभद्दसूरी आसी " श्रीविक्रमार्ककालाच्च " पंचसए पणसीए, विक्कमभूवाओ झत्ति अत्थमिओ ॥ हरिभद्दसूरिसूरो, धम्मरओ देउ मुक्खसुहं ॥ १ ॥ " इत्यादिभिः प्रामाणिकपूर्वपुरुषप्रकथनैः । श्रीहरिभद्रसूरिपादप्रणीतानां ग्रन्थरत्नानां समेषामपि श्रीदृष्टिवादार्णवोद्धृतत्वं तन्निस्यन्दकल्पत्वं च तत्तद्ग्रन्थावलोकनेन सत्त्वावलोकिनां ख्याततममेव ॥ तथा च श्रीचन्द्रकुलाम्बराहर्मणेर्नवाङ्ग्याद्यनेकागमादिवृत्तिप्रभृतिग्रन्थकदम्बप्रणायकस्य भगवतोऽभयदेवाचार्यस्य पञ्चाशकवृत्तिगतपाठः ॥ "इह हि विस्फुरन्निखिलातिशयतेजोधामनि दुःषमाकालविपुलजलदपटलावलुप्यमानमहिमनि नितरामनुपलक्षीभूतपूर्वगतादिबहुतमग्रन्थसार्थतारकानिकरे पारगतगदितागमाम्बरे पटुतमबोधलोचनतया सुगृहीतनामधेयो भगवान् हरिभद्रसूरिस्तथाविधपुरुषार्थसिद्ध्यर्थिनामपटुदृष्टीनामुन्नमितजिज्ञासाबुद्धिकन्धराणामैदंयुगीनमानवानामात्मनोपलक्ष्यमाणान्विवक्षितार्थसार्थसाधनसमर्थान्कतिपयप्रवचनार्थतारतारकविशेषानुपदिदर्शयिषुः पञ्चाशद्गाथापरिमाणतया पञ्चाशकाभिधानानि प्रकरणानि चिकीर्षुः" इत्यादि ॥ पञ्चाशकमुपलक्षणीकृत्य प्रदर्शितमिदं श्रीहरिभद्रसूरिपादसन्दब्धसर्वग्रन्थस्वारस्यं समवसेयम् ॥ तैरेव पूज्यैर्भगवद्भिर्हरिभद्रसूरिभिः सिद्धिपुरीपथप्रदर्शके योगोपनिषद्गर्भे योगभेदादिविविधतत्त्वसमलङ्कृते योगदृष्टिसमुच्चय–योगबिन्द्वभिख्ये ग्रन्थरत्ने एते स्वोपज्ञविवरणविभूषिते विनिर्मिते ॥ विषयविभागसूची च प्रतिपत्रं प्रवितततेति नेह तन्यते ॥ ग्रन्थाविमावन्यत्र मुद्रितावपि तथाविधवाचनादिस्वाध्यायारूढचेतसां विशिष्टचेतनावतां मुमुक्षूणां भव्यसत्त्वानामुपकृतिकृते प्राचीनतमहस्तलिखितपुस्तकैः शुद्धीकरणविशेषावधृतावधानतया श्रीराजनगर (अहम्मदावाद) स्थ श्रीजैनग्रन्थप्रकाशक–संस्थया मुद्रितौ ॥ मुद्रणालयस्थसीसकाक्षरयोजकप्रभृतिपुरुषप्रमादादिदोषेण

छद्मस्थजनसुलभशुद्धिकृदनाभोगादिदोषेण च यत्किमपि रिङ्खणं शुद्धिपत्रकनिवेशेऽप्यत्राशिष्यत " गच्छतः स्खलनं क्वापि, भवत्येव प्रमादतः ॥ हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः ॥ १ ॥ " इतिन्यायमवलम्ब्य सौजन्यवद्भिर्मर्षयित्वा तच्छेमुषीशालिभिः संशोध्य पठनपाठनादिषु प्रयत्यमिति विज्ञप्यते ॥ निवेद्यते च यः क्वचित्क्वचित् 'बवयोः' 'पषयोः' व्यत्ययो मुद्रणे सञ्जातः समजायत च क्वचिदक्षरानुत्थानं तत्सर्वं संशोध्यं पठनाभिरतैः ॥ सूचना-योगदृष्टिसमुच्चयव्याख्यापुस्तके तुर्य-षष्ठ-सप्तम-नवम-श्लोकानां यद्विवरणमुपलभ्यते तेषामेव श्लोकानां श्रीमुनिचन्द्रसूरिभिर्भगवद्भिर्ललितविस्तरापञ्जिकायामेतदक्षरानुसारि विवरणमलेखि तत्र यः कश्चिद्विशेषो दृश्यते सोऽत्र प्रदर्श्यते ॥ ४ श्लोकविवरणे 'न ह्यपटवोऽतिचारदोषज्ञा इति' तत्स्थाने ल. पं. पुस्तके 'न ह्यपटवोऽतिचारदोषज्ञा इति कालादिवैकल्येनाबाधायां तीव्रबोधो हेतुतयोपन्यस्तः' ॥ ६ श्लो. वि. 'शास्त्रादेव' स्थाने ' शास्त्रादेव आगमादेव ' ॥ ७ श्लो. वि. 'सद्भावावगतिप्रसङ्गादिति' तत्स्थाने ' सद्भावादेवायोगिकेवलिस्वभावभवनेनावगतिप्रसङ्गात् । अविषयेपि शास्त्रसामर्थ्याभ्युपगम इत्थमपि शास्त्रसामर्थ्यप्रसङ्गात् ' ॥ ९ श्लो. वि. ' संन्याससंज्ञित इति ' तत्स्थाने ' संन्याससंज्ञित इति संन्यासो निवृत्तिरुपरम इत्येकोऽर्थः । ततः" ॥ किञ्च योगदृष्टिसमुच्चयवृत्तौ पत्र १९ पृ. १ पं. २ ' ऋषभादिलक्षणे सति ' एतद्वाक्ये त्र्युत्तरशततमश्लोकव्याख्या समाप्यत, तदनन्तरं च 'प्रतिपत्तिस्ततस्तस्य,' इत्यादिकश्चतुरग्रशतसंख्याको मूलश्लोकस्तद्विवरणं च पृथक्करणीये ॥ १०५ श्लोकांकश्च द्विजाति इत्यग्रे तदनुसारेण श्लोकांकाः परावर्तनीयाः । सर्वेपि मूलश्लोकाः २२८ ॥ योगविन्दुप्रकरणस्य च श्लोकाः ५२७ ॥

योगदृष्टिसमुच्चयः सटीकः पत्र १ थी ३३ ॥

योगबिन्दुः सटीकः पत्र १ थी ८७ ॥

शुभं भूयाच्छ्रीश्रमणसङ्घस्य ॥

## ॥ श्रीजैनग्रन्थप्रकाशकसभा तरफथी छपायेल तथा छपाता पुस्तको ॥

# श्रीयुक्तिप्रबोधः (वाणारसीयदिगंबरमतखण्डनमयः)

श्रीमन्मेघविजयोपाध्यायविरचितस्वोपज्ञया दिगंबरीयपरःशतैः शास्त्रपाठैर्युतया वृत्या परिवृतः

प्रकाशिका—अमदावाद जैनविद्याशालया जलालपुरवास्तव्यश्रेष्ठि जीवनजी गोविंदजी इत्यनेन च वितीर्णत्रिशती

त्रिशती साहाय्येन—श्री ऋषभदेवजी केशरीमलजीत्यभिधा श्वेतांबर संस्था रतलाम.

मुद्रयिता—जैनबन्धु मुद्रणालयाधिपः श्री जुहारमल मिश्रीलाल पालरेचा, इन्दौर.

वीर सं. २४५४ विक्रम सं. १९८४ क्राइष्ट सन १९२८ पण्यं ०—१२—०

# विषयानुक्रमः



—※—

## उपक्रमो युक्तिप्रबोधस्य.

ग्रन्थोऽयं ग्रथितः श्रीमद्भिर्मेघविजयोपाध्यायैः,अनुन्मुद्रितोऽपूर्वो विषयश्चास्येति अत्यावश्यकमुन्मुद्रणमस्य,केचित् पंडितंमन्या अवीक्ष्य ग्रन्थांशमप्यस्य उद्भावयामासुः लोके यदुत न्यायविषयोऽसौ ग्रन्थ इति, परं तन्न सत्यलेशेनाङ्कितमिति त एव वीक्ष्येमं ग्रंथं निर्णेष्यन्ति स्वत एव,अभविष्यंश्च चित्ते भवभीरुताजुषः प्रामार्जयिष्यन् स्खलनां स्वकीयां स्वयमेव। कोऽत्र विषय इति चेत् नूतन-दिगम्बराणां निराकरणमेवात्र विषयः, प्राचीना दिगम्बराः श्रीवीरनिर्वाणात् नवोत्तरैः शतैः षड्भिः प्रादुर्भूताः शिवभूते रथवीरपुरे इति निःसंशयमावश्यकनिर्युक्तिविशेषावश्यकोत्तराध्ययनबृहद्वृत्तिस्थानांगवृत्त्याद्यवलोककानां, न च विप्रतिपत्तिर्दिगम्बराणां दिष्टेऽस्मिन् ,यतस्तेऽपि पृथग्भावं दर्शनसारादौ वदन्त्यनेहासि विक्रमहायने षट्त्रिंशदधिके शते, एवं-सप्तत्यधिके शतचतुष्के श्रीवीरविक्रम-मयोरन्तरे मीलिते जातं षडधिकं वर्षशतषट्कं, न चैतादृशे विषये द्वित्राणि वर्षाणि महत्तास्थानं, परमेतावत्तु मनीषिभिर्मननीयं ज्ञायते यदुत यदा श्वेतांबरैर्दिगंबराणां प्रादुर्भावः प्रादुष्कृतः लोके ख्यातिमाप्तश्च सः तदा अनन्यगत्या दिगम्बराणामपि तथोक्तिप्रकटनं जातमावश्यकं, वर्षत्रयाच्चार्वाक् कल्पितो भेदः श्वेताम्बराणां तैः, न च वाच्यं श्वेतांबरैरनुकृतं भविष्यति तादृक्, यतो दिगम्बरशब्द एव स्थितः अम्बरशब्दो व्यनक्त्यनेनमर्थं, कथमन्यथा विहाय निर्ग्रन्थादिशब्दं प्रसिद्धतमं तमेव शब्दमम्बरांकितं ते न्यकार्षुः, श्वेतांबराश्चेन्निर्गता अभविष्यन् दिगंबरेभ्यः स्यात्तेषां शब्दः साम्बर इति, सति चैवं सुस्थितमिदं यन्निर्गताः श्वेताम्बरेभ्यो दिगंबरा इति, किंच-दिगम्बरा वदन्ति यदुत श्वेतांबरा वलभ्यामुद्भूताः हेतुश्च तेषामुद्भवे दुष्काल इति, अत्र चिन्त्यं विपश्चिद्भिरेतद् यत्

दुष्काले वस्त्रस्य कोपीनमात्रस्यापि परित्यागः सतः स्यात् किं वाऽसतः स्त्रीकारः ?, अन्यच्च न हि श्वेतांबरीयागमेषु सौराष्ट्रदेश-भाषायाः छायाऽपि येन तच्छास्त्राणां तत्रोद्भवो निगद्यमानश्चारुतामंचेत् ,न च वैक्रमीयेषु तेष्वब्देषु सौराष्ट्रेऽभूद् दुष्कालसाध्वसमिति प्रसिद्धं, श्वेतांबराः यच्च कथयन्ति यदुत रथवीरे रत्नकंबलच्छेदद्वेषजन्यो दिगंबरमतस्योद्भव इति, लक्ष्यते च लक्ष्यैकमतिभिर्यथार्थतया तद्, यतो दिगंबराणां श्वेतांबरैः सह मुख्यतयोपकरणविषय एव विवादः, स्त्रीणां चारित्राभावः केवलित्वाभावः केवलिनां च कवलाहाराभाव इत्येते सर्वे तन्मूलका एव, यदा उपकरणमात्रस्याधिकरणत्वेनाभ्युपगमस्तदाऽनिरावरणतया स्त्रियां चारित्रसत्ताया अनङ्गीकारः, तदनंगीकारे च कैवल्याभावः स्पष्ट एवाभ्युपगतस्तैः, केवलिनामपि कवलाहाराभावः पात्रादेरुपकरणस्याभावादेव, एवं च बाह्यत्यागमूलकत्वमभ्युपगम्य धर्मस्योत्थापिता अन्यलिंगिगृहिलिंगिनां तैः सिद्धिरपि, एवं चापतितो माधुकरीवृत्तेर्लोपः, तल्लोपोऽपि अभ्युपेतो धर्मतया,एवं चानेकशो विसंवादे आपतिते सूत्रवचनानां समुद्घुष्टं तैः व्युच्छिन्नानि सूत्राण्यार्हतानीति,कालक्रमेण च न मतं शास्त्रवर्जितमिति मत्वा श्वेतांबरीय एव तत्त्वार्थः शास्त्रतया स्वीचक्र इत्येतद्वस्तु मतद्वयमवगत्य छेकैः सुखेन निर्णीयते, तथा पूजाविधावपि जिनेशानां जातस्तदनुकूल एव पृथग्भावः, कथमन्यथा सचक्षुष्काणां प्रतिबिंबं निश्चक्षुष्कं जन्माभिषेकादीनामंगीकारेऽपि वस्त्राभरणादीनामनंगीकारः, अत एव श्रीमद्भिः शान्तिसूरिवादिदेवसूर्यादिभिरुत्तराध्ययनवृत्तिस्याद्वादरत्नाकरादिषु टीकाग्रन्थेषु श्रीमद्भिर्जिनभद्रक्षमाश्रमणैर्विशेषावश्यकादिषु दिगंबरवादे उपकरणवाद एव प्राचुर्येण चर्चितः ॥ सति चैवं स्यादेवारेका यदुत निराकृताश्चेद् दिगम्बराः पूर्वसूरिभिस्तर्हि प्रकृतप्रकरणकारैः किमिति तेषां निराकरणाय प्रस्तुतोऽयमारम्भ एतत्प्रकरण-

करणेनेति, परं न सौचितिमञ्चति,यतो निराकृताःप्राचीनास्ते, परं नूत्नानां निराकरणं नाकारि तैः, अतस्तदर्थोऽयमारम्भः श्रीमतां ग्रन्थकाराणां, ननु के नूतनाः का च तेषां विप्रतिपत्तिः क्व च ते जाता इति चेत् शृणु, नूतना दिगम्बरा वाणारसीया ये त्रयोदशमार्गितयाऽऽविष्कुर्वन्ति स्वान् प्रति विंशतिपथिकाह्वान् स्वयूथ्यप्राचीनान् ,वाराणस्यां च तन्मतस्य प्रादुर्भावात् मतमसौ वाणारसीयामिति,उत्पादकश्चास्य वनारसीदासो मूलत इति वा वाणारसीयमतमिदं प्रथितं, वणारसीदासश्चोग्रसेन (आगरा) पुराभिजन्मा खरतरगच्छाम्नायवांश्च श्रीमालीज्ञातीयः,मते चास्मिन् प्राच्यदिगंवरकल्पिताभ्योऽन्याःकल्पनास्ताः सर्वा निरस्ता अत्र, तदीयाध्यात्मवादस्य तु निराकृतिर्न्यायाचार्यैः स्वोपज्ञाध्यात्मपरीक्षायां परःशताभिर्युक्तिभिः कृतेति तास्तत एवावधार्या इति. अत्र तु प्राचुर्येण व्यवहारस्य स्थापनं जिनप्रतिमानां परिधापनिकाया आरोपणं चतुरशीतेश्च जल्पानां सह नूतनजल्पैः निराकरणं, केवलिनां भुक्तिः स्त्रीणां च मुक्तिर्यद्यपि साधिता अत्र तथापि न नूतना, प्रत्नैः सूरिभिस्तस्या आततत्वात्, परमत्र चर्चाऽस्याः कृता दिगम्बरीयैरेव गोमट्टसारादिभिर्ग्रन्थैरिति न चर्वितचर्वणं,कर्त्तारश्चास्य ग्रन्थस्य श्रीमन्तो मेघविजयोपाध्यायाः, तेषामाम्नायादि प्रशस्तित एव स्पष्टं ज्ञायते, यत आहुस्तत्रोपाध्यायपादाः स्वकीयमाम्नायं ।

ग्रन्थस्यास्योपयुक्ततरतां ज्ञास्यन्ति ज्ञातारो विषयानुक्रमं ग्रन्थसाक्षिवृन्दं च वीक्ष्येति द्वयमप्युद्द्रियतेऽधोऽत्र, तत्रादौ विषयानुक्रमो यथायथमवलोक्यो यतस्तस्यावेक्षणादवगमिष्यन्ति बुधा यदुत विषये कस्मिन् के ग्रन्थाः पोषकाः ?, तदर्थमेव च नात्राकारादिक्रमो व्यधायि ग्रन्थानामिति ।

## साक्षिग्रन्थानामनुक्रमस्त्वेवं—

१३० दर्शनप्राभृतं
१३० रत्नाकरावतारिका
१३१ गोमट्टसारः
१३२ पंचास्तिकायवृत्तिः
१३३ भावप्राभृतं
१३३ महापुराणं
१३३ षट्प्राभृतं
१३३ आदिपुराणं
१३५-१३४ गोमट्टसारवृत्तिः
१३६ क्रियाकलापवृत्तिः
१३६ भावनासंग्रहः
१३७ गोमट्टसारः
१३७ जीवसमासः
१३७ भावनासंग्रहः

१३७ आदिपुराणं
१३८ महापुराणं
१३८ क्रियाकलापः
१३८ द्वाषष्टिस्थानकं
१३९ गोमट्टसारः
१३९ निर्वाणसूत्रं
१४० समयसारवृत्तिः
१४० प्रवचनसारवृत्तिः
१४१ आदिपुराणं
१४१ प्राभृतवृत्तिः
१४१ भक्तामरस्तवः
१४१ महापुराणं
१४१ भावनाप्राभृतवृत्तिः
१४२ बोधप्राभृतवृत्तिः

१४२ आदिपुराणं
१४२ एकीभावस्तोत्रं
१४२ समयसारवृत्तिः
१४३ तत्त्वसारः
१४३ प्राभृतवृत्तिः
१४४ प्रवनचसारवृत्तिः
१४५ भावप्राभृतवृत्तिः
१४५ विमानपंक्त्युपाख्यानं
१४५ आदिपुराणं
१४६ भावप्राभृतवृत्तिः
१४६ आदिपुराणं १४७
१४८ प्रज्ञापना
१४९ आदिपुराणं
१४९ भावसंग्रहः

१४९ आवश्यकोनिर्युक्तिः
१५० सूत्रकृतवृत्तिः
१५१ गोमट्टसारः
१५१ द्रव्यसंग्रहवृत्तिः
१५२ स्थानांगं
१५२ प्रवचनसारोद्धारः
१५२ प्रज्ञापनावृत्तिः
१५३ तत्त्वार्थः
१५३ भावनासंग्रहः
१५४ द्रव्यसंग्रहवृत्तिः
१५४ क्रियाकलापवृत्तिः
१५४ समयसारवृत्तिः
१५४ प्रवचनसारवृत्तिः
१५५ महापुराणं

१५६ आदिपुराणं
१५६ दर्शनप्राभृतं
१५६ बोधप्राभृतं
१५८ आदिपुराणं
१५९ गोमट्टसारवृत्तिः
१५९ भावनासंग्रहः
१६० आवश्यकवृत्तिः
१६० आदिपुराणं
१६० द्रव्यसंग्रहवृत्तिः
१६० घत्ताबंधहरिवंशः
१६१ ओघनिर्युक्तिः
१६१ भावनासंग्रहः
१६१ हरिवंशः
१६२ स्वयंभूस्तवः

१६३ भावप्राभृतं
१६४ उपदेशमाला
१६४ द्रव्यसंग्रहवृत्तिः
१६४ समयभूषणं
१६४ पंचवस्तुकवृत्तिः
१६५ भावप्राभृतवृत्तिः
१६५ संबोधसप्ततिः
१६५ द्रव्यकिरणावली
१६५ द्रव्यसंग्रहवृत्तिः
१६६ समयसारवृत्तिः
१६७ श्रावकाचारः
१६७ समयसारवृत्तिः
१६८ समयसारवृत्तिः
१६८ मोक्षप्राभृतं

१६८ दर्शनप्राभृतं
१६९ भावप्राभृतं
१६९ श्रावकाचारसूत्रवृत्तिः
१७० ज्ञाताधर्मकथांगं
१७३ घत्ताबंधहरिवंशः
१७४ महापुराणं
१७४ समयसारवृत्तिः
१७४ तत्त्वार्थसूत्रं
१७५ आदिपुराणं १७७
१७५ धर्मशर्माभ्युदयः
१७७ भावप्राभृतवृत्तिः
१७८ आदिपुराणं
१७८ भगवती
१७८ समवायांगं

१७९ ज्ञाताधर्मकथावृत्तिः
१७९ आवश्यकनिर्युक्तिः
१८० प्राभृतवृत्तिः
१८१ भावप्राभृतं
१८१ समयसारः
१९१ वाग्भट्टालंकारः
१८२ स्थानांगं
१८२ भावप्राभृतं
१८३ आदिपुराणं
१८४ हरिवंशः
१८४ गोमट्टसारवृत्तिः
१८५ गोमट्टसारवृत्तिः
१८५ महाकर्मप्रकृतिः

| | | | |
|---|---|---|---|
| २०७ स्थानांगं | २०७ ओघनिर्युक्तिः | २१० आदिपुराणं २१२ | २१३ आदिपुराणं |
| २०७ आवश्यकवृत्तिः | २०८ प्रवचनसारनाटकं | २१३ द्रव्यसंग्रहवृत्तिः | २१४ श्रावकातिचारः |
| २०७ चारित्रसारः | २०८ आदिपुराणं | २१३ स्थानांगवृत्तिः | २१४ श्रावकाचारः |

प्रसंगतो ग्रन्थकृदाद्याचार्याभिधानसमुच्चयोऽत्रैवं २—

| | | | |
|---|---|---|---|
| २ श्रीशांतिसूरिः | ११ कूरगडुकः | १७ हेमचंद्रः | ३५ कुंयरपालः |
| २ वादिदेवसूरिः | १२ अमृतचन्द्रः | १८ अमृतचन्द्रः | ३० रूपचन्द्रः |
| ३ हेमाचार्यः | १२ कुन्दकुन्दः | १९ मरुदेवी | ३८ अमृतचन्द्रः |
| ९ अमृतचंद्रः | १३ रूपचन्द्रः | २२ नेमिचन्द्रः | ४१ कुन्दकुन्दः |
| ११ आर्द्रकुमारः | १३ चतुर्भुजः | २८ समंतभद्रः | ४८ आशाधरः |
| ११ नंदिषेणः | १३ भगवतीदासः | २८ गुणभद्रः | ४९ वसंतकीर्तिः |
| ११ बाहुबलिः | १३ कुमारपालः | ३० अमृतचन्द्रः ३१ | ४९ श्रुतसागरः |
| ११ कंडरीकः | १३ धर्मदासः | ३१ समाधितंत्रं | ४९ भावसंग्रहकारः ५० |
| ११ मरुदेवी | १५ कुन्दकुन्दः | ३१ ज्ञानार्णवः | ५१ अश्वसेनः |
| ११ भरतः | १५ अमृतचन्द्रः | ३१ मूलाचारः | ५१ प्राभृतकारः |

५८ अमृतचन्द्रः
५९ गृध्धपिच्छः
६१ मानतुंगसूरिः
६२ श्रुतसागरः ६६-६७-७०
६२ अमृतचन्द्रः ६३
६४ जिनदासः
६८ सिध्धसेनदिवाकरः
७१ आशाधरः
७२ जिनसेनः
७२ उमास्वातिः
८२ हेमसूरिः
८३ अमृतचन्द्रः
८७ कुन्दकुन्दः ८५
९३ शुभचन्द्रः

९४ अभयचन्द्रः
१०६ जिनदासः
१०७ हेमाचार्याः
१०८ कुन्दकुन्दः
१०९ वामदेवः
१२२ सकलभूषणः
१२४ जिनसेनः १२६
१२७ जगन्नाथः
१२९ समंतभद्रः
१३३ जिनसेनः
१३७ उमास्वातिः
१३८ शुभचन्द्रः
१४४ अमृतचन्द्रः
१४७ जिनसेनः

१४५ वीरनंदी
१५० शीलांकाचार्याः
१५३ उमास्वातिः
१५६ मानतुंगः
१५८ शीलांकाचार्याः
१५९ समंतभद्रः
१६६ ब्रह्मदेवः
१६७ आशाधरः
१६८ ब्रह्मदेवः
१६८ शिवकुमारः
१६९ आशाधरः
१७२ हेमराजः
१७३ जिनसेन
१८४ यतिवृषभः

१८४ भूतबली
१८५ हेमराजः
१८९ अमृतचन्द्रः
१९० शांतिसूरयः
१९१ अभयदेवसूरयः
१९४ देवेन्द्रसूरयः
१९८ रत्नशेखरसूरयः
२०२ समंतभद्रः
२०२ आशाधरः
२०६ आशाधरः
२२२ सकलकीर्तिः
२२२ आशाधरः

—*—

ग्रन्थश्चायं श्रीमद्भिः कल्याणविजयसाधोर्बोधाय कृत इति स्पष्टमेव प्रशस्तौ पद्ये पंचमे, ग्रन्थकृतश्च प्रागवस्थायां लुम्पकगणेशाः, अनेकसाधुपरिवृताश्चादाय ते श्रीहीरसूरेः पार्श्वे दीक्षां तपोगच्छं शरणीचक्रुः, परंपरा चैषामेवं—

श्रीहीरसूरयः
कनकविजयाः
शीलविजयाः
कमलविजयाः
सिद्धिविजयाः
कृपाविजयाः
श्रीमेघविजयाः

तदेवं ग्रन्थसारत्वमस्याभिसमीक्ष्य विद्वांसोऽवश्यं यथासंभवमस्य पठनपाठनादि करिष्यन्ति, ततश्च भविष्यति मिथ्यात्वस्य क्षयो निर्मूलमिति विचार्य विरम्यतेऽस्मात्, आशासते च सर्वेषां परमात्मपथपरायणतां निःश्रेयसैकनिश्रेणिं भव्यानामिति

१९८४ आषाढ कृष्ण १
राजनगर

निवेदका
आनन्दसागराः

॥ श्रीशंखेश्वरपार्श्वजिनचरणसरोजेभ्यो नमः ॥

श्रीमन्मेघविजयोपाध्यायविरचितं स्वकृतवृत्त्यलङ्कृतं

# युक्तिप्रबोधनाटकं ( वाणारसीयमतभेदकं )

मंगलाचरणं

स्फुरच्चिदानन्दमयात्मने स्तात्, नमः समस्तान्तरशत्रुजेत्रे । श्रीपार्श्वदेवाय सदैव देवनृदेवपूज्याय विशुद्धवाचे ॥ १ ॥ सिद्धार्थभूपतनुजो जिनसार्वभौम, एकातपत्रभुवनत्रितयाधिपत्यः । यं शुक्लशासनबलं समवेक्ष्य संघराज्ये न्यवीविशदलं जनता नतांघ्रि ॥ २ ॥ स्याद्वादरूपमसरूपमिलाविलासि च्छत्रं विचित्रनयचित्रितमादधानः । दिग्वाससः प्रकटचारुनटप्रवृत्तेः, पक्षं द्विधा विजयते जयतेजसा यः ॥३॥ यच्छासने विशदकेवलबोधभाजां, व्याहारयुक्तिकलया चरणं प्रपन्ना । सम्यग्नयेषु निपुणा जनताऽतिशुक्लध्यानावधानविधिनाऽम्बरशौक्ल्यहेतुः ॥ ४ ॥ उपकरणपटूनामव्ययस्थानराज्यं, दिशति चरणकर्म्मण्याशु कौशल्यभाजाम् । निदिशति निजवाचां यश्च वैमत्यवृत्तेरवसनरुचिलोकस्यापि दौर्गत्यमेव ॥ ५ ॥ नग्नाटलुंटाकगणस्य पक्षं, निर्जित्य निस्त्रिंशसुशास्त्रशस्त्रैः । वामेक्षणां यो नयति क्षणेन, मोक्षं समक्षं विबुधव्रजस्य ॥ ६ ॥ सर्वत्र संप्राप्तजयोत्थकीर्त्ति, श्वेतीचकाराम्बरमेव यस्मात् । श्वेताम्बरेति प्रथितं ततो यः, प्रापापरं नाम जनेऽभिरामम् ॥ ७ ॥ एनोऽपहारिगुणवज्जनसेव्यमानः, सार्वोपदिष्टविशदोपधिशालवत्याम् । योगीन्द्रकाव्रनिरपायनराजधान्यां, यः सन्ततं समधितिष्ठति सप्रतापः ॥८॥ जेजीयतां स भुवने जिनधर्म्मभूपः, शास्त्रार्थ-

शस्त्रबलखण्डितदुर्मतारिः । भास्वन्नयप्रचयकौशलभृत्सदङ्गशुद्धप्रवृत्तिसमयप्रवरप्रधानः ॥ ९ ॥ अष्टभिः कुलकम् ॥ स्मृत्वा श्रीस्वगुरोर्वाचं, स्वोपज्ञं विवृणोम्यहम् । वाणारसीयमतभिद्, युक्तिबोधननाटकम् ॥१०॥ सदनुभवविनेतुर्मोहनाम्नोऽनुभावाज्जिन-वचनसुधाया नावकाशो हृदि स्यात् । कतिपयनयवाक्यैः प्राग् विशुद्धीकृतेऽस्मिन्, भवतु तदवकाशो व्याख्यया ऽस्योत्तमानाम् ॥ ११ ॥

इह हि भक्तियुक्तिसंसक्तगीर्वाणमालानमन्मौलिमौलिस्थमालागलद्धहलस्नातपादारविन्दश्रीमज्ज्ञातनन्दनभगवत्प्रणीतापारसं-सारपारावारान्तर्निमज्जज्जन्तुजातासमानयानपात्रायितहितोपदेशप्रादुष्करणे समूलोन्मूलितमहामोहसद्भावभावितदुर्वादिवादिप्रवाद-स्याद्वादमुद्राविमुद्रीकरणे निश्चयव्यवहारोत्सर्गापवादद्रव्यपर्यायार्थिकादिसमर्थानेकप्रत्येकनयचक्रविध्वस्तसमस्तविरोधसंचरणे भगवति जगद्विश्रुते श्रुते जागरूकेऽपि सम्यक्त्वप्रतिबन्धकोदयावरूद्धहृदया स्त्रीमोक्षाद्यसाधकांगविक्षेपपूर्वकं दिगम्बरवरा अपूर्वनटनमिव स्वम-तप्रकटनं विदधुः, ततश्च तत्प्रेक्षकप्रेक्षाचक्षुषो व्यामोहकारणमासाद्यानवद्यविद्याविनोदाधरीकृतबृहस्पतयः स्ववचःप्रपंचरंजितानेकभू-पतयः श्रीशान्तिसूरिश्रीवादिदेवसूरिप्रभृतयस्तपोधनपतयस्तद्वितर्कविघटनकरणानि तदुत्पत्तिसूचनपुरःसरं जिनोक्तियुक्तियुक्तानि भूरिप्रकरणानि विदधिरे इति न तत्र सूर्योद्योते दीपप्रकाशप्रायः पुनः प्रयासः साधीयान्, तथाऽप्यधुना द्वधापि उग्रसेनपुरे वाणा-रसीदासश्राद्धमतानुसारेण प्रवर्त्तमानैराध्यात्मिका वयमिति वदद्भिर्वाणारसीयापरनामभिर्मतान्तरीयैर्विकल्पकल्पनाजालेन विधी-यमानं कतिपयभव्यजनव्यामोहनं वीक्ष्य तथा भविष्यत्श्रमणसंघसन्तानिनां एतेऽपि पुरातना जिनागमानुगता एव, सम्यक् चैषां मतं, न चेत् कथं "छव्वाससएहिं नवोत्तरेहिं सिद्धिं गयस्स वीरस्स। तो बोडियाण दिट्ठी रहवीरपुरे समुप्पणा ॥१॥" इत्युत्तराध्य-यननिर्युक्तौ श्रीआवश्यकनिर्युक्तौ च इत्यादिवत् कुत्रापि श्रीश्रमणसंघधुरीणैरेतन्मतोत्पत्तिक्षेत्रकालप्ररूपणाभेदादि च नाभि-

हितम् इत्येवंलक्षणां भ्रान्ति समुद्भाविनीं विज्ञाय तन्निरासार्थमेतन्मतोत्पत्त्याद्यभिधेयमेव, न च दिगम्बरमतानुसारित्वात् अस्य तन्मताक्षेपसमाधानाभ्यामस्याप्याक्षेपसमाधाने इति किमेतदुत्पत्त्याद्यभिधानेनेति वाच्यं, कथंचिद्भेदेऽपि उत्पत्तिकालप्ररूपणादिकृतभेदात्, ततश्चैतन्मतोत्पत्त्याद्यभिधित्सुर्ग्रन्थकर्ता शिष्टाचारप्रतिपत्त्यर्थमभीष्टार्थनिर्विघ्नपरिपूर्त्तये च वर्त्तमानतीर्थाधिपतित्वेनासन्नोपकारिश्रीवीरनमस्काररूपमंगलाचरणयुक्तामाद्यगाथामाह—

पणमिय वीरजिणिंदं दुम्मयमयमयाविमद्दणमयंदं । वुच्छं सुयणहियत्थं वाणारसियस्स मयभेयं ॥ १ ॥

प्रणम्य वीरजिनेन्द्रं दुर्मतमृगमदाविमर्दनमृगेन्द्रम् ।
वक्ष्ये सुजनहितार्थं वाणारसीयस्य मतभेदम् ॥ १ ॥

'वीरजिणिंद' मिति विशेषेण ईरयति- प्रेरयति कर्म्मशत्रूनिति वीरः, रागादिजेतृत्वाद् जिनाः--सामान्यकेवलिनः तेषु इन्द्र इव तीर्थकरनामकर्मानुभावात् प्राप्तपरमैश्वर्यत्वाद् जिनेन्द्रः, वीरश्चासौ जिनेन्द्रश्चेति कर्म्मधारयः, वर्त्तमानतीर्थस्वामी सान्वर्थनामा श्रीमहावीरः अपश्चिमो जिनेन्द्रः तं 'प्रणम्य' प्रकर्षेण नत्वा, भक्तिश्रद्धातिशयलक्षणः प्रकर्षस्तेन, मनोवाक्कायप्रह्वीभावेन त्रिधा नमस्कृत्येत्यर्थः, किंलक्षणं जिनेन्द्रम् ?-'दुम्मये' ति, दुः-दुष्टं 'मतं' अङ्गीकृतः पक्षो येषां ते दुर्मताः-दुर्वादिनः, ते च द्विधा-लौकिका लोकोत्तराश्च, तत्र लौकिकाः कणभक्षाक्षपादकपिलाद्याः, लोकोत्तराः स्वयूथ्या एव, आगमानादिष्टभाषिणः, त एव मृगास्तेषां 'मदो' दर्पो वयमेव तत्त्वज्ञानभाजोऽस्मदन्ये सर्वेऽपि मिथ्याज्ञानिन इतिलक्षणः स्मयः तस्य 'विमर्दनं' विनाशनं तत्र 'मृगेन्द्रः' सिंहस्तं, भगवद्वाक्यश्रवणेनैव दुर्वादिदर्पस्य नाशात्, यदुक्तं कलिकालसर्वज्ञैः श्रीहेमाचार्यपादैर्द्वात्रिंशिकायाम्-

अनन्तधर्म्मात्मकमेव तत्त्वमतोऽन्यथा सत्त्वमसूपपादम् । इति प्रमाणान्यपि ते कुवादिकुरङ्गसंत्रासनसिंहनादाः ॥ १ ॥" अत्र च दुर्मतवतां संसारवनगहनवसनव्यसनात् मृगोपमा, 'बाणा०' इति बाणारसीयः दस्य 'मतस्य' अभिप्रायस्य भेदः प्रकारस्तं, 'सुअण' इति सुजनाः-सम्यग्दृष्टयः, तेषामेव तत्त्वतः शोभनत्वात्, उपलक्षणात् प्रकृतिभद्रका मिथ्यादृशश्च, तेषामपि शास्त्रोपदेशार्हत्वात्, अत एव तत्कृतजिनवचनानुसारिसाधुशीतातपत्राणादिधर्म्मकृत्यस्यानुमोदना सिद्धान्तेऽपि सिद्धा, तेषां सुजनानां हितं-सुखहेतुः प्रवृत्तिस्तदर्थं-तत्कृते इत्यर्थः, हितं च द्वेधा ऐहिकमामुष्मिकं च, अत्र चामुष्मिकमेव ग्राह्यं, तत्त्वतोऽस्यैव हितत्वात्, सुजना हि एतन्मतोत्पत्तिक्षेत्रकालप्ररूपणाद्येतच्छास्त्रद्वारा संवीक्ष्य एतेषां मतविकल्पाः प्रमाणेन बाध्यन्ते एकं नयमाश्रित्य तदितरनयबाधकाश्चैते न स्याद्वादसादराः मोक्षमार्गाद् भ्रान्ता एतत्संगतिर्न मोक्षसाधनमित्यवधार्य सम्यग्दर्शनं नोद्वमन्ति, शुद्धसम्यक्त्वं च प्रपाल्य स्वतो मोक्षभाजो भविष्यन्तीति हितं, इदमेव चैतच्छास्त्रस्य प्रयोजनं, पारंपर्येण मोक्षांगत्वात्, अन्यथा हि एतेषामेकनयात्मकवाक्यश्रवणादागमोक्तस्त्रीमोक्षादिविप्रतिपत्तेः सम्यक्त्ववमनं सुजनानां स्यात्, यदागमः-"दंसणभट्ठो भट्ठो दंसणभट्ठस्स नत्थि निव्वाणं । सिज्झंति चरणभट्ठा दंसणभट्ठा न सिज्झंति ॥ १ ॥" गाथेयं श्वेताम्बराणां श्रीभगवतीवृत्तौ, दिगम्बराणां पाहुडपट्कग्रन्थे, तथा-"जे जिणवयणुत्तिण्णं वयणं भासंति जे उ मण्णंति । सम्मदिट्ठीणं तद्दंसणंपि संसारवुड्ढिकरं ॥ १ ॥" इति आवश्यकभाष्ये, तथा-"उम्मग्गदेसणाए चरणं नासिंति जिणवरिंदाणं । वावण्णदंसणा खलु न हु लब्भा तारिसा दट्ठुं ॥ १ ॥" इति वन्दनकानिर्युक्तौ, किंच-आगमे जिनोक्तपदमात्रापलापिनोऽपि प्रथमं गुणस्थानमुक्तं, यतः-"पयमक्खरंपि इक्कं जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोयंतोविहु मिच्छदिट्ठी जमालिव्व ॥ १ ॥" इति कर्म्मग्रन्थवृत्तौ, ततश्च एतेषां बाणार-

सीयानां तु श्वेताम्बरमतापेक्षया सर्वसिद्धान्तप्रतिपादितस्त्रीमोक्षकेवलिकवलाहारादिकमश्रद्दधतां दिगम्बरनयापेक्षयाऽपि पुराणाद्युक्त-पिच्छिकाकमण्डलुप्रमुखाणामनङ्गीकरणेन कथं सम्यक्त्वं श्रद्धेयं ?, यद्ब्रह्मचारिपिच्छिकाकमण्डलुप्रभृतिपरिभाषकत्वेन आर्षवाक्यं विना पौरुषेयवाक्यस्यैव केवलं प्रमाणकारकत्वेन सर्वविसंवादिनिह्नवरूपत्वेन च दिगम्बरनयस्यापि अस्मत्प्राचीनाचार्यैः प्रथमगुण-स्थानित्वं निरणायि, तर्हि तदनुगतश्रद्धावतां वाणारसीयानां तत्त्वे किं वक्तव्यमिति, "शठमठहठबुद्धिर्मोहमालिन्यजन्या, पदमपि यदि चित्ते संनिधत्ते कथंचिद् । भगवदभिहितार्थान्मोक्षसार्थाद्वियोज्यानुभवविभवभाजं पातयेत् श्वभ्रकूपे ॥१॥" मिथ्यादृशां तु दर्शनमुपदेशश्रवणालापसंलापादिकं च संसारवृद्धिहेतुरेवेति सर्वत्र सिद्धम् ॥ अत्र च 'सुजना' इत्यनेन अधिकारिणः सूचिताः,तेषामे-वैतच्छास्त्रेऽत्यादृतत्वात्, यद्यप्यत्र कस्यचिदरोचकिता स्यात्तथापि परार्थोद्यतस्य वक्तुर्धर्म्म एव, यदागमः-"रूसओ वा परो मा वा, विसं वा परियट्टओ । भासियव्वा हिआ भासा, सपक्खगुणकारिया ॥ १ ॥" वाचका अप्याहुः-"न भवति धर्म्मः श्रोतुः सर्वस्यैका-न्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥१॥ 'वाणारसियस्स मयभेय' मित्यनेन अभिधेयं चोक्तं, भेदशब्दः प्रकारार्थे, मतप्रकारं वक्ष्ये तस्याभिप्रायप्ररूपणामित्यर्थः, यद्वा तस्य मतस्य भेदं प्रतिविधानं उत्तरपक्षं चेति, प्रयोजनं च द्वेधा-कर्त्तुः श्रोतुश्च, तत्र श्रोतुः प्रयोजनं प्रागुक्तं कर्त्तुः प्रयोजनं सम्यक्त्वस्थिरीकरणं पारंपर्येण मोक्षश्च, न चात्र रागद्वेषकालुष्यं चिन्त्यं, परपरिहानं विना धर्म्मस्यैव स्वरूपाप्रतिष्ठानात्, धर्म्मोपदेशस्य मोक्षसाधनत्वात्, शास्त्राभिधेययोः सम्बन्धस्त्वर्थाद्गम्य इति गाथार्थः ॥ १ ॥ अथ द्रव्यक्षेत्रकालभावैर्मतहेतूनाह—

सिरिआगराइनयरे सड्ढो खरयरगणस्स संजाओ । सिरिमालिकुले वणिओ वाणारसिदासनामेणं ॥ २ ॥

श्रीआगरादिनगरे श्राद्धः खरतरगणस्य सञ्जातः । श्रीमालिकुले वणिक् बाणारसीदासनाम्ना ॥ २ ॥

'वाणारसीदास' इति नाम्ना वणिक् सञ्जातः इत्यन्वयः, ह्रस्वत्वं प्राकृतत्वात्, श्रयते धर्माढ्यं पुरुषं इति श्रीः तां अलन्तेधरन्तीत्येवंशीलाः श्रीमालिनः तेषां कुलं २ तस्मिन् 'वणिगिति' विप्राशंकाव्यवच्छेदार्थं, श्रीआगराख्ये आदिनगरे-पुराणपुरे श्रिया आकरस्वरूपे नगरे वा उग्रसेनाह्वये, उग्रसेनः कंसपिताऽत्र प्रागुवासेति प्रवादात्, 'खरतरगणस्य श्राद्धः' लघुशाखीयखरतरगणस्य श्रावकः, इत्यनेन तत्सम्प्रदायस्य स्वल्पत्वाद्यथाछन्दतया तेन मतं प्रवर्तितमिति ज्ञापितमिति गाथार्थः ॥ २ ॥

नांद्यन्ते सूत्रधारः-सो पुव्वं धम्मरुई कुणइ य पोसहतवोवहाणाई । आवस्सयाइपढणं जाणइ मुणिसावयायारं ॥ ३ ॥

स पूर्वं धर्मरुचिः करोति च पौषधतपउपधानादि । आवश्यकादिपठनं जानाति मुनिश्रावकाचारम् ॥ ३ ॥

'स' बाणारसीदासः पूर्वं धर्मरुचिः सन् करोति पौषधतपउपधानादि आवश्यकादिपठनं च, तेन मुनिश्रावकाचारं जानाति, इति गाथार्थः ॥ ३ ॥

आः नेपथ्ये!-दंसणमोहस्सुदया कालपहावेण साइयारत्तं । मुणिसङ्ढवए मुणिउं जाओ सो संकिओ तम्मि ॥ ४ ॥

दर्शनमोहस्योदयात् कालप्रभावेन सातिचारत्वम् । मुनिश्राद्धव्रते मत्वा जातः स शंकितस्तस्मिन् ॥ ४ ॥

दुष्षमाकालसाम्राज्यात् 'यत्याचारे' महाव्रतादिरूपे 'श्रावकाचारे' पंचाणुव्रतादिरूपे अतीचारबाहुल्यं प्रोद्भूयमानं ज्ञात्वा दृष्ट्वा च 'मोहनीयस्य' मिथ्यात्वमोहनीयस्यार्थात् 'उदयो' विपाकोन्मुखीभवनं तस्मात् स बाणारसीकः 'शंकितः' श्रीभग-

वताहेता व्रतानि कीदृशानि उक्तानि कथं च ते साम्प्रतीना मुनयः श्राद्धा वा अनुतिष्ठन्ति ?, व्रतानां सम्यग्ज्ञानपूर्वकाणां निरतीचाराणामेव मोक्षं प्रति साधनता, ततः किमेभिर्बाह्याडम्बररूपैरशुद्धचेतनापरिणामैः, यदुवाच अमृतचन्द्रः समयसारवृत्तौ - "परमार्थे त्वस्थितो यः करोति तपो व्रतं वा धारयति । तत् सर्वं वालतपो वालव्रतं विदन्ति सर्वज्ञाः ॥१॥" उपदेशमालायामपि "जो जहवायं न कुणइ मिच्छदिट्ठी तओ हु को अन्नो? । वड्ढइ य मिच्छत्तं परस्स संकं जणेमाणो ॥ १ ॥" इत्यादि नयावलम्बनाच्छंकायुक्तो जात इति गाथार्थः ॥ ४ ॥

जाया वयट्ठियस्सवि कयावि तस्सऽन्नपाणपरिभोगे । छुहतिण्हाइसएणं मणसंकप्पाओ वितिगिच्छा ॥ ५ ॥

जाता व्रतस्थितस्यापि कदापि तस्यान्नपानपरिभोगे । क्षुत्तृष्णातिशयेन मनःसङ्कल्पाद्विचिकित्सा ॥ ५ ॥

कदापि काले पोषधोपवासादिव्रते स्थितस्य तस्य उत्कृष्टतया चतुर्विधाहारपरित्यागवतः क्षुत्तृष्णातिभारेण धान्यं जलं वा परिभुंजे इति मनसः संरम्भाद्विचिकित्सा-धर्म्मफले सन्देहः, कायेन व्रते वर्त्तमानोऽप्यहं मनसा धान्यादिषु परिणाममनुभवामि, ततोऽनुभवसिद्धेऽर्थे विरोधासिद्धेर्मनसि अन्यत्र प्रवृत्ते केवलकायेन क्रियमाणस्य धर्म्मस्य फलं न किमपीति संशीतिर्जज्ञे इति गाथार्थः ॥ ५ ॥ अथ प्रविशति रङ्गाचार्यः—

पुट्ठं तेण गुरूणं भयवं ! जंपेह दुव्विकप्पस्स । णिच्छयओ किमवि फलं केवलकिरिआइ अत्थि ण वा ? ॥६॥

पृष्टं तेन गुरूणां भगवन्तो ! जल्पत दुर्विकल्पस्य । निश्चयतः किमपि फलं केवलक्रियाया अस्ति न वा? ॥६॥

तेन वाणारसीकेन पृष्टं-हे भगवन्तो !-ज्ञाननिधयो वदत यूयं, दुष्टाः-पापहेतवो विकल्पा-मनोरथा यस्य तस्य पुंसः निश्चय-

नयापेक्षया किमपि केवलया कायक्रियया फलं-मोक्षाप्तिरूपं अस्ति न वा ?, यतो हि मन एव तावत् सुखदुःखहेतुसम्पादनप्रत्यलं, उक्तश्च—"मन एव मनुष्याणां, कारणं बंधमोक्षयोः । एकेनालिङ्गिता कान्ता, एकेनालिङ्गिता सुता ॥१॥" मनसः स्थैर्ये काययोगेऽपि बन्धस्यानुदयात्, यत उक्तं समयसारवृत्तौ—"ईर्यासमितिपरिणतयतीन्द्रपदव्यापाद्यमानवेगापतत्कालचोदितकुलिङ्गवद् बाह्यवस्तुनो बन्धहेतोरप्यबन्धहेतुत्वेनानैकान्तिकात्" मनसः प्रवृत्तौ काययोगाभावेऽपि बन्धोदयाच्च,तंदुलमत्स्यवत्, एवं च मनस एव बन्धकारणत्वात्, मनश्च न स्वतन्त्रं, कर्म्मणां परिणामसन्निधानेन तथाऽस्य परिणामात्, निष्फलेन किं केवलकायक्लेशप्रवेशेनेति प्रश्नावकाश इति गाथार्थः ॥ ६ ॥

अह तेहिं भणियमेयं णत्थि फलं भद्द ! किमवि विमणस्स । तेणावधारियं तो किं ववहारेण विफलेण ? ॥ ७ ॥

अथ तैर्भणितमेतत् नास्ति फलं भद्र ! किमपि विमनसः । तेनावधारितं तत् किं व्यवहारेण विफलेन ? ॥ ७ ॥

प्रश्नानन्तरं वैगुरुभिरपि भवितव्यताबलादेतत्समीपे वक्ष्यमाणं कथितं, यत्-हे भद्र ! विरुद्धं- मोक्षमार्गाननुकूलं मनो यस्य तस्य किमपि फलं नास्ति, निर्जरारूपं फलमत्रेष्यते, अन्यत् सर्वं तु विरक्तानां फलाभास इति, अत एवोक्तम्-"यदि वहति त्रिदण्डं नग्नमुण्डं जटां वा, यदि वसति गुहायां वृक्षमूले शिलायाम् । यदि पठति पुराणं वेदसिद्धान्ततत्त्वं, यदि हृदयमशुद्धं सर्वमेतन्न किंचित् ॥ १ ॥" ततस्तेनापि निर्णीतं- विफलेन लोकप्रत्यायकेन व्यवहारेण किं स्यात् ?, न किमपीत्यर्थः, यतो हि व्यवहारः श्राद्धस्य द्वादशव्रताचरणादिरूपः मुनीनां पंचमहाव्रतपंचसमितिप्रतिपालनादिरूपः, उभयमपि चैतद्यावता मनो न वश्यं जातं यावता चाध्यात्मभावना जीवः पुद्गलेभ्यो भिन्नः चिद्रूपः परिणामी पुद्गलादिपरिणामानामकर्त्ता अभोक्ता अबन्धो नित्यमुक्त इत्यादि-

विवेकरूपा न भाविता तावताऽनन्तशो जन्तुनाऽवाप्तमपि मोक्षाय न प्रभविष्णु, उक्तं च- "कुणउ तवं पालउ संजमं पढउ सयल-सत्थाइं। जाव न झायइ अप्पा ताव न मुक्खो जिणो भणइ ॥ १ ॥" अन्यतीर्थीयशास्त्रेऽपि "न शब्दशास्त्राभिरतस्य मोक्षो, न बाह्यकाडम्बरबन्धुरस्य। न भोजनाच्छादनविस्मितस्य, न लोकचित्तग्रहणे रतस्य ॥ १ ॥ एकाग्रचित्तस्य दृढव्रतस्य, पंचेन्द्रियप्रीतिनिवर्त्तकस्य। अध्यात्मयोगे गतमानसस्य, मोक्षो ध्रुवं नित्यमहिंसकस्य ॥ २ ॥ युग्ममिदम्' इतिहासे, श्रावकाचारे अमृतचन्द्रोऽप्याह- 'संघो कोऽवि न तारइ कट्ठो मूलो तहेव निप्पिच्छो। अप्पा तारइ अप्पा तम्हा अप्पा हु झादव्वो ॥ १ ॥ उपदेशमालायामपि- "अप्पा चेव दमेयव्वो, अप्पा हु खलु दुद्दमो। अप्पा दंतो सुही होइ, अस्सिं लोए परत्थ य ॥ १ ॥ श्रीआचारांगसूत्रेऽपि प्रथमाध्ययने सप्तमोद्देशके- 'जे अज्झत्थं जाणइ से बहिया जाणइ, जे बहिया जाणइ से अज्झत्थं जाणइ, एतद्वृत्तिदेशो यथा-आत्मानमधिकृत्य वर्त्तते यत्तदध्यात्मं तच्च सुखदुःखादि, तद् यो जानाति-अवबुध्यते स्वरूपतोऽवगच्छति स बहिरपि प्राणिगणं वायुकायादिकं जानाति, योऽध्यात्मवेदी स बहिर्व्यवस्थितवायुकायादिप्राणिगणस्यापि नानाविधोपक्रमजनितं शरीरमनःसमाश्रयं सुखं दुःखं वा वेत्ति इति, अत एव प्रतिषिद्धः सर्वत्र व्यवहारनय आध्यात्मिकशास्त्रेषु, तद्यथा समयसारे यदुक्तम्- "ववहारोऽभूयत्थो भूयत्थो देसिओ उ सुद्धणओ। भूयत्थमासिओ खलु सम्माइट्ठी मुणेयव्वो ॥ १ ॥" तथा सर्वे एत एते अध्यवसानादयो भावजीवा इति यद्भगवद्भिः सकलज्ञैः प्रज्ञप्तं तदभूतार्थस्यापि व्यवहारस्य दर्शनं, व्यवहारो हि व्यवहाराणां म्लेच्छभाषेव म्लेच्छानां परमार्थप्रतिपादकत्वादपरमार्थः, तथा-अध्यवसितेन बन्धः सत्त्वान्मारयतु मा व मारयतु। एष बन्धसमासो जीवानां निश्चयनयस्य ॥ १ ॥ एवमलीकेऽदत्तेऽब्रह्मचर्ये परिग्रहे चैव। क्रियतेऽध्यवसानं यत् तेनैव तु वध्यते पापम् ॥२॥

व्यवहारस्य निष्फलत्वं

॥ ९ ॥

तथापि च (अवधे) सत्ये दत्ते अब्रह्मपरिग्रहत्व (त्वके) चैव । क्रियतेऽध्यवसानं यत् तेनैव(तु)बध्यते पुण्यम् ॥२॥ तथा-"यो मन्यते हिनस्मि च, हिंस्ये च(वाऽहं तथा)परैः सत्त्वैः। स मूढः अज्ञानी ज्ञानी(तु)अतस्तु विपरीतः॥१॥ आयुःक्षयेण मरणं जीवानां जिनवरैः प्रज्ञप्तम् । आयुर्न हरसि त्वं कथं, त्वया मरणं कृतं त्वेषाम् ? ॥२॥ यो मन्यते जीवयामि च जीव्ये च परैः सत्त्वैः । स मूढोऽज्ञानी ज्ञानी अतस्तु विपरीतः ॥ ३ ॥ आयुरुदयेन जीवति जीव एवं भणंति सर्वज्ञाः । आयुश्च न ददासि त्वं कथं त्वया जीवितं कृतं तेषाम् ? ॥ ४ ॥ अज्ञानमेतदधिगम्य परात्परस्य, पश्यन्ति ये मरणजीवितदुःखसौख्यम् । कर्म्माण्यहंकृतिरसेन चिकीर्षवस्ते, मिथ्यादृशो नियतमात्महनो भवन्ति ॥ ५ ॥" इत्यादि, तथा- "सर्वत्राध्यवसानमेवमखिलं त्याज्यं यदुक्तं जिनैस्तन्मन्ये व्यवहार एष निखिलोऽप्यन्याश्रयस्त्याजितः। सम्यक् निश्चयमेकमेव तदमी निष्कम्पमाक्रम्य किं, शुद्धज्ञानघने महिम्नि न निजे बध्नन्ति सन्तो धृतिम् ? ॥१॥ एवं व्यवहारनयः प्रतिषिद्धो जानीहि निश्चयनयेन । निश्चयनयाश्रिताः पुनर्मुनयः प्राप्नुवन्ति निर्वाणम् ॥१॥" इत्यादि सप्तमांके, २ । तथा-कर्म्माशुभं कुशीलं शुभकर्म्म चापि जानीत सुशीलम् । कथं तद्भवति सुशीलं यत् संसारं प्रवेशयति ॥ १ ॥ सौवर्णिकमपि निगलं बध्नाति कालायसमपि यथा पुरुषम् । बध्नात्येवं जीवं शुभमशुभं वा कृतं कर्म्म ॥ २ ॥ तस्मात्तु कुशीलाभ्यां रागं मा कुरुत मा च संसर्गम् । स्वाधीनो हि विनाशः कुशीलसंसर्गिरागेण ॥ ३ ॥ निषिद्धे सर्वस्मिन् सुकृतदुरिते कर्म्मणि किल, प्रवृत्ते नैष्कर्म्ये न खलु मुनयः सन्त्यशरणाः । तदा ज्ञाने ज्ञानं प्रति चरतमेषां हि शरणं, स्वयं विन्दन्त्येते परमममृतं तत्र निरताः ॥ ४ ॥" एतेन व्यवहारस्य वैफल्यं दर्शितं, तद्दर्शनात् सर्वोऽपि दानादिव्यवहारः स्वतो विफलत्वात् त्याज्योऽभवत्, यतो हि दानं तावत् सौवर्णिकनिगडकल्पमवश्यभोगाभिजनकत्वेन संसारप्रवेशकं वस्तुतो हेयमेव, यत उक्तम्- "दाणं

सोहग्गकरं दाणं आरुग्गकारणं परमं । दाणं भोगनियाणं दाणं ठाणं गुणगणाणं ॥ १ ॥ ” अत एव आर्द्रकुमारनन्दिषेणादिवृत्तान्ते अस्ति तव भोगकर्म्मनिकाचना ततो दीक्षातः प्रतीक्षस्वेति देवादिनिषेधः श्रूयते, तथा शीलमपि ब्रह्मव्रतोच्चाररूपं व्यावहारिकं विफलमेव, यतो हि यावता रात्रौ स्वप्नप्रयोगे स्खलितादिदोषो मनसो वैकृत्याज्जायते तावता दूषणं लगत्येव, इतरथा प्रातस्त्यकुस्वप्नदुःस्वप्नोद्देशक्रियमाणकायोत्सर्गवैयर्थ्यमेव स्यात्, यदि आत्मनो मैथुनविरतिप्रतिबन्धककर्म्मप्रकृतयः क्षीणा उपशांता वा भवेयुस्तर्हि स्वप्नेऽपि जीवस्य तथाऽपरिणतेः सङ्कल्पोद्भवं स्खलनादि न भवेत्, अस्ति च तत्प्रवृत्तिः, तथा च ज्ञायते नास्ति जीवस्य मैथुनविरतिः, तर्हि किं बाह्याटोपमात्रेणेति, तपोऽपि व्यावहारिकं षष्ठाष्टमादि आत्मज्ञानबाह्यानां बालतपःप्रायं, न मोक्षफलकं, तथा समयसारवचसा प्रागेव दृढीकृतं, अन्यत्रापि मनःकालुष्यहेतुभूतयो रागद्वेषयोः सद्भावे तद्विफलं स्पष्टमेव निष्टङ्क्यते, यत उपदेशमालायाम्—‘ फरुसवयणेण दिणतवं अहिक्खिवंतो य हणइ मासतवं । वरिसतवं सवमाणो हणइ हणंतो य सामन्नं ॥ १ ॥” अत एव बाहुबलेर्वर्षं यावन्मानवत्त्वेन दीक्षापि न फलवती, एवं कण्डरीकोऽपि दृष्टान्तीकार्यः, रागद्वेषयोरसद्भावे तु सुतरां विफलं, अत एवोक्तम्—“ रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम् ?। तावेव यदि न स्यातां, तपसा किं प्रयोजनम् ?॥ १॥” दृष्टान्ता अप्यत्र मरुदेवीभरतचक्रिकूरगडुकादीनां बहवो दृश्यन्ते, एतेन श्राद्धक्रियाः साधुक्रियाश्चावश्यकादिरूपाः सर्वा विफला एव, परमार्थबाह्यानां व्रतस्यापि बालव्रतत्वेनोक्तत्वात् तन्मूलकत्वात्तासाम्, अत एव श्रीपञ्चमाङ्गेऽपि—“ इमे जीवा इमे अजीवा इमे त्रसा इमे स्थावराश्चेति परिज्ञानशून्यानां दुष्प्रत्याख्यातं भवती’ति सुव्यक्तमुक्तं, समयसारेऽपि—“ प्रतिक्रमणादिरूपा तृतीयभूमिस्तु शुद्धात्मसिद्धिरूपत्वेन सर्वापराधविषदोषाणां सर्वंकषत्वात् साक्षात् स्वयममृतकुम्भो भवति ” व्यवहारेण द्रव्यप्रतिक्रमणा-

देरप्यमृतकुम्भत्वं साधयति, तथैव निरपराधो भवति चेतयिता, तदभावे द्रव्यप्रतिक्रमणादिरपराध एव, अतस्तृतीयभूमिकयैव शुद्धोपयोगरूपया निरपराधत्वमित्युक्तम्, तेनैवामीषां बाह्यक्रियाणां यथोत्तरं गुणस्थानवृद्धौ परित्यागः श्रीमदर्हद्भिरुपदिष्ट इति सिद्धं व्यवहारोऽन्तर्गडुरूप इति, नैश्चयिकं पुनर्दानं परमात्मनः कर्म्मपाशाद्विमोचनस्वभावस्थैर्यालम्बनरूपमभयं जीवस्वभावस्य स्वात्मन्येव प्राभृतीकरणं सुपात्ररूपं शीलं स्वरूपाचरणलक्षणं प्रकृते वैराग्यजननं तप इच्छानिरोधरूपं भावना च आत्मनो द्रव्यार्थतया नित्यत्वं पर्यायचर्चयाऽनित्यत्वं तत्स्वरूपावगमावश्यकेतरद्रव्यमयलोकस्वभावचिन्तनं चेत्यादि, प्रत्याख्यानमपि परद्रव्यस्वरूपपरित्यागरूपं, यदुवाच अमृतचन्द्रः—"सव्वे भावे जम्हा पच्चक्खाई परित्ति नाऊणं । तम्हा पच्चक्खाणं नाणं नियमा मुणेयव्वं ॥ १ ॥" जीवाजीवादिश्रद्धानं सम्यक्त्वं, तेषामधिगमो ज्ञानं, रागादिपरिहारः चारित्रं, यदवदत् कुन्दकुन्दः- "जीवादीसद्दहणं सम्मत्तं तेसिमधिगमो नाणं । रागादीपरिहरणं चरणं एसो दु मुक्खपहो ॥ १ ॥" अयमेव मोक्षमार्गः आत्मा ज्ञानदर्शनचारित्रत्रयात्मकोऽपि निश्चयादेको न ज्ञानं न दर्शनं न चारित्रं, किन्तु ज्ञायकः शुद्धः पुद्गलसंयोगेऽपि स्वभावं उपयोगरूपं न जिहीते, नापि पुद्गलस्तत्संयोगात् स्वरूपमुज्झति, कर्म्मबन्धश्चानयोः संयोगजः, स चापि स्वस्वपरिणामानां निमित्तनैमित्तिकभावेन अनादिः, सान्तश्च कनकोपलयोरिव, नास्त्यात्मनो रूपं रसो गन्धः स्पर्शश्च, एते हि पौद्गलिका गुणाः, स्वयमात्माऽपि कर्त्ता चित्पर्यायाणां, स्वस्वरूपं भुंक्ते अनुभवतीति भोक्ता. स्वागुरुलघुपर्यायान् षड्गुणहानिवृद्ध्या पूरयति गालयति पुद्गलः, सर्वं वेत्ति जानातीति वेदः, ज्ञानात्मना वेवेष्टि व्याप्नोतीति विष्णुः, स्वस्मिन्नेव ज्ञानादिभावेन भवति स्वयम्भूः, सर्वत्रासंख्याताकाशप्रदेशक्षेत्रमानत्वाच्छरीरी असक्तः अमूर्तः चेतनाभ्यन्तरवर्त्तिस्वभावत्वाच्चान्तरात्मा इति गोमट्टसारवृत्तौ, प्रतिशरीरं भिन्नो यावद्देह-

व्यवहारस्य नैष्फलत्वं

परिमाणः परिणामी उपयोगी चेत्यादिश्रद्धानं दर्शनं, इदमेव साकारस्वरूपं ज्ञानमिति स्थितमध्यात्ममयमेव तत्त्वं, ततोऽन्यत् सर्वं मिथ्याज्ञानविजृम्भितं, नात्र व्यवहारसंचारोऽपि, तेन सुष्ठूक्तं समयसारे- "परमट्ठबाहिरा जे ते अन्नाणेण पुन्नमिच्छन्ति। संसारगमणहेउं मोक्खहेउं अयाणंता ॥ १ ॥ मुक्त्वा निश्चयार्थं व्यवहारे न विद्वांसः प्रवर्त्तन्ते। परमार्थमाश्रितानां यतीनां कर्म्मक्षयो विहितः ॥ २ ॥" इति कृतं विस्तरेण, यद्यप्यत्र बहु वक्तव्यं तत्तु समयसारतद्वृत्तिपंचास्तिकायतद्वृत्तिप्रमुखाध्यात्मग्रंथेभ्यः समवसेयम्, अत्र तु उपयोगिमात्रमुक्तं, शेषं ग्रन्थबाहुल्यान्नोक्तम्- "शुद्धज्ञानसहस्रभानुमहसि प्रोद्भावमासेदुषि, नानाऽऽचारकतारका निपतिताः कुत्रापि गर्त्तान्तरे। नष्टे मोहमहान्धकाररजनीकष्टे विमुग्धात्मनस्तेऽनादिव्यवहारिहारिचरिताभ्यासा ययुः क्षामताम् ॥ १ ॥ नो दानं न तपो न शीलललितं येषां विशेषांगिनां, तेऽप्याध्यात्मिकभावनानवसुधापानेन पीनाश्च ते। आनन्दादजरामरत्वपदवीं प्राप्ताः स्वभावादरात्तस्मान्न व्यवहारकारणिकता मोक्षालयस्येक्ष्यते ॥ २ ॥ नैष्कर्म्यहर्म्यवसनव्यसनेन पुंसां, माहात्म्यमभ्युदयतेऽव्ययतेजसाऽऽढ्यं। शुद्धोपयोगवशतः स्वत एव कान्तं, शान्तं रसं जनयति प्रकृतिर्नितान्तम् ॥ ३ ॥" इहानुक्तं स्वधिया उन्नेयमिति गाथार्थः ॥ अथ प्रविशति रसौत्सुक्यात् पात्रैः समं प्रतीहारी—

इत्थंतरे य पुरिसा अवरेऽविय पंच तस्स संमिलिया। तेसिं संसग्गेणं जाया कंखावि नियधम्मे ॥ ८ ॥

अत्रान्तरे पुरुषाः अपरेऽपि पंच तस्य मिलिताः। तेषां संसर्गेण जाता कांक्षाऽपि निजधर्म्मे ॥ ८ ॥

प्रागुक्तयुक्त्या व्यवहारवैफल्यं श्रद्दधानस्य तस्य कदाचित् कालान्तरे अपरेऽपि पंच पुरुषा रूपचन्द्रपण्डितः १ चतुर्भुजः २ भगवतीदासः ३ कुमारपालः ४ धर्मदासश्चेति ५ नामानो मिलिताः, तेषां संसर्गेण-परस्परविचारचिंतनारूपेण एकत्रावस्थानेन वा

'कांक्षा' अन्यमतधर्माभिमुख्यलक्षणा 'निजधर्म्मे' श्वेतांबररूपे, तं त्यक्त्वा वा, जाता इति समासार्थः, व्यासार्थः पुनरेवं-स वाणारसीदासः पूर्वं पौषधसामायिकप्रतिक्रमणादिश्राद्धक्रियासु तथा जिनपूजनप्रभावनासाधर्मिकवात्सल्यसाधुजनवंदनमाननअशनादिदानप्रभृतिश्राद्धव्यवहारेषु सादरोऽभूत्, पश्चाच्छंकया विचिकित्सया च कलुषितात्मा सन् दैवात् पंचानां पूर्वोक्तानां संसर्गवशात् सर्वं व्यवहारं तत्याज, ततः सुदृष्टिभिः पृष्टम्—किमिदानीं हे भद्र ! धर्म्मकर्म्मणि प्रमाद्यसि ?, ततः स शंकादिव्याप्तचेता जगाद—मम व्यहारेण न कार्यं, जीवो हि कर्म्माविष्टश्चातुर्गतिकसंसाराटवीपर्यटनलम्पटः, कर्म्मबन्धश्च मिथ्यात्वाविरतिकषाययोगलक्षणैश्चतुर्भिः हेतुभिः, ततश्च कर्म्मनिर्मूलनेच्छुना तावत्तद्धेतवः पराकरणीयाः, तत्र प्रथमं मिथ्यात्वं त्याज्यं, तच्च सम्यक्त्वावाप्त्या सा चाध्यात्मभावविशेषरूपा काललब्धिसात्, न तु पुरुषपौरुषाधीना, यावता सम्यक्त्वं च नावाप्तं तावत्तपोऽनुष्ठानादिकं सर्वं न मोक्षाय क्षमं, ततः सम्यक्त्वमेव जीवस्य हितं, तच्च द्वेधा-नैश्चयिकं व्यावहारिकं च, आद्यं आत्मस्वरूपोपलम्भरूपं, द्वितीयं तु जीवाजीवादितत्त्वविमर्शरूपं, एवं च सम्यक्त्वार्थिना तत्त्वपरीक्षैव विधेया, नावश्यकादिक्रियाः, तासां चतुर्थगुणस्थानादनु पंचमगुणस्थानलभ्यत्वात्, चतुर्थगुणस्थानं च जीवस्य परमार्थसाधकं, तच्चेत् प्राप्तं तर्हि जातोऽसौ निष्ठितार्थः, तत्प्राप्तिः सम्यक्त्ववत एव, सम्यक्त्वं च प्रशमादिलिंगैरभिव्यज्यते इति, ततोऽहं जीवाजीवादितत्त्वपरीक्षां चिकीर्षुरस्मि, क्रोधादिकं निर्जित्य ज्ञातयथावस्थितजीवस्वरूपोऽध्यात्मभावनाभिर्जीवो निश्चयान्मोक्षमाप्नोति इत्यहमपि सर्वं व्यवहारजालं विहाय तं मार्गमनुसर्त्तुकामोऽस्मि, दृश्यते च प्रागुक्तयुक्त्या व्यवहारोऽपि विफल इति । एवं वाणारसीदासस्ते चान्ये पंच कंचन कालं प्राप्तसम्यक्त्वा वयमिति चिन्तयन्तः क्रोधनिर्जयाय उपशममात्रं बिभ्राणाः आध्यात्मिका वयमिति ख्यापयन्तः संशयेनैव निन्युः,

ऐकमत्येन व्यवहार-लोपः

अन्योऽन्यं चैवं जने प्ररूपयामासुः-अहो लोकाः! किं व्यवहारजालेन निबद्धा भवन्तो मुधाऽऽत्मानं विडंबयत, मोक्षाय केवलमात्मस्वरूपपरिचिंतनरूपं निश्चयसम्यक्त्वमाचरत, सर्वधर्म्मसारमुपशममाश्रयत, एता लोकप्रत्यायिकाः क्रियास्त्यजत, अध्यात्मभावनां भावयत, तद्भावनया दुष्कर्म्माचरणेऽपि नास्ति बन्धः, यदुक्तं **समयसारे** " पूर्वबद्धनिजकर्म्मविभागात्, ज्ञानिनो यदि भवत्युपभोगः। तद्भवत्यथ सरागवियोगान्नूनमेति न परिग्रहभावम् ॥ १ ॥ " **आवश्यकेऽपि**—" सम्मद्दिट्ठी जीवो जइवि हु पावं समायरइ किंचि । अप्पो सि होइ बंधो जेण न निद्धंधसं कुणइ ॥ १ ॥ " एवं च क्रमेण वाणारसीयमतप्रवृत्तौ जातायां स्थाने २ व्यवस्थापनानि वक्ष्माणरीत्या शास्त्रैषिभिः सुदृष्टिभिः क्रियमाणानि विमृश्य तेषां प्रत्युत्तरकरणाय वाणारसीदासोऽपि नानाशास्त्राणि वाचयन् प्रमाणनयनिक्षेपाधिगममार्गाप्राप्त्या अनेकनयसंदर्भान् निरीक्ष्य रूपचन्द्रादिदिगम्बरमतीयवासनया श्वेतांबरमतं परस्परविरुद्धत्वान्न सम्यक् विचारसहं, दिगम्बरमतमेव सम्यक्, इत्यादिकांक्षां प्राप्तवान्, ततः सुदृष्टीनां तेन सह मिथश्चर्चालाप एवं प्रववृते, यदुत-भो ! वाणारसीदास ! किमर्थं त्वमेकनयमालम्ब्य व्यवहारस्य वैफल्यं वदसि, भगवत्श्रीवीरप्रवचने तु व्यवहारनिश्चयलक्षणं नयद्वयमपि तुल्यकक्षतया प्रतिपादितम्, यदुक्तं **समयसारे** कुन्दकुन्दाचार्येण— " जइ जिणमयं पवज्जह ता मा ववहारणिच्छए मुयह । एगेण विणा छिज्जइ तित्थं अण्णेण उण तच्चं ॥१॥" इयमेव गाथा **पंचवस्तुके** श्वेतांबरमतेऽपि— " जइ जिणमयं पवज्जह ता मा ववहारणिच्छए मुयह । ववहारणउच्छेए तित्थुच्छेओ हवइऽवस्सं ॥ १ ॥ " यदि च अभूतार्थत्वात् व्यवहारपरिहारः स्यात् तर्हि जीवाजीवादितत्त्वोपगम एव न स्यात्, तदधिगमोपायानां प्रमाणनयनिक्षेपानामभूतार्थत्वात्,यदाह अमृतचन्द्रः—"अथैवमेकत्वेन द्योतमानस्यात्मनोऽधिगमोपायाः प्रमाणनयनिक्षपा ये ते खलु अभूतार्थाः"

तथा-"दंसणणाणचरित्ताणि सेवियव्वाणि साहुणा निच्चं। ताणि पुण जाणि तिन्निवि अप्पाणं चेव निच्छयदो॥१॥दर्शनज्ञानचारित्रैस्त्रिभिः-परिणतत्वतः। एकोऽपि त्रिस्वभावत्वाद्, व्यवहारेण मेचकः ॥२॥" यत्तु **समयसार**कृता भगवतोऽर्हतो देहवर्णनं तन्न निश्चयादर्हद्वर्णनं, देहात्मनोर्भेदादिति, तदपि पुद्गलादात्मनः पार्थक्यप्रज्ञापनानयालम्बनमेव, न पुनः स्याद्वादसुन्दरं, देहात्मनोः कथंचिदेव भेदात्, भेदाभेदस्यैव प्रामाण्यात्, सर्वथा भेदे ग्रन्थकृता स्वयमेवाग्रे व्याख्यास्यमानः पुद्गलपरिणामानां आत्मपरिणामानां च निमित्तनैमित्तिकभावोऽपि दुर्घटः, यज्ञदत्तकार्मणपरिणामानां देवदत्तात्मपरिणामामानामिव अकारणत्वात्, स्वयमपि ग्रन्थप्राग्भागे अनादिबन्धपर्यायनिरूपणया क्षीरोदकवत् कर्मपुद्गलैः सममेकत्वेऽपि द्रव्यस्वभावनिरूपणया शुभाशुभभावानां स्वभावेनापरिणमनादित्येव स्याद्वादसादरतया व्याख्यातत्वाच्च, योऽप्यत्र नगरदृष्टान्तः सोऽपि न किंचिद्देहेन समं यथा भेदाभेदस्तथा नगरेण समं तदभावात् राज्ञो देहवर्णनस्येव राजवर्णनात्, अधिष्ठात्रधिष्ठानभावेन च देशवर्णने प्रजावर्णनेऽश्वादिबलवर्णने कृतेऽपि राज्ञो वर्णनं प्रमोदाय तर्हि नगरवर्णने किं वाच्यमिति विपर्ययाच्च, न चैवं देहात्मनोरैक्ये आत्मनोऽनुपलब्धिः, स्याद्वादप्रतिपत्त्या तदुपलब्धावनन्तरायात्, यदुक्तं तत्रैव-"उभयनयविरोधध्वंसिनि स्यात्पदाङ्के, जिनवचसि रमन्ते ये स्वयं वान्तमोहाः। सपदि समयसारं ते परं ज्योतिरुच्चैरनवमनयपक्षाः क्षुण्णमीक्षन्त एव ॥१॥" अत एव सर्वेषां नयानां परस्परसापेक्षत्वेन वस्तुस्पर्शित्वात् प्रामाण्यं, व्यवहारनयास्पर्शे तु केवलस्य निश्चयनयस्यापि अवस्तुस्पर्शित्वेनाप्रामाण्यात्, न हि व्यवहारनयो न वस्तुस्पर्शीति वक्तुं युक्तं, पर्यायाश्रयी व्यवहारनयो द्रव्याश्रयी तु निश्चय इति द्रव्यपर्याययोर्द्वयोरपि वस्तुरूपत्वात्, अत एव हेमसूरिपादा द्वात्रिंशिकायाम् "अपर्ययं वस्तु समस्यमानमद्रव्यमेतच्च विविच्यमानम्। आदेशभेदोदितसप्तभङ्गमदीदृशस्त्वं बुधरूपवेद्यं ॥ १ ॥" **समयसार**-

वृत्तिकृत् स्वयमेव ग्रन्थाग्रभागे वक्ष्यति--''इह हि व्यवहारनयः किल पर्यायाश्रितत्वात् जीवस्य पुद्गलसंयोगवशादनादिप्रसिद्ध-
बन्धपर्यायस्य कुसुम्भरक्तस्य कार्पासिकवासस इवौपाधिकं भावमालम्ब्य उत्प्लवमानः परस्य परभावं विदधाति, तेन वर्णाद्या जीवस्य व्यव-
हारनयेन सन्ति, निश्चयनयस्तु द्रव्याश्रितत्वात् केवलस्य जीवस्य स्वाभाविकभावमालम्ब्य उत्प्लवमानः परस्य परभावं सर्वं प्रतिषेधयति
इति " एकमप्युदयते तदनेकं, नैकमेकमिति वस्तुविमर्शः। द्रव्यपर्यायनयद्वयवेद्यः, सिद्धसाध्यविधिनैव निवेद्यः ॥१॥ " न च केवलो
निश्चयनयः प्रमाणमेव, अर्थक्रियाकारित्वं हि वस्तुलक्षणं, तच्च न केवले द्रव्ये, किन्तु तत्तत्कारकसन्निपातावच्छिन्नशक्तिके, स
च कारकसन्निपातः पर्यायरूप एवेति प्राप्तं व्यवहारनयगोचरस्यैव वस्तुनोऽर्थक्रियाकारित्वं, न निश्चयगोचरस्य केवलस्य मृदादेर्घट-
जनकत्वं दृष्टं, सदा घटोत्पत्तिप्रसङ्गात्, अथ कुम्भकारादिसान्निहितस्य चेदायातोऽसि स्वयमेव व्यवहारमार्गम्, एवं ज्ञायकस्यात्म-
नोऽपि ज्ञायकत्वं ज्ञेयादिसन्निहितस्यैवेत्यायातं व्यवहारस्य प्रामाण्यं, केवलं ज्ञानस्य ज्ञातुर्वा स्वीकारे ज्ञानाद्वैतस्य पुरुषाद्वैतस्य वा
प्रसक्तेः, सिद्धं निश्चयनयगोचरस्य केवलवस्तुनोऽनर्थक्रियाकारित्वं, तद्विपगत्वाच्च निश्चयनयस्यापि मिथ्यादृक्त्वं, ततो, " नित्यम-
विकारसुस्थितसर्वाङ्गमपूर्वसहजलावण्यम्। अक्षोभमिव समुद्रं जिनेन्द्ररूपं परं जयति ॥ १॥" इति व्यवहारस्तुत्याऽपि अर्हद्भगवतः
स्तुतिः सिद्धा, निश्चयव्यवहारयोरुभयोरपि वस्तुगोचरत्वात्, यदि पुनर्व्यवहारं विना निश्चयप्रवृत्तिरिष्यते तर्हि—" जो इंदिए
जिणित्ता णाणसहावाहियं मुणइ आयं। तं खलु जियिंदियं ते भणंति जे निच्छया साहू ॥ १ ॥" इति. इयं स्तुतिरपि नैश्चयिकी
न स्यात्, इन्द्रियजयस्य व्यवहारचारित्रस्वरूपत्वेन आत्मनि तदस्पर्शात्, एवम्—"जियमोहस्स हु जइया खीणो मोहो हविज्ज साहु-
रस। तइया हु खीणमोहो भण्णइ सो निच्छयविदूहिं ॥ १ ॥" इत्यत्रापि क्षीणमोहत्वं व्यवहारेणैव, न पुनर्निश्चयेन, स्वयमेवाग्रे—

" नेव य जीवट्ठाणा न गुणट्ठाणा य अत्थि जीवस्स । जेण उ एए सव्वे पुग्गलदव्वस्स परिणामा ॥१॥ " इत्युक्तत्वात्, एतेन स्यान्निश्चयगोचरत्वं १ स्याद् व्यवहारगोचरत्वं २ स्यादुभयं ३ स्यादवक्तव्यं ४ स्यान्निश्चयगोचरत्वमवक्तव्यं ५ स्याद्व्यवहारगोचरमवक्तव्यं ६ स्यादुभयमवक्तव्यं ७ चेति सप्तभङ्गी सुकरैवेति दर्शितम् । यदि च सर्वथा व्यवहारः प्रतिषिध्यते तर्हि निश्चयान्न कश्चिज्जीवो बद्धो, बन्धाभावात्, न मुक्तो बन्धपूर्वकत्वान्मुक्तेः, इत्याद्यसमंजसं स्यात्, तस्मान्न व्यवहारः प्रतिषेध्यो, नापि निश्चयोऽत्याग्रहाद् ग्राह्यः, पक्षातिक्रम एव तत्त्ववेदित्वात्, यदाह अमृतचन्द्रः समयसारवृत्तौ द्वितीयाङ्के— " एकस्य बद्धो न तथा परस्य, चितिर्द्वयोर्द्वाविति पक्षपातौ । यस्तत्त्ववेदी च्युतपक्षपातस्तस्यास्ति नित्यं खलु किञ्चिदेव ॥ १ ॥ " एवं बद्धपदस्थाने मूढ १ रक्त २ द्विष्ट ३ कर्त्ता ४ भोक्ता ५ जीवः ६ सूक्ष्मः ७ हेतुः ८ कार्यं ९ भावः १० चैकः ११ नित्यः १२ सान्तः १३ वाच्यः १४ नाना १५ चेत्यः १६ दृश्यः १७ वेद्यः १८ भातो १९ इत्येतान् शब्दान् दत्त्वा काव्यपाठे विंशतिः काव्यानि, तदेवं निश्चयव्यवहारयोस्तुल्यकक्षत्वं साधितं, अनयैव दिशा यत्र शास्त्रे व्यवहारपरिहारः स सर्वोऽपि समाधेय, अत्राह परः—ननु न वयं व्यवहारं निषेधयामः, किंतु आत्मज्ञानबाह्यानां तपो व्रतं वा सर्वं बालरूपमिति तन्निषिध्यते, द्रव्यरूपप्रतिक्रमणादेः शुद्धोपयोगरूपां तार्तीयीकीं भूमिमपश्यतः स्वकार्यकरणासमर्थत्वेन विपक्षकार्यकारित्वाद्विषकुम्भोपमानस्येव त्याज्यत्वादिति चेत्, सत्यं, परं तस्या एव प्राप्तिः कथं स्यात् ?, प्रत्यहं द्रव्यप्रतिक्रमणादि श्रीमन्मौनीन्द्रशासनश्रद्धया तपो व्रतं वा कुर्वत एव तत्प्राप्तिरावश्यकी, यदुक्तं समयसारवृत्तौ—" तत्प्राप्त्यर्थ एवायं प्रतिक्रमणादिः, तन्मेति मंस्थाः यत् प्रतिक्रमणादीनि वस्तुतस्त्याजयति, किन्तु द्रव्यप्रतिक्रमणादीनि न मोचयति, अन्यदपि प्रतिक्रमणाप्रतिक्रमणाद्यगोचराप्रतिक्रमणादिरूपं शुद्धात्मसिद्धिलक्षणम-

तिदुष्करं किमपि कारयते, ” वक्ष्यते चात्रैव “ कम्मं जं पुव्वकयं सुहासुहमणेयवित्थरविसेसं । तत्तो नियत्तए अप्पयं तु जो सो पडिकमणं ॥ १ ॥” इत्यादि, अतो हताः प्रमादिनो गताः सुखासीनतां प्रलीनं चापलमुन्मूलितमालम्बनमात्मन्येवालानितं चित्तमासम्पूर्णविज्ञानघनोपलब्धेरिति, एतेन सिद्धं व्यवहारस्यापि निश्चयसाधकत्वादावश्यकत्वं, दोषापहारसमर्थश्चाग्रतः स एवम्, यदुक्तं समयसारेऽग्रेऽपि--यस्तु द्रव्यरूपो दण्डकोच्चारणादिः स सर्वापराधविषदोषापकर्षणसमर्थत्वेनामृतकुम्भ इति; ” तत एव दिगम्बरनये निश्चयान्मुनिभावधारकोऽपि गृहस्थो न व्यवहाररूपद्रव्यलिङ्गमन्तरा मोक्षं यातीति व्यवस्थाप्यते, श्वेताम्बरनयेऽपि यद्यपि गृहस्थसिद्धिर्प्रतिपत्तिस्तथापि प्रायः पूर्वजन्मनि द्रव्यलिङ्गरूपव्यवहारचरणेन क्षिप्तदुष्कर्म्मबहुलस्य कस्यचिद् गृहस्थस्य सिद्धिरित्युक्तेर्व्यवहारस्यैव मुख्यत्वं, यत्तु मरुदेव्याः सिद्धिस्वीकरणं तदप्याश्चर्यप्रायमिति वचनादेव न व्यवहारबाधकं, किं बहुना ?, जिनो ज्ञानवानपि गार्हस्थ्यसंसाराद्विरज्य निश्चयाद् ज्ञातकेवलाप्तिरपि व्यवहाराद्दीक्षां प्रपद्य तपश्चिनुते उपसर्गान् सहते, यदि च काललब्ध्यैव सर्वं भवेत्तर्हि किमर्थमेतावान् प्रयासो जिनेन विधीयते ?, किञ्च-प्राप्तेऽपि केवले किमर्थं विहारं कुरुते ?, अथ अस्ति तादृशी क्षेत्रस्पर्शना सा तु तीर्थकृता बलादपि कर्त्तव्येति चेत् न, सा चासौ क्षायिकभावे वा औपशमिकभावे वा औदयिकभावे वा पारिणामिकभावे वा क्षायोपशमिकभावे वा ?, अन्येषां असम्भवाद्, विहायोगतिनामकर्म्मोदयादिति मनुषे तन्न साम्प्रतं, वृषभादिवत् शुभगमनस्यैवोपपत्तेः, न हि तेन कर्म्मणा इयन्तः क्षेत्रप्रदेशाः स्प्रष्टव्या एवेति कार्यं, जगत्परिणामात्तथात्वे पारतन्त्र्यादपसिद्धांतः, “ततः परार्थसम्पत्त्यै, धर्म्ममार्गोपदर्शने । कृततीर्थविहारस्य, योगत्यागः परक्रिया ॥ १ ॥ श्रीआदिपुराणे, अत्र परोपकाराय तीर्थव्यवस्थापनविहारकरणं साक्षादुक्तं, प्रवचनसारेऽपि वक्ष्यमाणरीत्याऽर्हद्विहारः स्वभावादुक्तो, न तूदयेन, क्षेत्रस्पर्शनायाः

सिद्धेऽपि भावान्नौदयिकत्वं, तद्विहारकरणं व्यवहारादेव, केवलकाललब्ध्या दुर्गममेतत्, किंच— " कालो सहाव नियई पुव्वकयं चेव पुरिससकारो । पंचण्हं समवाओ सम्मत्तं जिणवरुदिट्ठं ॥ १ ॥ " इति वचनात् पंचानामपि हेतुत्वस्वीकारात्, केवलकाललब्ध्या एव कार्यजनकत्वे कालवादिमतापत्तिः, " कालः पचति भूतानि, कालः संहरते प्रजाः । कालः सुप्तेषु जागर्त्ति, कालो हि दुरतिक्रमः ॥ १ ॥ अत एव-"तन्निसर्गादधिगमाद्वा" इति तत्त्वार्थसूत्रे उभयथा सम्यक्त्वप्राप्तिः, उपासकदशांगे तु— "अत्थि उट्ठाणेत्ति वा कम्मेत्ति वा बलेत्ति वा वीरिएत्ति वा पुरिसकारपरक्कमेत्ति वा " इति पुरुषकारस्यैव प्राधान्यमाह, एतेन ये केऽपि अस्माकं भवस्थितिर्न पक्काऽस्ति, तस्यां पक्कायां स्वतः सद्बोधो भावीति, तथा—" खेत्रफरस कर्म्मप्रकृतिके उदै आयै विना डग भरै अंतरिक्ष जाकी चालि है " इति वदन्ति ते पराकृताः, नियतिमतापादनेन गोशालकमतापत्तेः, इति स्थितं कर्म्मनिर्जयो व्यवहारमन्तरा केवलकाललब्ध्या केवलेनाध्यात्मभावनेन च न भवति, यदुक्तं समयसारवृत्तौ " मग्नाः कर्म्मनयावलम्बनपरा ज्ञानं न जानन्ति यन्मग्ना ज्ञाननयैषिणोऽपि यदिति स्वच्छन्दमन्दोद्यमाः । विश्वस्योपरि ते तरन्ति सततं ज्ञानं(नी)भवन्तः स्वयं, ये कुर्वन्ति न कर्म न यान्ति च वशं जातु प्रमादस्य च ॥१॥ यत्र प्रतिक्रमणमेवमिदं प्रणीतं, तत्राप्रतिक्रमणमेव सुधांकुरः स्यात् । तत् किं प्रमाद्यति जनः प्रतिपन्नबोधः, किं नोर्ध्वमूर्ध्वमधिरोहति निष्प्रमादः॥२॥" प्रमादकलितः कथं भवति शुद्धभावोऽलसः?, कषायभरगौरवादलसता प्रमादो यतः। अतः स्वरसनिर्भरे नियमिते स्वभावेऽभवन्मुनिः परमशुद्धतां व्रजति मुच्यते चाचिरात् ॥ ३ ॥ " न च परप्रत्यायनमात्रफलस्यापि व्यवहारस्य एकांततस्त्याज्यत्वं, यतः स्थानाङ्गेऽप्युक्तम्— " पंचहिं ठाणेहिं केवली उदिण्णे परीसहे अहियासिज्ञति, जावं च णं ममं अहियासेमाणस्स बहवे समणा णिग्गंथा छउमत्था उदिण्णे परीसहे अहियासिस्संति । " तथा प्रथमाङ्ग-

वृत्तौ 'जमिण' मिति सूत्रे, अयं तावन्निश्चयनयाभिप्रायः, व्यवहाराभिप्रायेण तूच्यते-यो हि सम्यग्दृष्टिरुत्क्षिप्तपंचमहाव्रतस्तद्दूहने प्रमाद्यन्नपि अपरसमानसाधुलज्जया गुर्वाद्याराध्यभयेन गौरवेण वा केनचिदाधाकर्म्मादि परिहरन् प्रत्युपेक्षणादिकाः क्रियाः करोति तीर्थोद्भासनाय मासक्षपणादिका जनविज्ञाताः क्रियाः करोति तत्र तस्य मुनिभाव एव कारणं, तद्व्यापारापादित-पारंपर्यशुभाध्यवसायोपपत्तेः, तदेवं शुभान्तःकरणाविकलस्य मुनित्वे सदसद्भावः प्रदर्शितः," इति शीतोष्णीयाध्ययनतृतीयोद्देशक-वृत्तौ, तथा– "जे बहिया जाणइ से अज्झत्थं जाणइ" इति आचाराङ्गे प्रथमाध्ययने सप्तमोद्देशके, अत्रापि यो बाहिः प्राणिगणं जानाति स अध्यात्म जानाति, ज्ञात्वा च परिरक्षयेद् इत्यनेन ज्ञानक्रिये उपात्ते भवतः, क्रिया त्वत्र व्यवहाररूपा एव, किंच-मन उद्दिश्य यानि उक्तानि तानि तथैव, परं मनः कथं स्थिरीस्यात्?, तदुपायस्तु व्यवहार एव तपःप्रभृतिकः, यतः—"निवसन्ति हृषीकाणि, निवृत्तानि स्वगोचरात् । एकीभूयात्मनो यस्मिन्नुपवासमिमं विदुः ॥ १ ॥ चक्रे तीर्थकरैः स्वयं निजगदे तैरेव भूभूषणैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारणं । सद्यो विघ्नहरं हृषीकदमनं मांगल्यमिष्टार्थकृत्, देवाकर्षणकारि दर्प्पदलनं तस्माद्विधेयं तपः॥२॥" तथा प्राप्तेऽपि तुर्यगुणस्थाने यदि क्रियां न कुर्यात् तदा उत्कृष्टतः षट्षष्टिसागरोपमाणि पूर्वकोटीत्रया-धिकानि सम्क्त्वकालमतीत्य सम्यक्त्वमुद्वमत्येव जन्तुः, यदि च क्रियाः प्रतिमाषडावश्यकप्रभृतीःकुर्यात् तथाच उत्तरगुणारोहः स्याद्, अत एव जिनैरपि प्राप्तसर्वोत्कृष्टज्ञानैः प्रान्ते ध्यानरूपक्रिया प्रारभ्यते, एवं सम्यक्त्वप्राप्तौ यथाप्रवृत्तादिकरणेन घनरागद्वेषरूपग्रन्थिप-रिहाररूपा अशुद्धापि क्रियैव हेतुः,मोक्षेऽपि साक्षाद्धेतुः क्रियैव वोध्या, तेन कर्म्मनिर्जरोपायस्त्वियमेव,यथा२क्रियाःप्रत्युपेक्षणादिकास्तथा तथा संवराश्रितत्त्वेन न नूतनकर्म्मबन्धः, तथा यथा२ दुस्तपं तपः कुरुते तथा २ प्रागुपात्तकर्म्मविनाशः स्यात्, दृश्यते चायमर्थः-

"संजमेणं तवसा अप्पाणं भावेमाणे विहरइ" इत्यागमेऽपि "तवनारायजुत्तेणं, भित्तूणं कम्मकंचुयं । मुणी विगयसंगामो, भवाओ
परिमुच्चइ ॥" इति श्रीनवमोत्तराध्ययने, न च केवलं दुष्कर्म्माचरणे अयमस्माकमुदयभाव इति शरणीकर्त्तव्यं, पुरुषकार-
वैयर्थ्यापत्तेः, तपःप्रभृतिपुरुषकारेणापि निर्जरायाः प्रतिपत्तेः, यदाह द्रव्यसंग्रहे नेमिचन्द्रः-" जह कालेण तवेण य भुत्तरसं
कम्मपुग्गलं जेण। भावेण सडदि णेया तस्सडणं चेदि णिज्जरा दुविहा॥१॥" यस्मिन् समये तपोऽनुष्ठानादिभावनया शुद्धोपयोगं रसं
शान्तनामानं जीवोऽनुभवति सर्वकर्म्मविकारात् पृथग्भूतत्वात् तदा भावनिर्जरा स्यात्, तस्यां चात्मनो यथा यथा सामर्थ्यं तथा
द्रव्यकर्म्मपरिशाटः स्यात्-आत्मप्रदेशेभ्यो विश्लेपः स्यात् सा द्रव्यनिर्जरा, सा च द्विविधा-एका यथाकालनिर्जरा, या शुभाशुभक-
र्म्मणां भोगादेव निर्जरा स्यात्, द्वितीया अविपाकनिर्जरा, या आत्मध्यानेन दुर्द्धरतपःक्लेशेन च निर्जरा स्यात्" इति तद्वृत्तिः। अथ
तपोऽपि तत्तत्प्रतिबन्धककर्म्मव्यपाय एव प्राप्तव्यं नेतरथेति चेत्, सत्यं, परं सम्यक्त्वस्य एतदेव लिंगं प्रशम १ संवेग २ निर्वेद ३-
अनुकम्पा ४ आस्तिक्य ५ रूपेषु भावेषु परिणामः, तेषामभावे तस्याप्यभावात्, " कृपा १ प्रशम २ संवेग ३ दम ४ अस्ति भाव
५ वैराग । ए लच्छन जाकै हियै सप्तव्यसनको त्याग ॥१॥" इति स्वग्रन्थेऽप्युक्तं, तेन सम्यक्त्ववता दिने २ संवेगः प्रचारणीयः,
अत एव सम्यक्त्वस्याविरतरूपत्वेऽपि मिथ्यात्वान्मांसाद्यभक्ष्याच्च विरतिरेव सहचारिणी द्रष्टव्या, न चेत् सम्यक्त्वस्याप्यनात्म-
लाभः, तत एव सम्यक्त्वस्य संयममार्गणायामन्तर्भावः, न चैवं पञ्चमगुणस्थानमेव स्याद्विरतेस्तदादिष्वेव भावादिति वाच्यं,
भावतस्तदविरतत्वेन अविरतत्वानपायात्, यथा लौकिकानां वैष्णवादीनां अविरतत्वेऽपि द्रव्यतः काश्चन विरतयो दृश्यन्ते तथा
सम्यक्त्ववतोऽपि द्रव्यतो विरतेरुपपत्तेरिति अन्यत्र विस्तरः, तेन संवेगाभिलाषिणो व्यवहारतस्तपःकरणेऽभ्यासात्तदावरणकर्म्म-

व्यपगमोऽपि स्यात्, न तु सम्यक्त्ववता यथेच्छं विहर्त्तव्यं, यतः **समयसारवृत्तौ**—" लोकः कर्म्म ततोऽस्तु सोऽस्तु च परिस्पन्दात्मकं कर्म्म तत्, तान्यस्मन् करणानि सन्तु चिदचिद् व्यापादनं चास्तु तत् । रागादीनुपयोगभूमिमनयत् ज्ञानं भवत् केवलं, वन्धं नैव कुतोऽप्युपैत्ययमहो सम्यग्दृगात्मा ध्रुवम् ॥ १ ॥ तथापि न निरर्गलं चरितुमिष्यते ज्ञानिनां, तदायतनमेव सा किल निरर्गला व्यावृतिः। अकामकृतकर्म्म तन्मतमकारणं ज्ञानिनां, द्वयं न हि विरुद्ध्यते किमु करोति जानाति च ॥२॥" तथा श्री-उत्तराध्ययने षष्ठे—"अज्झत्थं सव्वओ सव्वं, दिस्स पाणे पियायए । न हणे पाणिणो पाणे, भयवेराउ उवरए ॥ १ ॥'- तथा "सम्मदिट्ठीवि कयागमोऽवि अइविसयरागसुहवसओ । भवसंकडम्मि निवडइ इत्थं पुण सच्चइ नायं ॥ २ ॥" इत्युपदेशमालायाम्- तथा- 'दसारसीहस्स य सेणियस्सा, पेढालपुत्तस्स य सच्चइस्स । अणुत्तरा दंसणसंपया तया, विणा चरित्तेणऽहरं गई गया ॥ १ ॥' इत्यावश्यकनिर्युक्तौ, उपदेशरत्नाकरे च, एतेन यः कश्चिद् वदति-चारित्रं खलु स्वरूपाचरणलक्षणं अवश्यं युज्यते, न तु संयमाचरणं, सिद्धजीवे तदभावात् इति, निरस्तं तन्मन्तव्यं, यदि च संयमाचरणं विना स्वरूपाचरणचारित्रेणैव केवलेन सिद्धिः स्यात् तदा तत्सद्भावेऽपि श्रेणिकादीनां भवभ्रान्तिर्नाभविष्यदिति, 'निश्चयाद् व्यवहृतिर्व्यवहारान्निश्चयः स्थितिरियं प्रकटैव। सद्धचेर्विरमणं विरतेः साऽतो वहिर्युगपदंगिनि योगः ॥१॥' अत एव **पंचास्तिकायग्रन्थे** 'णिच्छयणएण भणिओ तिहिं तेहिं समाहिदो हु जो अप्पा । न कुणइ किंचिवि अण्णं ण मुयइ सो मोक्खमग्गोत्ति !! १४० ॥' गाथाया वृत्तौ- अतो निश्चयव्यवहारमोक्षमार्गयोः साध्यसाधनभावो नितरामुपपन्न इति, अतः सिद्धं- व्यवहारं विना निश्चयोऽपि न मोक्षाय क्षमः, संयमाचरणचारित्रस्य व्यवहाररूपत्वात्, यच्च पुनर्दानस्य सौवर्णिकनिगडत्वमेकान्ततः प्रकल्प्य त्याज्यत्वं न्यगादि तदपि न, कामनापूर्वस्यैव

दानस्यावश्यं भोगाभिजनकत्वाद्, अकामस्य तु सुपात्रदानान्निर्जरायाः प्रतिपादनाच्च, यदागमः- 'समणोवासगस्स णं भंते! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणे किं लभति ?, गोयमा! समणोवासएणं तहारूवं समणं वा जाव पडिलाभेमाणे तहारूवस्स समणस्स वा समाहिं उप्पाएति, समाहिकारएणं तमेव समाहिं पडिलभेति, समणोवासएणं भंते! तहारूवं समणं वा जाव पडिलाभेमाणे किं चयति ?, गोयमा! जीवितं चयति, दुच्चयं चयति दुक्करं करेति दुल्लभं लभेति बोहिं बुज्झति २ ततो पच्छा सिज्झति ५ जाव अंतं करेति,' इति श्रीभगवत्यां सप्तमशतके १ उद्देशके,- "समणोवासगस्स णं भंते! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जति ?, गोयमा! एगंतसो निज्जरा कज्जइ, नत्थि य से पावे कम्मे,' इत्यपि तत्रैव ८ शते ६ उद्देशके, अत एव धनसार्थवाहदृष्टान्तेऽपि श्रूयते- यदि घटिकाद्वयं भो सार्थवाह! भगवान् दानमदास्यत्तर्हि केवलज्ञानमुदपत्स्यत इति, "अतिथिसंविभागव्रतं तु श्रावकाणां संवररूपं जिनैर्न्यगादि, तच्च सुपात्रदानाविनाभूतमेव, संयममविनाशयन्नततीत्यतिथिः, अथवा नास्य तिथिरस्तीत्यतिथिः- अनियतकालगमनस्तस्मै संविभागो-भिक्षा १ उपकरणं २ औषधं ३ प्रतिश्रय ४ इति, निरवद्या भिक्षा देया १ धर्म्मोपकरणानि च सम्यग्दर्शनज्ञानचारित्रोपबृंहणानि दातव्यानि २ औषधं ग्लानाय देयं ३ प्रतिश्रयः परमधर्म्मश्रद्धया देयः ४" इति भावनासंग्रहे श्राद्धधर्म्माधिकारे, अनुकम्पादानाद्यपि प्रवचनप्रभावनांगत्वेन सम्यक्त्वाचाररूपत्वात्, सम्यक्त्वं तु निर्जराहेतुरेवेति न एकान्ततो व्यावहारिकदानस्य त्याज्यता, शीलमपि यदि व्यवहाररूपं ब्रह्मव्रतोच्चारलक्षणं मनःसंकल्पजस्खलनादिदोषमुद्भाव्य व्यर्थमुदितं तदपिव्यर्थमेव, तथा सति नवमगुणस्थानकं यावन्मैथुनविरतिर्वेदोदयात् सर्वथा नास्ति, अत एव तत्र

मैथुनसंज्ञापि संज्ञामार्गणाद्वारे उक्ता गोमट्टसारे, तथा च दत्तः श्रामण्यरूपपंचमहाव्रताचरणरूपे षष्ठगुणस्थाने जलांजलिरिति, किंच- मनसोवैकृत्ये अतीचार एव जिनप्रवचने भणितो, नानाचारः- अदिक्कमणं वदिक्कमणं अदिचारो तहेव अणाचारो। एतेहिं चदुहिं पुणो सावज्जो होइ मुणिदव्वो ॥ १ ॥' इति। दिगम्बरनये गाथा प्रतीता, अत एव श्रीमहानिशीथसूत्रे यावद्विकर्म्माचरणं न कुर्याल्लज्जया भयेन वा तस्य पुंसः स्त्रिया वा व्यावर्णना भणिता इति। तपोऽपि व्यावहारिकं षष्ठाष्टमादि कार्यमेव, तीर्थकृताऽप्यादृतत्वादित्युक्तं, क्रिया अपि आवश्यकादिरूपा मनसो व्यग्रत्वेऽपि कर्त्तव्या एव, मनसः स्थिरीकरणाय अभ्याससाधनत्वात्, यत उक्तम्- "जइवि पडिलेहणाए हेऊ जियरक्खणं जिणाणा य। तहवि इमं मणमक्कडनिजंतणत्थं मुणी बिंति ॥ १ ॥" किंच- यदि कायवाक्ये क्रियायां व्यावृते मनो न व्यावृतं, तथा च मनःसम्बन्धी दोषो लगति, न वाकायसम्बन्धी, तस्य च मिथ्यादुष्कृतदानैर्निवारणं, तेनैव **समयसारवृत्तौ**- 'कृतकारितानुमननैस्त्रिकालविषयं मनोवचनकायैः। परिहृत्य कर्म्म सर्व्वं परमं नैष्कर्म्यमवलम्बे ॥ १ ॥ यदहमकार्षं यदचीकरं यत्कुर्वन्तमप्यन्यं समन्वज्ञासम्। मनसा वाचा कायेन च तन्मिथ्या मे दुष्कृतमिति ॥ २ ॥ एवमेकोनपंचाशद्भेदैः मिथ्यादुष्कृतदानरूपः प्रतिक्रमणकल्पः, तथा न करोमि न कारयामि न कुर्वन्तप्यन्यं समनुजानामि मनसा वाचा कायेन चेत्यवमेकोनपञ्चाशद्भेदैरालोचनाकल्पः, तथा न करिष्यामि न कारयिष्यामि न कुर्वन्तमप्यन्यं समनुज्ञास्यामि मनसा वाचा कायेन चेत्येवमेकोनपञ्चाशद्भेदैः प्रत्याख्यानकल्प इति कल्पत्रयमभिहितं, न चैते सर्वे भेदाः मनःसहकृता एवेति नियमः, तेन मनःसम्बन्धिदोषानुपङ्गाशया प्रतिक्रमणाद्यकरणमेव न श्रेयः, तत्र बहुदोषानुषङ्गात्, अत उक्तम्-" अविहिकया वरमकयं उस्सुयवयणं वयंति सव्वन्नू। जम्हा पायच्छित्तं अकए गुरुअं कए लहुयं ॥ १ ॥" किंच-यदि सर्वथा निर्दोषत्वमेवादर-

णायं तद्विना न कर्त्तव्यमेवेत्यागृह्यते तर्हि चतुर्दशमगुणस्थानादर्वाक् किमपि न कर्त्तव्यं स्यात्, चारित्रसम्पन्नताया उत्तराध्ययनादिषु तत्रैव प्रतिपादनात्, दिगम्बरनयेऽपि परमयथाख्यातचारित्रस्य तत्रैव कथनाच्च, एतदक्षराणि कवलाहारप्रस्तावे वक्ष्यन्ते, न चैतावता अविधिकरणमेवानुमतमिति प्रतिपक्षश्चिन्त्यः, "अविहिकया वरमकय" मित्यादेरकरणनिषेधविषयत्वात्, तथा च विधिकरणे यतनीयमविधौ जाते मिथ्यादुष्कृतं देयमिति, तत एव छद्मस्थानां यथावादितथाकारित्वं स्थानांगे सूत्रितं सामायिकछेदोपस्थापनीयचारित्रवतां सातिचारत्वं च, न च अतीचारबाहुल्यदर्शनात् पंचमारके इदानीमार्यक्षेत्रमण्डले मुनीनामभाव एव प्रतिपत्तव्यः, तत्स्वीकारे श्रमणोपासकानामप्यभाव एव, सम्यक्त्वस्याप्याधिगमिकस्य दुर्लभत्वमेवेति, तीर्थलोपे गौरवात्, तेन स्थितं-व्यवहारनयेन तद्व्यवस्थानाच्च दानशीलतपःषडावश्यकप्रत्युपेक्षणादिक्रियामुनिवैयावृत्यप्रभृति सर्वं सिद्धिसौधमध्यास्ते "येषां निश्चयतः परस्पररुचेरापेक्षिकीं संगतिं, संप्राप्य व्यवहारहारसुषमा संजायते वास्तवी। ते नित्यं परमार्थतः सहृदयास्तेष्वंगभाजां दया, ते सम्प्राप्तमहोदयाः सुकृतिनस्ते ध्वस्तमोहोदयाः ॥ १ ॥ यदपि नियतयोगाद् ज्ञापकं वस्तु सिद्धं, रविरिव समुदेति द्योतमानं तथापि। व्यवहरणनयस्तत्साधनं चापि सिद्धं, द्वयमिदमनयोस्तत् सिद्धता साध्यता च ॥ २ ॥ तदेवं सुदृष्टिभिरनेकागमयुक्त्या प्रबोध्यमानोऽपि न स्थिरीभूतो वाणारसीदासः प्रत्युत दशाश्चर्यादिश्वेतांबरागमोक्तं स्वमनीषया दूषयन् अनेकजनान् व्युद्ग्राह्य स्वमतमेव पुपोष, दशाश्चर्यादिसमाधानमग्रे वक्ष्यते इति गाथार्थः ॥८॥ अथैवं पूर्वरङ्गे निश्चिते प्रविशति प्रतीहारी—

**अज्झत्थसत्थसवणा तस्सासंवरणएवि पडिवत्ती। पिच्छियकमंडलुजुए गुरूण तत्थावि से संका ॥ ९ ॥**

अध्यात्मशास्त्रश्रवणात् तस्याशाम्बरनयेऽपि प्रतिपत्तिः। पिच्छिकाकमण्डलुयुगे गुरूणां तत्रापि तस्य शङ्का ९

प्रायसोऽध्यात्मशास्त्रे ज्ञानस्यैव प्राधान्याद्दानशीलादितपःक्रियादीनां गौणत्वेन प्रतिपादनादध्यात्मशास्त्राणामेव श्रवणं प्रत्यहं, तस्मात् 'तस्य' बाणारसीदासस्य 'आशाम्बरा' दिगम्बरास्तेषां 'नये' शास्त्रे 'प्रतिपत्तिः' निश्चयोऽभूत्, तदेव प्रमाणमिति स्वीचकार, अपिशब्दादध्यात्मशास्त्रादिदिगम्बरतन्त्रेऽपि व्रतसमित्यादिप्रतिपादकग्रन्थे न प्रामाण्यमिति तन्मते निश्चय इत्यर्थः, यद्वा अध्यात्मशास्त्रश्रवणादाशाम्बरनये विप्रतिपत्तिः-अनिश्चयो, व्यवहारविरोधाद्, दिगम्बरा हि प्राचीनाः स्वगुरून् मुनीन् श्रद्दधते, अस्य तु तदश्रद्धानात्, एवमन्योऽपि तन्मते विशेषः, तमेवाह-गुरूणां पिच्छिका कमण्डलु चैतद्द्वयं परिग्रहत्वान्नोचितं, दिगम्बराणां बहुषु ग्रन्थेषूक्तमपि न प्रमाणमिति तस्य बाणारसीदासस्य शंकाऽभवत्, तेन श्वेताशाम्बरनयद्वयापेक्षयाऽपि बाणारसीयमते न सम्यक्त्वमिति सिद्धं, तत्प्रतीतिरप्यनन्तरं वक्तव्येति गाथार्थः ॥ ९ ॥ अथ विप्रतिपत्तिप्रतीहारिकया प्रवेशिता शङ्कानटी नाटयति,—

वयसमिइबंभचेरप्पमुहं ववहारमेव ठावेइ। तेण पुराणं किंचिवि पमाणमपमाणमवि तस्स ॥ १० ॥

व्रतसमितिब्रह्मचर्यप्रमुखं व्यवहारमेव स्थापयति। तेन पुराणं किमपि प्रमाणमप्रमाणमपि तस्य ॥ १० ॥

सर्वेषां शास्त्राणां निश्चयनयोन्मुखत्वेऽपि निश्चयसाधनाय व्यवहार एव प्रागुक्तयुक्त्या समर्थः, ततस्तमेव मुख्यवृत्त्या व्यवस्थापयति, तेन हेतुना पुराणशास्त्रं किंचिदेव प्रमाणं आदिपुराणादिकं, न सर्वं पुराणमात्रं, किन्तु अप्रमाणमेव, किञ्चित्प्रमाणोक्तेरेवाप्रामाण्यं शेषस्यागतं चेत् किं पुनरुक्तेनेति न धार्य्यं, आदिपुराणादिके प्रमाणेऽपि यत् स्वमतव्याघातकं तदप्रमाणमिति यथा-

छन्दत्वज्ञापनात्, यद्वा पुराणं-प्राचीनं दिगम्बराचरणं प्रमाणमप्रमाणमिति व्याख्येयम्, उभयवचनात् न मम दिक्पटमतेन कार्यं, किन्तु अहं तत्त्वार्थी, तथा च यज्जिनवचनानुसारि तदेव प्रमाणं नान्यदिति ख्यापितं, यद्वा पुराणं-जीर्णं तत्त्वार्थादि सूत्रमित्यपि ज्ञेयं, अत्र यद्यपि पुराणादिदिगम्बरमतोत्थापने त एव प्रतिविधातारस्तथापि कवलाहारादिव्यवस्थापने साक्षिकस्थानीयत्वात् पुराणप्रामाण्यं साध्यते। ननु भो! वाणारसीदास! त्वं पुराणादिकमागमं न प्रमाणं मनुषे तत् किं देशतः सर्वतो वा?, तत्र न तावद् द्वितीयः, आदिपुराणश्रावकाचारादेरङ्गीकृतत्वात्, नाद्योऽपि, तत्तत्पुराणप्रतिपादितजिनादिचरितस्याप्यप्रामाण्यापत्ते-श्चरितरूपप्रथमानुयोगस्य जलाञ्जलिपातात्, यदुक्तं द्रव्यसंग्रहाध्यात्मशास्त्रवृत्तौ— "वृषभादिचतुर्विंशतितीर्थंकरभरता-दिद्वादशचक्रवर्त्तिविजयादिनवबलदेवत्रिपृष्ठादिनववासुदेवअश्वग्रीवादिनवप्रतिवासुदेवसम्बन्धित्रिषष्टिपुराणभेदभिन्नः प्रथमानुयोगो भण्यते इति।" एवं श्रावकाचारे समन्तभद्रकृते, तथाच गुणभद्रो महापुराणे—"रागादीन् दूरतस्त्यक्त्वा, शृङ्गारादिरसो-क्तिभिः। पुराणकारकाः शुद्धबोधाः शुद्धमुमुक्षवः॥ १॥" अथैवं पुराणानि प्रमाणीभवन्तु, परं पूर्वापरविरोधात् किंचिदाधुनिकैः कुलिङ्गिभिर्दूषितमित्यनुमीयते, तथा च यथा भागवतं वचो न दुष्यति तदेव पुराणोक्तं प्रमाणम्, अत एव जिनादिचरितानि प्रमाणं, पिच्छिकादिकथनं चाप्रमाणमिति चेत् न, विकल्पासहत्वात्, तथाहि-अयं नियमः किं स्वानुभवात् विचाराक्षमत्वात् गुरूपदेशाद-ध्यात्मशास्त्रकथनाद्वा?, नाद्यः स्वानुभवस्य केवलस्याप्रामाण्यात्, मिथ्यादृशामनुभवोऽप्यन्यथा कथं न प्रमाणं?, प्राचीनदिगम्बरा-णामपि नास्ति किंचित् पुराणादिषु काल्पनिकमित्यनुभवो वा कथमप्रमाणं?, अथ तदनुभवः प्रमाणेन बाध्यते मम तु न तथेति चेत् विपर्ययस्यापि वक्तुमौचित्यात्, भवतः प्रमाणनयनिक्षेपज्ञानशून्यस्यानुभवबाधाच्च, यस्यैव तत्त्वार्थाधिगमस्तदीयानुभवस्यैव

प्रमाणभूमित्वं, अधिगमहेतवस्तु प्रमाणादयः, यदुक्तं समयसारवृत्तौ—“अधिगमोपायाः प्रमाणनयनिक्षेपा” इति। न द्वितीयः भूयसां प्राचीनाशाम्बराणां बहुश्रुतानां विचारेणैव सर्वपुराणानां प्रतिष्ठितत्वात्, भवादृशविचाराक्षमत्वं तु न स्वेष्टसाधकं, प्रमाणादिज्ञानशून्यत्वादेव, न च पुनः सर्वथा विचारक्षमत्वमेवागमप्रामाण्यप्रयोजकं, निगोदादिविचारेष्वाज्ञाया एव प्रामाण्यात्, यदुक्तं द्रव्यसंग्रहवृत्तौ“स्वयं मन्दबुद्धित्वेऽपि विशिष्टोपाध्यायाभावे शुद्धजीवादिपदार्थानां सूक्ष्मत्वे-सूक्ष्मं जिनोदितं वाक्यं, हेतुभिर्यन्न हन्यते। आज्ञासिद्धं तु तद् ग्राह्यं, नान्यथावादिनो जिनाः ॥१॥ एवं दर्शनप्राभृतवृत्तावपि। न तृतीयः, मम गुरवो यथोक्तं मोक्षसाधनसम्पन्ना दूरविहारिण इति त्वयैवोक्तत्वात्, भवतस्तदुपदेशाविषयत्वात्, अथ अध्यात्मशास्त्रोपदेशद्वारा अस्त्येव सुगुरूपदेश इति चेत् न, तुर्यपक्षावेशात्। न तुर्यः,तच्छास्त्रे क्वापि पुराणानामदूषितत्वात्, प्रत्युत प्रवचनसारादौ—“एगग्गादो समणो एगग्गं णिच्छियस्स अत्थेसु। णिच्छित्ती आगमदो आगमचेट्ठा तदो चेट्ठा ॥ १ ॥” इत्यादिप्रशंसोपलंभात्, न चायमागमो न, द्रव्यसंग्रहवृत्त्याद्युक्तेन प्रागागमनिर्णयात्, अपि च- पुराणेषु जिनादिचरितं प्रमाणं मुनेः पिच्छिकादिकथनमप्रमाणं इदमपि न किंचित्, प्रामाणिकानां पर्षदि अनभिधेयत्वाद्, विषपृषद्युक्तमधुकुम्भस्य सर्वस्यापि विषव्यवहारवत् सकलस्याप्यप्रामाण्यात्, यथा मिथ्यादृशो नरे नरत्वं तिर्यक्षु तिर्यक्त्वमित्यादिसम्यक्प्रतिपत्तेरपि जीवादिस्वरूपविप्रतिपत्तिसाहचर्यादप्रामाण्यं अज्ञानत्वात् तथा मुनिस्वरूपविप्रतिपत्त्या सहचाराज्जिनादिचरितेऽपि प्रामाण्यबाधात् संशयाच्च मिथ्यादृक्कथनात्, न च यथा सत्यनाणकान्तः पतितं कूटनाणकं निष्काश्य सत्यनाणकं ग्राह्यं तथाऽत्रापीति वाच्यं, दृष्टान्तवैषम्यात्, एकत्राप्ययथार्थकथनेन रागद्वेषाक्रान्तत्वे वक्तुर्निश्चिते सत्यकथनेऽपि विश्वासानुपपत्तेरित्यलं विस्तरेणेति गाथार्थः ॥ १० ॥ अत्र प्रविशति नटः—

अह नियमयवुड्डिकए पयासियं तेण समयसारस्स । चित्तकवित्तणिवेसं नाडयरूवं मइविसेसा ॥ ११ ॥
अथ निजमतवृद्धिकृते प्रकाशितं तेन समयसारस्य । चित्रकवित्वनिवेशं नाटकरूपं मतिविशेषात् ॥ ११ ॥

'अथे' त्यानन्तर्ये पुराणस्याप्रामाण्यश्रद्धानन्तरं प्रागुक्तरीत्याऽध्यात्मशास्त्रेष्वपि 'तथापि न निरर्गलं चरितुमिष्यते ज्ञानिना'-मित्यादिव्यवहारनिरूपणे सुदृष्टिभिर्दृश्यमाने स्वमतस्य शैथिल्यवारणाय तेन रूपचन्द्रादिनोदितेन स्वाभिप्रायसूचनायात्मकाभिनिवेशेन समयप्राभृतसूत्रवृत्तिसमुदायरूपस्य समयसारस्य कुन्दकुन्दाचार्यअमृतचन्द्राचार्याभ्यां प्रणीतस्य ग्रन्थस्य नाटकरूपं प्रकाशितं, कीदृशं ?-चित्राणि-नैकरूपाणि यानि कवित्वानि-दोधकपट्पदप्रभृतीनि तेषां निवेशः-स्थापना यस्मिन् , तादृशं जीवस्य नाटकं प्राग्गाथागद्यपद्यैः संदृब्धं तदनेन कवित्वबन्धेन प्रकाशितमित्यर्थः, प्राचीनं हि शास्त्रं दुर्बोधं मन्दमतीनां तेन कवित्वरीत्या प्रकाश्यते तर्हि स्वाभिप्रायप्रकटनेन भूयांसो जना अस्मन्मतेऽनुरक्ताः स्युरितिभावः,ननु प्राचीनग्रन्थस्य स्पष्टीकरणात् प्राचां मतमेव विशदीकृतं, तर्हि निजमतवृद्धिकृते इति कथं सूपपादमिति चेत् , न, प्राचीनसमयसारस्यातिगम्भीरार्थत्वेन तदभिप्रायस्यानेन दुर्लभस्य विशदीकरणानुपपत्तेः, अत एव तदुक्ततदुक्तार्थयोर्महदन्तरं सहृदयसंवेद्यं दृश्यते, अपिच-प्रतिक्रमणादिकल्पत्रयस्य तथा चिच्छक्त्यादिकनिचिदात्मशक्तीनां समयसारप्रान्ते संदृब्धानामनुपदर्शनं, तथा ढुंढाचूंघादिपंचपुरुपस्वरूपप्रतिमास्थापनगुणस्थानवर्णनकुकविसुकविस्वरूपाद्युपदर्शनं प्राग्ग्रन्थेऽनभिहितं ( अत्राभिहितमिति ) बहुधाऽन्तरं, तेन प्राचीनग्रन्थप्रकाशालम्बनेन स्वमतमेव वाणारसीदासेन पुष्टीकृतं, न तु ग्रन्थप्रकाशः, तथा सति प्राचीनग्रन्थप्रामाण्यभाजामाशाम्बराणां गुरुत्वे न

विप्रतिपत्तिः स्यादिति सुधिया स्वयमुन्नेयं, "प्राचां वाचामनुगममिषात् स्वाशयस्यैव पोषं, दुष्टोऽदुष्टो ननु वितनुते भृत्यवद् भूमिभर्त्तुः । विश्वासः स्यात्तदिह सुधियामन्तरंगप्रवृत्त्या, कृत्याकृत्याचरणवशतः सानुमेया पुनः स्यात् ॥१॥" किंच-अनेन समयसारः पूर्वं कस्य पार्श्वेऽधीतः ?, सम्यगध्ययनं विना विवरणाशक्तेः, न तावत् सितांशुकस्य, मिथ्यादृक्त्वश्रद्धानात्, दिक्पटस्य पार्श्वेऽध्ययनमिति चेत् स किं मुनीनां पिच्छिकाकमण्डलुप्रमुखोपधेः श्रद्धावाँस्तदन्यो वा ?, आद्यश्चेद् गुरुशिष्ययोः श्रद्धावैषम्येण अन्यतरस्यावश्यं मिथ्यादृक्त्वं, न द्वितीयः, अमृतचन्द्राचार्यस्य मूलसङ्घयूथ्यत्वेन तदाशयस्य निष्पिच्छैर्यथार्थतयाऽनवगमात्, मूलसङ्घयूथ्यकृतग्रन्थेषु निष्पिच्छस्य जैनाभासत्वेन कथनाच्च, अपिच-कुन्दकुन्दाचार्यस्य १ एलाचार्य२ गृध्रपिच्छ ३ इति च नामत्रयं तदाम्नायिका वदन्ति, तेन तस्यापि मुनित्वे सति पिच्छधारित्वं तदनुजस्यामृतचन्द्रसूरेरपि तथात्वं, तथा च कथमनयोर्न मिथ्यादृक्त्वं ?, तत्त्वे च तत्कृतग्रन्थस्यापि मिथ्याश्रुतत्वं, मिथ्यादृशां परिग्रहेण सम्यक्श्रुतस्यापि मिथ्याश्रुतत्वं च नन्दीसूत्रे प्रतिपादितमेव, तथा सति स्वस्यापि तत्कृतग्रन्थप्रामाण्यं श्रद्दधतो मिथ्यादृक्त्वं, तदनुसारिनयात्मनः स्वग्रन्थस्यापि मिथ्याश्रुतत्वं सुसिद्धमेव, न चामृतचन्द्रसूरेर्न मुनीनां पिच्छादिश्रद्धानमिति वाच्यं, तत्कृतप्रवचनसारादौ-"छेदो जेण ण विज्जइ गहणविसग्गेसु सेवमाणस्स । समणो तेणिह वट्टदु कालं खित्तं वियाणित्ता ॥ १ ॥" इत्यादिना मुनिपिच्छधारणादिप्रतिपादनात्, एतच्चाग्रे वक्ष्यामः, एवं समाश्रितन्त्रज्ञानार्णवमूलाचारादिग्रन्थानामपि मुनेरुपधिप्रतिपादकानां तत्तद्ग्रन्थविधायकानां च पुराणादिसर्वाशाम्बरनयप्रामाण्यं श्रद्दधानानां का नाम सम्यग्दर्शनिता ? इति मूलोच्छेद एव, तेन कवित्वबन्धनाटककरणं स्वमतवृद्धये

एव, न पुनर्ग्रन्थस्पष्टीकरणायेत्यलं प्रसङ्गेन। "श्रद्धा यथाऽन्तः पुरुषस्य सिद्धा, वाचां प्रवृत्तिर्हि तथा समृद्धा। सिद्धान्तमेनं निदिशन्ति वृद्धा, वक्तुर्वचोविश्वसितिः प्रसिद्धाः ॥१॥" तत एतन्नाटकप्रकाशनं मतिविशेषात् मतिभेदान्मतिविश्लेषाद्वा कृतमिति गाथार्थः ॥११॥

अथ नाटकान्तेऽभिनयप्रकाशः—

**वाणारसीविलासं तओ परं विविहगाहदोहाइ। अबुहाण बोहणत्थं करेइ संथवणभासं च ॥ १२ ॥**

**वाणारसीविलासं ततः परं विविधगाथादोधकादि। अबुधानां बोधनार्थं करोति संस्तवनभाषां च ॥ १२ ॥**

ततः परं वाणारसीविलासनामकं निबन्धं करोति, तथैव गाथा प्राकृतरूपा दोधकः-छन्दोविशेषः तत्प्रभृतिसङ्ग्रहं 'अबुधानां' नयप्रमाणानभिज्ञानां बोधनार्थं 'संस्तवनानां' भक्तामरेत्यादीनां 'भाषां' प्राकृतवचनिकारूपां करोति, निजमतदृढीकरणायेति भावार्थः ॥ अत्र 'अबुध' इति पदेन केऽपि पूर्वं अश्रुतजिनोक्तयः केऽपि च श्रवणेऽपि जिनागमेऽबद्धादराः केचिन्मानवत्त्वेन अविनीताः तत एवाप्राप्तसिद्धान्तनयविभागाः केचिदत्यन्तविषयानुरागेण तपःक्रियादिषु आलस्यवश्याः केचन लोभात्कार्पण्यभाजः केचन रात्रिभक्षणविचक्षणाः एतन्मते गुरोरभावात् क्रियाराहित्याद्दाननिषेधात् सम्यक्त्ववतां बन्धाप्रतिपादनाज्जातानुरागा बभूवुरिति ज्ञापितम्, तेषां बोधनं तदभिमतजल्पनादेव भवेदित्याकूतमिति गाथार्थः ॥ १२ ॥ अथ पुनर्नाट्यं नाटयति—

**सम्मत्तम्मि हु लद्धे बंधो नत्थित्ति अविरओ भुञ्जा। वयमग्गस्स अफासी न कुणइ दाणं तवं बंभं ॥ १३ ॥**

**सम्यक्त्वे खलु लब्धे बन्धो नास्त्यविरतो भोज्यात्। व्रतमार्गस्यास्पर्शी न करोति दानं तपो (ब्रह्म) ॥ १३ ॥**

( ! ) किमपि "नास्तित्वाश्रवबंधः सम्यग्दृष्टेराश्रवनिरोधः। सन्ति पूर्वनिबद्धानि, जानाति स तान्यबध्नन् ॥ १ ॥ रागद्वेषविमोहानां, ज्ञानिनो यदसम्भवः। तत एव न बन्धोऽस्य, ते हि बन्धस्य कारणम् ॥ २ ॥" तथा सम्यग्दृष्टेः रागादिभावानामभावेन तद्बन्धाभावात्, केवला निर्जरैव, यथा "विषमुपभुञ्जानो वैद्यः पुरुषो न मरणमुपयाति। पुद्गलकर्म्मण उदये यथा भुंक्ते नैव बध्यते ज्ञानी ॥ १ ॥" इत्यादि समयसारवाक्यानि समीक्ष्य सम्यग्दृष्टेरविरतत्वात्, अभक्ष्यात् द्रव्यतोऽप्यविरतः सम्यक्त्वे निश्चयेन प्राप्तेऽबन्धकोऽस्मीति धिया व्रतमार्गस्य व्यवहारेणापि अस्पर्शी-व्रताचरणान्यस्पृशन् न दानं तपो ब्रह्म वा करोति, तत्कालापेक्षया वर्त्तमाना, व्रतानां पञ्चमगुणस्थान एव औचित्यादित्याशयः, तेन स्वकृतग्रन्थेऽपि तद्व्यवस्थापना यथा दया दान पूजादिक विषयकषायादि दोउ कर्म्म भोग पे दुहुं का एक पेतुहैं। ज्ञानी मूरष करमकरत दोष एकसे परिणामभेद न्यारो न्यारो रस दैंतुहे। ज्ञानवंत करणी करै पैं उदासीनरूप ममता न धरैं ता ते निर्जराको हेतु है, वह करतूति मूढ करे पैं मगनरूप अंध भयो ममतासुं बंधफल लेतु है ॥ १ ॥ सीलतपसंजमविरति दान पूजादिक अथवा असंजमकषाय विष भोगे हैं, कोऊ सुभरूप कोऊ असुभरूप मूलवस्तु विचारत दुविधकर्म्म रोग है। एसी बंधपद्धति बखानी वीतरागदेव आतमधरममे करम त्याग जोग है। ओजल के तरैया रागद्वेष को हरैया महामोख के करैया एक सुद्ध उपयोग है ॥ २ ॥ कोऊ शिष्य कहे स्वामी अशुभक्रिया अशुद्ध शुद्ध(भ) क्रिया सुद्ध तुम ऐसी क्यों ने वरनी। गुरु कहे जबलो क्रिया के परिणाम रहे तब लो चपलउपयोग जोग धरनी। थिरता न आवे तोलो सुद्ध अनुभौ न होइ याते दोउ क्रिया मोक्ख पंथ की कतरनी। बंधकी करैया दोउ द्रहुमें न भली कोउ बाधक विचारि में निषिद्ध कीनी करनी ॥ ३ ॥ लीन भयो ववहारमें उ, कति न उपजे कोइ। दीन भयो प्रभु पद जपे, मुकति

कहांसे होइ ॥ ४ ॥ बहुविध क्रिया कलेस सौं, सिव पद लहै न कोइ । ज्ञानकला परगास सौं, सहज मोखपद होइ ॥ ५ ॥ करनी हितहरनी सदा, मुकति वितरनी नांहि । गती बंध पद्धति विषै, सनी महादुष मांहिं ॥ ६ ॥ जे विवहारी मूढ नर, परजय-बुद्धि जीव। तिनकौं बाहिज क्रिया कौ, है अवलंब सदीव ॥७॥ जैसे मुगध धान पहिचाने, तुपतंदुलकौं भेद न मानैं । तैसें मूढमती विवहारी, लखै न बंधमोखविधि न्यारी ॥८॥ कुमती बाहिजदृष्टि सौं, बाहिजक्रिया करंत। मानें मोखपरंपरा, मनमें हरख धरंत ॥९॥" इत्यादिव्यवहारक्रियानिषेधकानि वाक्यानि कियन्ति दर्श्यन्ते ?, यद्यपि मूलग्रन्थे स्याद्वादज्ञानपराणि व्यवहारक्रियासूत्राणि सन्ति, परं तानि नास्य साधकव्यवहारतया परिणतानि, किन्तु तन्निषेधकान्येव, यत्तु 'ज्ञानक्रियाभ्यां मोक्ष' इति प्राचां सूत्रं तत्रापि क्रियाशब्देन ज्ञानपरिणतिलक्षणाध्यात्मिकक्रियैवेत्यैकान्तिकपक्षस्यैवाश्रयणं, न पुनर्व्यवहारक्रियास्थापनम्, एतेन- 'जो विनु ज्ञान-क्रिया अवगाहै, जो विनु क्रिया मोक्षपद चाहै । जो विनु मोष कहैं मे सुखिया, सो नर मूढन मांहै मुखिया ॥ १ ॥' इति क्रिया-स्थापनमस्त्येवेति कस्याप्याशंका सापि निरस्ता । अथ कथं-'अब बरनौं इकईस गुन, अरु बावीस अभक्ष्य। जिनके संग्रह त्यागसौं, सोहे श्रावकपक्ष ॥ १ ॥' इत्यादि नाटकग्रन्थे गुणस्थानकप्रतिबद्धा द्रव्यभावक्रियाव्यवस्थापनेति चेत्, कथनमात्रमेतत्, शुकस्य रामपाठवत्, न श्रद्धाविषयं, कथनमपि गतानुगतिकन्यायेन, प्राचां श्वेताम्बरदिगम्बराणां शास्त्रकाराणां तथाप्रवृत्तेः, यदि च स्वमते तथा प्ररूपणा श्रद्धानं नाऽभविष्यत्तर्हि तत्पाक्षिकः कश्चिन्मतप्रवृत्तेरारभ्य इयत्कालपर्यन्तं ब्रह्मचर्यं विशेषतः षष्ठाष्टमादितपः प्रतिक्रमणपौषधसामायिकाद्यनुष्ठानं रात्रिभक्षणाद्यभक्ष्यप्रत्याख्यानादि वाऽकरिष्यदिति विपक्षे बाधकः तर्कः, यत्तु कालान्तरे तद-

नुसारिणः केचित्तथा प्रत्याख्यानवन्तो जायन्ते तदपि लोकानुगत्यैव, न पुनस्तन्मतानिश्रया इत्यलं विस्तरेणेति गाथार्थः ॥ १३ ॥ अथ नटस्य विश्रामाय पात्राणां समाजः,—

**णाणी सया विमुत्तो अज्झप्परयस्स निज्जरा विउला । कुंयरपालप्पमुहा इय मुणिउं तम्मए लग्गा ॥ १४ ॥**

**ज्ञानी सदा विमुक्तोऽध्यात्मरतस्य निर्जरा विपुला । कुमारपालप्रमुखा इति मत्वा तन्मते लग्नाः ॥ १४ ॥**

'ज्ञानवान् स्वरसतोऽपि यदि स्यात्, सर्वरागरसवर्जनशीलः। लिप्यते सकलकर्म्मभिरेष, कर्म्ममध्यपतितोऽपि ततो न ॥१॥' इत्यादि समयसारे ज्ञानिनः साक्षान्मुक्तत्वकथनान्युपलभ्य अध्यात्मज्ञानवतो निर्जराऽपि विपुलेत्यवमृश्य तन्मते कुमारपालवणिग्जातीयप्रमुखा वणिजो लग्नाः- तत्पाक्षिका जज्ञिरे इति गाथार्थः ॥ १४ ॥ अथ भरत ऊर्ध्वमुखं कृत्वा पश्यति,—

**वणवासिणो य नग्गा अट्ठावीसइगुणेहिं संविग्गा । मुणिणो सुद्धा गुरुणो संपइ तेसिं न संजोगो ॥ १५ ॥**

**वनवासिनश्च नग्ना अष्टाविंशतिगुणैः संविग्नाः । मुनयः शुद्धा गुरवः सम्प्रति तेषां न संयोगः ॥ १५ ॥**

'पंच महाव्रत पालै ५ पंच समिति संभालै १० पंच इंद्री जीत भयौ १५ भोगी चिंतवैं न कौं १६ ॥१॥' षडावश्यक दर्वित भावित साधै २२ प्रासुकधरामें एक आसन है सैनकौ २३ । मंजन न करैं २४ लुंचे तन २५ वस्त्र मुंचै २६ त्यागै दंतवनपै सुगंध-स्वासावैनकौ २७ ॥ ठाढौ करखै आहार, लघु भुंजी २८ एकवार। अढाईसमूलगुनधारी जती जैन कौ ॥ १ ॥ इत्यष्टाविंशतिगुणवान् मुनिः ज्ञानवान् वनवासी नग्नः स एवास्माकं गुरुः संविग्नः-संसाराद् भीतः, बहुवचनं पूज्यत्वसूचकं स्थविरकल्पजिनकल्पादि-

मुनिभेदबाहुल्यख्यापकं वा, 'सम्प्रति' दुष्पमाकाले तादृशगुरुसंयोगो नास्ति, दृश्यमानास्तु मुनयो न गुरवः, तादृग्गुणाभावात्। अत्र यद्यपि दिगंबरपाक्षिका भट्टारका एव प्रतिविधातारः, तथापि दृश्यमानकियद्भूमण्डलावच्छेदेन मुनित्वनिषेधस्यातिप्रसंगनिवारणाय प्रतिविधीयते, ननु भो ! बाणारसीदास ! त्वं साम्प्रतीनानां ज्ञातमंडले विहरमाणानां लुंचनादिबाह्यक्रियाः कुर्वाणानां यतीनां यतित्वं कथं न श्रद्धासि ?, यथोक्तगुणाभावादिति चेत् कथं तन्निर्णयः, प्रत्यक्षाच्चेत् किं सर्वमुनिगुणानां सर्वभेदैरभावः कतिचिद्भेदैर्वा?, नाद्यः, कतिचिद्भेदानां व्रतसमितिलुंचनादीनां प्रत्यक्षत एवोपलब्धेः, त्वयैव स्वकृतनाटकग्रन्थे-'ग्रंथ रचै चरचे सुभपंथ लखै जगमे ववहार सुपत्ता. साधि संतोष अराधि निरंतर देइ सुसीख न लेइ अदत्ता। नंगधरंग फिरै तजि संग छकै सरवंग सुधारस मत्ता, ए करतूति करे सठपैं समुजे न अनातम आतम सत्ता ॥ १ ॥ केई मिथ्यादृष्टिजीव धरैं जिनमुद्रा भेष क्रिया मैं मगन रहै कहै हम जती है। अतुलअखंड मलरहित सदा उदोत ऐसे ज्ञानभावसौं विमुख मूढमती है। आगम संभाले दोष टालै विवहार भालै पालै व्रत यद्यपि तथापि अविरती है। आपुकौं कहावै मोखमारगके अधिकारी मोख सो सदैव रुष्ट दुष्ट दुर्मती है ॥ २ ॥' इत्यादिना प्रत्यक्षतस्तद्गुणाचरणाया दृश्यमानत्वेनोक्तत्वाच्च, अथैतेषां बाह्यवृत्त्यैव तत्तद्गुणदर्शनं न पुनरंतर्वृत्त्येति चेत् न, अन्तर्वृत्तेः केवलिगम्यत्वात्, तत्तच्छ्रद्धालूनां यत्किंचिदुत्तरगुणाभावेऽपि मूलान्वेषितया यतित्वप्रतिपत्तेश्च, अश्रद्धालूनां बहुतरगुणवत्त्वेऽपि यत्किंचिच्छिद्रपुरस्कारेण गुणानां गौणत्वमाधाय यत्किंचिद्गुणाभावं मुख्यतया निर्दिशतामयतित्वप्रतिपत्तेरकिंचित्करत्वात्, कटुकगृहस्थवत्, अत एव न द्वितीयः, कतिचिद्भेदः सर्वमुनिगुणानां पुलाकबकुशकुशीलानां श्रीभगवत्यादिसूत्रे तथा श्रीतत्त्वार्थसूत्रे प्रतिपादितानां परस्परमभावेऽपि चारित्रप्रतिपत्तेः, यदुक्तम्- 'उत्तरगुणभावनापेतमनसो व्रतेष्वपि क्वचित्

कदाचित् परिपूर्णतामपरिप्राप्नुवन्तोऽविशुद्धपुलाकसादृश्यात् पुलाकाः १ नैर्ग्रन्थ्यमुपस्थिता अखण्डव्रताः शरीरोपकरणविभूषणानुवर्त्तिनः ऋद्धियशःकामाः सातगौरवमाश्रिता अविविक्तपरिवाराः संघाटकयुक्ताः छेदशबलत्वं—मलिनचारित्रत्वं तद्युक्ता बकुशाः २, कुशीला द्विविधाः-प्रतिसेवनाकुशीलाः कषायकुशीलाश्च, तत्र अविविक्तपरिग्रहाः परिपूर्णमूलगुणाः कथंचिदुत्तरगुणविराधिनः प्रतिसेवनाकुशीलाः, ग्रीष्मे जंघाक्षालनादिसेवनवत् उदके दण्डरेखावत् संज्वलनमात्रतन्त्राः कषायकुशीलाः ३, ऊर्ध्वं मुहूर्त्तादुत्पद्यमानकेवलज्ञाना निर्ग्रन्थाः ४ केवलिनः स्नातकाः ५, एते प्रकृष्टाप्रकृष्टमध्यमचारित्रभेदे सत्यपि नैगमनयेन सामान्यग्रहात् पंचापि निर्ग्रन्थाः, निर्ग्रन्थशब्देन सम्यग्दर्शनं, भूषावेषायुधरहितत्वसामान्यात् सर्वे निर्ग्रन्था" इति, "प्रतिसेवनायां पंचानां मूलगुणानां सरात्रिभोजनानां पराभियोगाच्छ्रावकाद्युपकारधिया बलादन्यतमं सेवमानोऽत्र पुलाकः, तथा बकुशो द्विविधः-उपकरणबकुशः शरीरबकुशश्च, तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्रपरिग्रहयुक्तो बहुविशेषोपयुक्तोपकरणाकांक्षी (उपकरणबकुशः) शरीरबकुशः तत्संस्कारप्रतिकारसेवी, कषायकुशीलनिर्ग्रन्थस्नातकानां न प्रतिसेवा, लिंगमेषां द्रव्यभावभेदाद् द्विधा, भावलिंगं प्रतीत्य सर्वे- पंचापि निर्ग्रन्था लिंगिनो, द्रव्यलिंगं प्रतीत्य भाज्याः, पुलाकस्य उत्कृष्टा गतिः सहस्रारे बकुशप्रतिसेवनाकुशीलयोरारणाच्युतयोः, कषायकुशीलनिर्ग्रन्थयोः सर्वार्थसिद्धौ, (जघन्या तु) सर्वेषामपि सौधर्म्मकल्पे, एषामसंख्येयानि संयमस्थानानि, स्नातकस्यैकं संयमस्थानं, निर्ग्रन्थस्यासंख्येयानि, इति भावनासंग्रहे, कालादिवैषम्याद्भाववैषम्यस्य सार्वजनीनत्वात् इदानींतनयतीनां कतिचिच्छेदैर्मुनिगुणाभावेऽपि यतित्वाव्याहतेश्च, किंच- यदि दृश्यमानमुनीनां मुनित्वाभावांगीकारे तीर्थस्यैव व्यवच्छेदात् पंचमारकपर्यन्तं यावच्चारित्रप्रतिपादकः सिद्धान्तोऽपि व्याकुप्येत, देशान्तरे मुनिसद्भावस्वीकारे न प्रकोपश्चेत् तत्रापि कालवैषम्यात् मुनीनां

एताद्दशस्यैव स्वरूपस्य प्रतिपत्तेः किं मृगतृष्णायां जलाशया ?, किंच—देशान्तरस्थानानां मुनीनां प्रतिपत्तावपि तव तद्गुरुत्वेऽतिप्रसंगो, गृणाति धर्म्मोपदेशं गुरुरिति व्युत्पत्त्या यदुक्तेर्बोधिलाभस्तस्यैव गुरुत्वं तत्त्वात्, न कालान्तरदेशान्तरविप्रकृष्टस्य, अपिच-अनार्यदेशेषु तीर्थंकरादित्रिषष्टिशलाकापुरुषाणां न जन्म नापि धर्म इत्यक्षरलाभः, तर्हि कुतस्तरां तत्र यतिसम्भावनापि ?, अथ अयोध्यादिआर्यक्षेत्रेषु तद्विहारः सम्भवत्येवार्यक्षेत्रत्वादिति चेदायातोऽसि स्वयमेव मार्गं, तत एव हेतोरेतन्मण्डलेऽपि तद्विहारस्य सिद्धिः, यदि सर्वथाऽत्र मुन्यभाव एव प्रतिपत्तव्यस्तर्हि अयोध्यादिक्षेत्रे तथैव कालक्षेत्रयोरैक्यात् तत्र मुनेरस्तित्वेऽत्र च नास्तित्वे न किंचिन्नियामकं लभ्यते, अथात्रत्यानां प्रत्यक्षतः सपरिग्रहाणां निर्ग्रन्थत्वं कुतः श्रद्धीयत इति चेत्, निष्परिग्रहाणामेव श्रद्धीयतां, नात्रास्माकमत्याग्रहो, दृश्यन्ते च बहवो जैना यतयो निष्परिग्रहा अपि, न च धर्म्मोपकरणमात्रनिष्ठितमतीनां परिग्रहित्वमेवेति वाच्यम्, स्वयमेव स्वकृतग्रन्थे तदुक्तेः, यथा कवित्तबन्धसमयसारे-'पूर्वकर्म्म उदै रस भुंजै, ज्ञान मगन ममता न प्रयुंजै। उरमे उदासीनता लहियै, युं बुध परिगहवंत न कहियै ॥ १ ॥ अमृतचन्द्रोऽप्याह-'अपरिग्गहो अणिच्छो भणिदो णाणी य णेच्छइ अहम्मं। अपरिग्गहो अहम्मस्स जाणगो तेण सो होइ ॥ १ ॥' इच्छा परिग्रहः, तस्य परिग्रहो नास्ति यस्येच्छा नास्ति, इच्छा त्वज्ञानमयो भावः, अज्ञानमयो भावस्तु ज्ञानिनो नास्ति, ज्ञानिनो ज्ञानमय एव भावोऽस्ति, ततो ज्ञानी अज्ञानभावस्य इच्छाया अभावात् अधर्म्मं नेच्छति, तेन ज्ञानिनोऽधर्म्मः परिग्रहो नास्ति, ज्ञानमयस्यैकभावस्य भावाद् धर्म्मः केवलः, ज्ञायक एवायं स्यात्, एवमेव चाधर्म्मपदपरिवर्त्तनेन रागद्वेषक्रोधमानमायालोभकर्म्मनोकर्ममनोवचनकायश्रोत्ररसनघ्राणचक्षुःस्पर्शनसूत्राणि षोडश व्याख्येयानि, अनया दिशाऽन्यान्यपि ऊह्यानि, न च 'थविरकलपी जिनकलपी दुविध मुनि दोऊ वनवासी दोऊ

नगन रहतु है, दोऊ अट्ठाइस मूलगुनके धरैया दोउ सरव वस्त्र त्यागी ह्वै विरागता गहतु है । थविरकलपी ते जिन के शिष्य शाखा होंहि बैठकै सभामें धर्म्मदेशना कहतु है, एकाकी सहज जिनकलपी तपस्वी घोर उदै कीम रोरसौं परीसह सहतु है ॥ १ ॥ इत्याद्युक्तेर्वनवासित्वेनैव यतित्वं, नान्यथेति वाच्यम्, संयतेन पापजनावासाः तथा गीतवाहनायुधादिभूमयः संक्लेशस्थानानि वर्ज्यानि, अकृत्रिमा गिरिगुहादयः कृत्रिमाः शून्यागारादयः अनात्मोद्देशानिर्वर्त्तिता निरारम्भा आवासाः सेव्या इति भावनासंग्रहे । तथा स्वयमेव वनवासित्वाऽनैयत्येनोक्तेः, यदाह कवित्वं- 'जिनके सुमति जागी भोग सौं भये विरागी परसंगत्यागी जे पुरुष त्रिभुवनमें, रागादिक भावनि सौं जिनकी रहति न्यारी कबहुं मगन ह्वै न रहै धामधनमे । जे सदैव आपुकौं विचारिं सरवंग सुद्ध जिनके विकलता न व्यापैं कहुं मन में, तेइ मोखमारग के साधक कहावै जीवभावै रहौ मंदिरमें भावे रहौ वन मे ॥ १ ॥' अन्यत्रापि, वनेऽपि दोषाः प्रभवन्ति रागिणां, गृहेऽपि पंचेन्द्रियनिग्रहस्तपः । अकुत्सिते वर्त्मनि यः प्रवर्त्तते, विमुक्तरागस्य गृहं तपोवनम् ॥ १ ॥' अत एव भरतचाक्रिणः स्वगृह एव केवलोत्पत्तिः प्रतीता, एवं प्रमादपराणां सरागाणामपि कथं संयमप्रतिपत्तिरित्यपि न श्रद्धेयं, 'धरम राग विकथा वचन निद्रा विषय कषाय । पंच प्रमाद दसा सहित परमादी मुनिराय ॥ १॥' इति । तथा- 'थविरकल्पधर कछुग सरागी' इति स्ववचनादेव, एवं च स्ववचसा किंचिद्विषयकषायभाजां यतित्वव्यवस्थापनेऽपि नेदानींतनयतिषु तत्प्रतिपत्तिः, तेन सिद्धं नाटकग्रन्थे गुणस्थानादि द्रव्यभावक्रियास्थापनं कथनमात्रमेव, न श्रद्धाविषयमिति प्रागेवोक्तम् ननु मुनीनां परिग्रहग्रहणं वालाग्रकोटिमात्रमपि नास्ति, यतः श्रीपाक्षिकसूत्रे- 'से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं परिग्गहं परिगिण्हिज्जा,' इत्यादि, दिगम्बरनये सूत्रप्राभृते कुन्दकुन्दाचार्योक्तमपि- 'जहजाय-

रूवसरिसो तिलतुसमित्तं न गिहइ हत्थेसु । जइ लेइ अप्पबहुयं तओ पुणो जाइ णिग्गोदं ॥ १ ॥' तेन परिग्रहं प्रत्याख्यातवतां धर्म्मोपकरणमात्रमपि न रक्षणीयं, व्रतभंगाद्, एकस्मिन् व्रते भग्ने परेषामपि भंगाच्चेति कथं साम्प्रतीनदृश्यमानमुनिषु निर्ग्रन्थत्वश्रद्धा जायत इति चेत्, न, धर्म्मोपकरणानां पिच्छिकाकमंडलुवसतिशरीरान्नपानपुस्तकशिष्यादीनां तथा वस्त्रपात्रकम्बलादीनामपि परिग्रहात्, यदुक्तं दशवैकालिकसूत्रे षष्ठेऽध्ययने--"जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । तंपि संजमलज्जट्ठा, धारेंति परिहरंति य ॥ १ ॥ न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा । मुच्छा परिग्गहो वुत्तो, इय वुत्तं महेसिणा ॥ २ ॥" श्रावकाचारेऽमृतचन्द्राचार्योक्तिरपि दिगम्बरनये—"या मूर्च्छा नामेयं विज्ञातव्यः परिग्रहो ह्येषः । मोहोदयादुदीर्णो मूर्च्छा तु ममत्वपरिणामः ॥ १ ॥ मूर्च्छालक्षणकरणात् सुघटा व्याप्तिः परिग्रहत्वस्य । सग्रन्थो मूर्छावान् विनापि किल शेषसंगेभ्यः ॥ २ ॥ यद्येवं भवति तदा परिग्रहो न खलु कोऽपि बहिरंगः । भवति नितरां यतोऽसौ धत्ते मूर्छानिमित्तत्वम् ॥ ३ ॥ एवमतिव्याप्तिः स्यात् परिग्रहस्येति चेद्भवेन्नैवम् । यस्मादकषायाणां कर्म्मग्रहणे न मूर्छाऽस्ति ॥ ४ ॥" अथ कथमेतन्मुनेः पिच्छिकाकमण्डलुनी अपि न स्तो, यथाजातरूपत्वस्यैव भणनादिति चेत् न, पिच्छिकामन्तरा आदाने निक्षेपे पुस्तकादेः सूक्ष्माणामचक्षुर्गोचराणां कुन्थ्वादिजीवानामप्रमार्जनया मुनीनां हिंसाप्रसक्तेः, मुनेरन्यस्य वा नग्नस्य अनिर्णयान्मुनिबुद्ध्या



---

१ परं मत्वा सर्वं परिहृतमशेषं श्रुतविदा, वपुः पुस्ताद्यास्ते तदपि निकटं चेदिति मतिः । ममत्वाभावे तत् सदपि न सदन्यत्र घटते, जिनद्राज्ञाभंगो भवति च हठात् कल्मषऋषेः ।१। इतिपद्मनन्दिग्रन्थे मूर्च्छा परिग्रह इतिवत्त्वार्थे

तत्प्रमाणकरणे—"अस्संजदं ण वंदे वत्थविहीणोवि सो ण वंदेज्जो । दुण्णिवि हुंति समाणा एक्कोऽवि ण संजओ होइ ॥ १ ॥" इति प्राभृतवचनान्मुनीनां तथा श्राद्धानां सम्यक्त्वभंगदोषाश्च अन्यबुद्ध्या मुनावप्यनादरे आशातनादोषोऽपि, तत एव कुन्द-कुन्दाचार्यस्य महाविदेहगमने नभश्चारेऽन्तरा पिच्छिकापतने गृध्रपिच्छापिच्छिकाग्रहणाद् गृध्रपिच्छ इति नाम, तेन तस्या आवश्यकत्वं, अथ पुराणवार्त्तायाः पूर्वापरविरुद्धत्वात् न विश्वासः, अध्यात्मशास्त्रे तु पिच्छिकादिग्रहो मुनेर्नास्तीति तदपि न पुराणप्रामाण्यस्य प्रागेव साधितत्वात् प्रवचनसारादावपि तदुक्तेश्च, यदुक्तं तत्त्वदीपिकायां प्रवचनसारवृत्तावमृतचन्द्रेण—"अरसमरूवमगंधं अव्वत्तं चेदणागुणमसद्दं । जाणमलिंगग्गहणं जीवमणिद्दिट्ठसंठाणं ॥ १ ॥" एतद्गाथाव्याख्यायां न लिंगानां धर्म्मध्वजानां ग्रहणं यस्येति, बहिरंगयतिलिंगाभावस्य जीवस्येति, अत्र धर्म्मध्वजशब्देन किं न तावज्जातरूपता, तस्या ग्रंथिलादि-षूपलब्धेर्लिंगत्वाघटनात्, लिंगं तु तदेव यदन्येभ्यो व्यावृत्तिकृत्, 'व्यावृत्तिहेतुर्लक्षण'मितिवचनात्, न चात्र देशविरतः, तस्य यतिशब्दा-नभिधेयत्वात्, तेन लिंगानामिति बहुवचनात् पिच्छिकादिवस्तूनामेव लिंगत्वमिति, यदुक्तं बोधप्राभृतवृत्तौ—"शिरः कूर्चश्म-श्रुलोचो मयूरपिच्छधरः कमण्डलुकरोऽधःकेशरक्षणं जिनमुद्रा सामान्यत" इति जिनमुद्राधिकारे, एवं पुनः प्रवचनसारे—"छेदो जेण ण विज्जइ गहणविसग्गेसु सेवमाणस्स । समणो तेणिह वट्टदु कालं खित्तं वियाणित्ता ॥ १ ॥" इति व्याख्यायां यदा हि श्रमणः सर्वोपधिप्रतिषेधमास्थाय परमसुपेक्षासंयमं प्रतिपत्तुकामोऽपि विशिष्टकालक्षेत्रदेशावच्छिन्नशक्तिर्न प्रतिपत्तुं क्षमते तदाऽ-पकृष्य संयमं प्रतिपद्यमानस्तद्बहिरंगसाधनमात्रमुपधिमातिष्ठते, स तु तथा स्थीयमानो न खलूपधित्वाच्छेदः, प्रत्युत छेदप्रतिषेध एव, यः किलाशुद्धोपयोगाविनाभावी स च्छेदः अयं तु श्रामण्यपर्यायसहकारिकारणशरीरवृत्तिहेतुभूताहारनीहारादिग्रहणविसर्जनविषय-

च्छेदप्रतिषेधार्थमुपादीयमानः सर्वथा शुद्धोपयोगाविनाभूतत्वात् छेदप्रतिषेध एवेति वृत्तिः, एवमग्रिमगाथायामपि "अप्पडिकुट्ठं उवधिं अपत्थणिज्जं असंजदजणेहिं । मुच्छादिजणणरहियं गिण्हदु समणो यदि वियप्पं ॥१॥" यः किलोपधिः स सर्वथा बन्धासाधकत्वादप्रतिक्रुष्टः, संयमा दन्यत्रानुचितत्वाद्, असंयतजनाप्रार्थनीयो, रागादिपरिणाममन्तरेण धार्यमाणत्वात् मूर्च्छादिजननरहितश्च भवति स खलु अप्रतिषिद्धः, अतो यथोदितस्वरूप एवोपधिरुपादेयो, न पुनरल्पोऽपि यथोदितावपर्यस्त स्वरूपः' इति वृत्तिः। न चात्र गाथाप्रारम्भे अथ कस्यचित् कदाचित् क्वचित् कथंचित् कश्चिदुपधिरप्रतिषिद्धोऽप्यस्तीत्यपवादमुपदिशन्नाह–'छेद' इति, एतद्रूपवृत्तिकारवचनादपवादोऽयं हेय एवेति वाच्यम्, आगमस्य उत्सर्गापवादद्वयसादरत्वात्, यदुक्तं प्रवचनसारवृत्तौ "तत्र श्रेयानपवादनिरपेक्ष उत्सर्ग इति, परस्परं-सापेक्षोत्सर्गापवादरूपत्वात् स्याद्वादस्येति, एवं-"भत्ते वा खमणे वा आवसधे वा पुणो विहारे वा । उपाधिम्मि वा णिबंधं णेच्छइ समणंमिवि कधम्मि ॥१॥" श्रामण्यपर्यायसहकारिकारणशरीरवृत्तिहेतुमात्रत्वेनादीयमाने भक्ते तथाविधशरीरवृत्त्यऽविरोधेन शुद्धात्मद्रव्यनीरङ्गनिस्तरङ्गविश्रान्तिसूत्रानुसारेण प्रवर्त्तमाने क्षपणे नीरङ्गनिस्तरङ्गप्रसिद्ध्यर्थमभ्यास्यमाने गिरीन्द्रकन्दरप्रभृत्यावसथे यथोक्तशरीरवृत्तिहेतुमार्गणार्थमारभ्यमाणे विहारकर्म्मणि श्रामण्यपर्यायसहकारिकारणत्वेनाप्रतिषिद्ध्यमाने केवलदेहमात्रे उपधावन्योऽन्यबोध्यबोधकभावमात्रेण कथंचित् परिणते श्रमणे शब्दपुद्गलोल्लाससंचलनकश्मलितचिद्भित्तिभागायां शुद्धात्मद्रव्याविरुद्धायां कथायां च एतेष्वपि तद्विकल्पाविचित्रितचित्तभित्तितया प्रतिषेध्यः प्रतिबन्ध" इति तद्वृत्तिः, न चात्रोपधिशब्देन देह एवेतिबोध्यम्, "हवदि ण हवदि व बंधो मदेहि जीवेहि कायचेट्ठम्मि। बंधो धुवमुवधीदो इति सवणा छड्डिया सव्वं॥१॥"

२ छेदस्तु हिंसैव शुद्धोपयोगजन्या ।

इत्यत्र देहादुपधेर्भेदाद्,अन्यथा केवलिनामपि देहसद्भावात् बन्धप्रसङ्गः, अत एव पिच्छिकादि कश्चिदुपधिं विना सामान्यमुनेः छेद एवेति सूक्तम्, कमण्डलु विना शौचाभावात्, न च शौचं मलोत्सर्गवत्तपस्विनां स्वत एवेति वाच्यं, नियामकाभावात्, श्लेष्ममूत्रादिशौचस्य कमण्डलुजलेनैवोपपत्तेश्च, तत एव दर्शनप्राभृतवृत्तौ–"ये मयूरपिच्छं कमण्डलु च न मानयन्ति शासनदेवता न पूजनीया इति वदन्ति महापुराणादिकं किल विकथा तीर्थंकरप्रतिमां न पुष्पादिना पूजयन्ति, पंचमकाले किल मुनयो न सन्तीति स्वीकुर्वन्ति ते मिथ्यादृष्टय" इति, मूलाचारेऽपि–"णाणुवहिं संजमुवहिं सउचुवहिं अण्णमवि उवहिं वा । पयदं गहणिक्खेवा समिदी आदाणणिक्खेवा ॥ १ ॥ णाणुवहिं–ज्ञानस्य श्रुतज्ञानस्य उपधिः-उपकरणं ज्ञाननिमित्तं पुस्तकादिः, संयमस्य-पापक्रियानिवृत्तिलक्षणस्य उपाधिः—उपकरणं संयमोपाधिः प्राणिदयानिमित्तं पिच्छिकादिः, शौचस्य-पुरीषमलापहरणस्योपाधिः—उपकरणं शौचो पधिः, मूत्रपुरीषादिप्रक्षालननिमित्तं कुण्डिकाद्रव्यं, ततो द्वन्द्वः, 'तेषां' ज्ञानाद्युपधीनां 'अण्णमवि' अन्यस्यापि संस्तरादिकस्य उपधेर्वा-उपकरणस्य संस्तारादिनिमित्तस्य, प्राकृतत्वाद्विभक्तिव्यत्यये सर्वत्र षष्ठी, 'पयदं' प्रयत्नेनोपसंयोगं कृत्वा ग्रहणं ग्रहो निक्षेपणं निक्षेपस्तौ आदाननिक्षेपो, ज्ञानोपधिसंयमोपधिशौचोपधीनां अन्यस्य चोपधेर्यत्नेन यौ ग्रहनिक्षेपौ प्रतिलेखनपूर्वकौ सा आदाननिक्षेपा समितिर्भवतीत्यर्थ" इति तद्वृत्तिः' एवं च शास्त्रोक्त्या मुनेः पिच्छिकादिरुपाधिः श्रद्धेय एव, तं विना प्रतिपदं हिंसाप्रसंगेन निर्दयपरिणामवतो मुनित्वव्याघातात्, न च तस्य भावतः शुद्धत्वेन बह्वी निर्जरा

१ अत्र उपधिशब्देन मनोवाक्कायपुद्गलान् वदन्ति, तन्न अथ कस्यचित्कदाचिदित्यादिप्रागुक्तवृत्तिवाक्ये एतावत्किंशब्दप्रयोगानापत्तेः मनःप्रभृतीनां सर्वत्र सम्भवात्, आदाननिक्षेपसमितेः तीर्थंकरेऽपि पर्युषणाकल्पोक्त्या छाद्मस्थ्ये शौचार्थपात्रादिग्रह उक्तः

छेदादल्पो बन्धस्ततोऽनुकमात् केवलमिति वाच्यम्, तथा सति गृहस्थस्यापि सिद्धिरस्मन्मता अनायासादेव सिद्धा, बहिर्हिंसकत्वेऽपि भावतः शुद्ध्यैव तदुपपत्तेरिति न किंचिदेतत्, यदुवाच वाचकः- 'जन्तवो बहवः सन्ति, दुर्दर्शा मांसचक्षुषाम्। तेभ्यः स्मृतं दयार्थं तु, रजोहरणधारणम्॥ १ ॥ आसने शयने स्थाने, निक्षेपे ग्रहणे तथा। गात्रसंकुचने चेष्टं, तेन पूर्वं प्रमार्जनम्॥ २ ॥ तेन 'जहजायरूवेति' गाथाया इच्छारूपपरिग्रहनिषेधपरत्वमेव उन्नेयम्, अन्यथा बहुग्रन्थविरोधः, 'भत्ते वा खवणे वा' इत्यत्रापि निबन्धं-प्रतिबन्धं नेच्छति इत्येव तात्पर्यं, अन्यथा भक्तादेरपि परिग्रहप्रसंगात्, न चैतत्त्यागो दृष्टः श्रुतो वा, यदि च तस्यापि त्याग एवोचित इति मतं तदा दीक्षानन्तरं शरीरमपि त्याज्यं, मूर्च्छाप्रसंगात्, तथा च धर्म्मोपदेशशिष्यप्रवृत्त्याद्यभावेन तीर्थच्छेदान् मूलव्याहतिः, तत एव तिलतुषमात्रं धर्म्मोपकरणव्यतिरिक्तं मुनिना न ग्राह्यमिति तत्त्वार्थो गाथायाः अन्यथैव बुद्धः, यदुक्तं दर्शनप्राभृतवृत्तौ- यत्नेनानुमितोऽप्यर्थः, कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १ ॥' एतेन शरीरभक्तावसथादेरशक्यत्यागत्वात् न परिग्रहत्वमित्यपि प्रत्युक्तम्, उत्सर्गेण तत्त्यागस्यापि शक्यत्वात्, पाक्षिकसूत्रेऽपि- 'इच्छा मुच्छा य गेही य, कंखा लोभे य दारुणे' इत्यनेन इच्छाया एव परिग्रहत्वम्, अथ यदि बाह्यवस्तुग्रहणं स्यात्तदा इच्छाया आवश्यकत्वमेव, तस्याः सत्त्वे परिग्रहत्वमेवेति चेत्, न, आहारविहारधर्म्मोपदेशशिष्यसंग्रहादिषु यत्याचारेषु व्यभिचारात्, न च बाह्यवस्तुग्रहरूपं कारणं इच्छारूपं कार्यं जनयत्येवेति नियमः, मृत्तिकादिर्घटादिमिव, किन्तु आवश्यककार्यजनने अन्येषामपि कारणानां सापेक्षत्वात्, तथाऽत्रापि, किंच-उपकरणग्रहस्य इच्छाजननेऽपि न महाव्रताभावः, संज्वलनलोभसहकृतेच्छाया महाव्रताघातकत्वात्, अत एव

१ "अपरिग्गहो अणिच्छो" इत्यादिप्रागुक्तसमयसारोक्त्या बाह्यकारणे सत्यपि इच्छाया अभावात्

प्रमत्तगुणे एकाशीतिप्रकृतीनामप्रमत्ते षट्सप्ततिप्रकृतीनामुदयः स्पष्टः, एतेन यत्किंचिद्दोषपुरस्कारेण महाव्रताभावं साम्प्रतीन-देशावच्छेदेन विहरतां दृश्यमानमुनीनां साधयन्नास्तिको निरस्तः इति सिद्धं धर्म्मोपकरणस्यापरिग्रहत्वं, अथैवमस्तु पिच्छिकादि-धर्म्मोपकरणधारिणां यतित्वं, वस्त्रपात्रकम्बलादीनां तु साक्षात् परिग्रहत्वमेवेति, तद्धारणेऽपि यतित्वांगीकारेऽतिप्रसंगः, स्वर्ण-रूप्यादिधारिणामपि मुनित्वानुषंगादिति चेत् न, विकल्पासहत्वात्, तथाहि---- मुनेर्वस्त्राद्यनभ्युपगमः किं परिग्रहत्वेन पंचमव्रतविघातकत्वात् १ शोभाजनकत्वेन तुर्यव्रतविघातकत्वाद्वा २ जीवोत्पत्तिहेतुत्वेन क्षालनकर्म्मणा वा जीवनाशहेतुत्वेन आद्यव्रतविघातकत्वाद्वा ३ मूर्च्छाजनकत्वाद्वा ४ चौरादिभयहेतुत्वाद्वा ५ क्रोधादिहेतुत्वाद्वा ६ दुर्ध्यानहेतुत्वाद्वा ७ जिताचेलपरीषहो मुनिरितिवचनाद्वा ८ दंशमशकादिपरीषहासहनाद्वा ९ प्रवचनगौरवकारित्वाद्वा १० तीर्थंकरानुकाराद्वा ११ जिनकल्पानुकाराद्वा १२ सिद्धान्तेऽनुक्तत्वाद्वा १३, आद्येऽपि धारणामात्रेण मूर्च्छाजनकत्वेन वा ?, नाद्यः पिच्छि-काकमण्डलुपुस्तकादिभिर्व्यभिचारात्, द्वितीयेऽपि वस्त्रस्य मूर्च्छाजनकत्व स्पर्शमात्रेण १ ममेदमिति परिभुज्यमानत्वेन वा २?, नाद्यः, शरीरसम्पर्कमात्रस्य मूर्च्छाया अहेतुत्वाद्, अन्यथा देहस्पृग्भूमितृणशय्यापवनाश्रमादीनां मूर्च्छाजनकत्वेन परिग्रहस-द्भावात् न कस्यापि यतित्वं, न द्वितीयः शरीरे व्यभिचारात्, न च ममेदमिति परिभुज्यमानत्वेन शरीरं मूर्च्छाजनकं न भवतीति, तस्यान्तरंगत्वेन दुर्लभतया विशेषतस्तद्धेतुत्वात्, अतस्तद् दुस्त्यजं मुक्तिसाधनश्रामण्यसहकारि च वस्त्रं तु न तथेति चेन्न, प्रत्यक्ष-व्याहतेः, दृश्यन्ते च बहवोऽहिफेनवह्निप्रवेशैस्तत् त्यजन्त इति, तथाविधशक्तिविकलानां शीतातपदंशमशकबाहुल्येऽपि स्वाध्याया-द्युपष्टम्भकत्वेन वस्त्रस्यापि श्रामण्यसहकारित्वाच्च पिच्छिकादेरिव वस्त्रस्यापि संयमोपकारित्वमपि १। न मौलो द्वितीयः, आहारस्यापि

उपकरणा-नां स्थापना

शरीरशोभाजनकत्वेन तत्कारित्वाद्वनवासेऽपि क्वचन पुष्पादिसौरभ्याद् एकान्ततया वा तुर्यव्रतविघातसम्भवाच्च, अथ तादृग्-देहशोभाजनकं मुनिर्नाभ्यवहरति, न पुष्पवाटिकादिषु वसतीति चेदत्रापि समः समाधिः, जीर्णकुत्सितश्वेतत्वाद्युपलक्षितस्यैव चीवरस्यानुज्ञानात्, यदागमः-'परिसुद्धजुण्णकुत्थियथोवानियण्णभोगभोगेहिं। मुणिणो मुच्छारहिया संतेहिं अचेलया हुंति ॥१॥' एवं स्त्रीपश्वादिविविक्त एव वासो मुनीनामनुज्ञात इति, प्रत्युत नग्नत्वे विशिष्टस्त्रीणां दर्शनेन तासामात्मनश्च ब्रह्मव्रतविघात-एवेति २। न तृतीयः, आहारस्यापि कृमिगण्डूपदाद्युत्पत्तिहेतोस्तद्विरुद्धरसयोनिकजीवविनाशहेतोश्च त्याज्यत्वप्रसंगात्, शरीरा-दपि चेष्टयाऽऽवश्यंभाविजीवघाताच्च, वस्त्राणां क्षालनकर्म्मादि उत्सर्गतो निषिद्धमेव प्रथमांगे- 'नो रएज्जा नो धोएज्जा' इत्या-देशाद्, अपवादेन तत्करणेऽपि प्रायश्चित्तविशुध्द्युपदेशाच्च, प्रत्युत मुखवस्त्रिकादेरंशुकस्य मुखादिषु सम्पातिमजीवरक्षकत्वेनाद्यव्रतो-पकारित्वमपि प्रत्यक्षसिद्धम्, तदुवाच वाचकः- 'सन्ति सम्पातिमाः सत्त्वाः, सूक्ष्माश्च व्यापिनोऽपरे। तेषां रक्षानिमित्तं च, विज्ञेया मुखवस्त्रिका ॥ १ ॥' ननु श्वासेन जीवघात एव असिद्धः, आनपानवर्गणानां चागुरुलघुतया तदभावादिति चेत्, न, आनपानव-र्गणाभ्यः कार्यरूपश्वासस्याष्टस्पर्शित्वात्तत एव तद्विघात इति प्रावचनिकवृद्धाः, यथा हि इन्द्रियपर्याप्तिरन्तर्मौहूर्त्तिकी, कार्यरूपाणी-न्द्रियाणि गर्भवृद्धावयवसम्पत्तावेव, तद्वत्कार्यरूपस्य श्वासस्यान्यत्वादेवोपपत्तेः, श्वासरोगवत्, तथाऽनावृत्तमुखेन भाषमाणस्य मुखविवरे सहसा मक्षिकादिप्रवेशः तवाप्यध्यक्षसिद्धः, एतेन निःश्वासतोऽसंख्यातजीवात्मकवायुकायिकविराधनापि मुखवस्त्रेण निवार्यत इति ३। न तुर्यः, प्राग्दूषितत्वात् ४। न पंचमः, गर्त्तावटकण्टकसर्पसिंहादिज्वरातिसारादिभ्यो भोजनभेषजालाभादिभ्यो

१ भगवतीवृत्तौ एव 'आनन्ति इति पदेन अध्यात्मक्रिया उच्छ्वसन्तीत्यनेन बाह्यक्रियेति।

दुष्टजनेभ्यः पवनपावकपानीयादिभ्यश्चानेकधा शरीरहेतुकभयसम्भवात्तस्यापि त्यागयोगात्, तथा भोजनेऽप्यजीर्णादिभयं सम्भवत्येवेति तदपि परिहार्यं स्यात्, अथ तादृगजीर्णहेतुं भोजनं न करोत्येवेति चेदत्रापि तादृक्चौरग्राह्यचेलस्याननुज्ञानात्, मन्मतेऽनन्यभोगं त्वन्मतेऽसंयतजनैरप्रार्थनीयं वस्त्रं धार्यमित्यागमात्, साम्प्रतीनव्यवहारेण बहुमूल्यवस्त्रपरिभोगो यद्यपि मुनीनां दृश्यते तथाप्यपवादस्यापि मार्गत्वात् यावन्त उत्सर्गास्तावन्तः अपवादा इत्यागमोक्त्या यथालाभं परिभोगकर्तॄणां तेषां वसतिस्थानस्यापि राजयोगस्य तथा कुत्रिकापणलब्धदीक्षासामायिकरजोहरणपतद्ग्रहादेः रत्नकम्बलादेर्वा परिभोगवन्नैकान्तेन मुनित्वव्याघातः, तथा सति केवलश्राद्धैरेव न तीर्थं, 'न विणा तित्थं निग्गंथेहिं'न्ति प्रवचनात्, तीर्थच्छेदे गौरवं सेसकालं अववाओत्ति सिद्धान्तः, तथा च प्राप्तौ न हर्षस्तद्व्यपगमे न विषाद इत्याशयवतां मुनित्वं श्रद्धेयमेव, न चैतादृशाः सम्प्रति न सन्त्येवेति वाच्यं, परचेतोवृत्तीनामलक्ष्यत्वात्, दृश्यतेऽपि च कामक्रोधादिषु विचित्रोऽध्यवसायो जनानां, तद्वत्क्षोभेऽपीति पश्यतां सर्वं नाट्यं ५। न षष्ठः, वस्त्रापहारिणि क्रोधोत्पत्तिवत् कुत्सिताहारदातरि स्थाने सत्यपि तददातरि तन्निमित्तकविरोधकारिणि नग्नतानिमित्तकोपने प्रहारादिकारकेऽपि क्रोधोत्पत्तिराहारस्थानशरीरहेतुरस्त्येव, तथा च तत्त्यागोऽपि स्यान्न्याय्यः, एवं पुस्तकापहारेऽपि योज्यं, यतीनां क्रोधाद्यकरणे त्वत्रापि तुल्यता ६। न सप्तमः, संरक्षणानुबन्धिरौद्रध्यानस्य यथा वस्त्रेऽवश्यंभावोऽविनाभावाल्लोके समुपलभ्यस्तथा देहादिष्वपि ज्वलज्ज्वलनमलिम्लुचश्वापदाहिकण्टकविषादिभ्यः संरक्षणानुबन्धस्यावश्यंभावोऽपि तन्निमित्तमेव, वस्त्रादिसंरक्षणान्मुनीनां यदि शरीरे तदभावस्तर्हि कथं वस्त्रपात्रादिषु तद्भावः?, संयमार्थं यथाऽऽहारादिना तत्परिपालनं तथा वस्त्रस्यापीति प्रसिद्धेः प्रत्युत शुभध्यानहेतुत्वाच्च. यदत्र वाचकवाचः- 'सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये। तेषामुपग्रहार्थाय, स्मृतं चीवरधारणम्

॥ १ ॥ शीतवातातपैर्दंशैर्मशकैश्चापि खेदितः । मा सम्यक्त्वादिषु ध्यानं, न सम्यग् संविधास्यति ॥ २ ॥ तस्य त्वग्रहणे यत् स्यात्, क्षुद्रप्राणिविनाशनम्। ज्ञानध्यानोपघातो वा, महान् दोषस्तदैव तु ॥ ३ ॥ 'न चैवं शरीरहेतुकमाहारादानं तद्धेतुकं पात्रादानं तद्धेतुकं पात्रबन्धादानं, तथा शुभध्यानाय कल्पकादानं तद्धेतुकं च परिजनस्वर्णरूप्यवाहनाद्यादानमपीत्यतिप्रसंग इति वाच्यम्, स्थविरकल्पिकानां जघन्यतोऽपि चतुर्दशोपकरणानां नैयत्येन परिगणनस्यैवोत्सर्गात्, अपवादपदेनापि तज्जातीयत्वावधारणेन यथासंयमनिर्वाहमेव यतिकल्प्यवस्तुविधानोपदेशाच्च७ नाप्यष्टमः, जिताचेलपरीषहत्वं किं चेलाभावेनैव १ आहोश्विदेषणाशुद्धतत्परिभोगेनापि २ ?, आद्यश्चेज्जितक्षुत्परीषहो मुनिरित्यत्रापि आहाराभावः, तथा च व्रतग्रहणकाल एवानशनं प्राप्तं, तच्च तवाप्यनभीष्टं, द्वितीये त्वस्मत्पथस्यैव सिद्धिः ८। न नवमः, दंशमशकपरीषहं सोढुं समर्थानां कस्मिंश्चिन्निशीथिनीसमये वस्त्रत्यागेन तत्सहनमनन्तरायमेव, न पुनर्दिवसे तत्त्यागो गोचरादिप्रविष्टस्य मुनेरुचितः, तदा तु नग्नता लोकख्यापनायैव, न पुनः पारमार्थिकी, तदुक्तम्- 'संस्तरारोहणकाले महाव्रतमर्थयमानस्य आर्यस्य आचेलक्यलिंगविधाने-त्रिस्थानदोषयुक्तायाप्यापवादिकलिंगिने । महाव्रतार्थिने दद्याल्लिंगमौत्सर्गिकं तदा ॥ ३६ ॥ चर्मरहित १ अतिदीर्घ २ असकृदुत्थानशील ३ इति शिश्नदोषत्रयं, औत्सर्गिकं लिंगं नाग्न्यं । कौपीनेऽपि समूर्च्छत्वात्, नार्हत्यार्यो महाव्रतम्। अपि भाक्तममूर्च्छत्वात्, साटकेऽप्यार्यिकाऽर्हति ॥ ३७ ॥ भाक्तं-उपचारमहाव्रतमित्यर्थः । ह्रीमान्महर्द्धिको यो वा मिथ्यात्वप्रायबान्धवः । सोऽविविक्ते पदे नाग्न्यं, शस्तलिंगोऽपि नार्हति ॥ ३८ ॥ अपवादलिंगमिदं, स्त्रिया अपि लिंगविकल्पो, यथा "यदौत्सर्गिकमन्यद्वा, लिंगमुक्तं जिनैः स्त्रियाः । पुंवत्तदिष्यते मृत्युकाले स्वल्पकृतोपधेः ॥१॥" आशाधरश्रावकाचारे, यथा सत्यपि पिच्छिका दंशपरिषहे न प्रयुज्यते तथा वसनमपि, यथायोगं

उपकरणानां स्थापना

जीवरक्षणाय लोकानुवृत्तिरक्षणाय च द्वयमप्युपयोजकं चेति९। न दशमः, वस्त्राभावे प्रवचनलाघवस्यैवाध्यक्षसिद्धत्वात्, अत एवापवादवेषो वसन्तकीर्तिना मंडपदुर्गे म्लेच्छादीनां नग्नदर्शने उपद्रवकरणं वीक्ष्य चर्यादिवेलायां तट्टीसादरादिकेन शरीरमाच्छाद्य चर्यादिकं कृत्वा पुनस्तन्मुंचतीत्यादिरुपदिष्टः, तथा नृपादिवर्गोत्पन्नः परमवैराग्यवान् लिंगशुद्धिरहित उत्पन्नमेहनपुटदोषो लज्जावान् वा शीताद्यसहिष्णुर्वा तथा करोति सोऽप्यपवादलिंगवेषः प्रोच्यत इति इति दर्शनप्राभृतवृत्तौ, तथा श्रुतसागरसूरिकृततत्त्वार्थवृत्तौ नवमाध्याये आराधनाभगवतीसूत्रसम्मत्या यतीनामपवादपदे कम्बलशब्दवाच्यकौशेयादिपरिग्रहोऽप्युक्तः १० नाप्येकादशो, जिनानुकारस्यानौचित्यात्, यतः तीर्थपाः सर्वेऽपि निरुपमधृतिसंहनना अनन्तवीर्यभाजनं छाद्मस्थ्येऽपि चतुर्ज्ञानिनोऽतिशयसम्पन्ना अच्छिद्रपाणयो जितसकलपरिषहास्तेषामनुकारः कुतोऽस्मदादिसामान्यजनेन कर्त्तु शक्यः?, सर्वथा वैषम्यात्, अन्यथा सूत्राध्ययनपुनःपुनर्लोचकरणपिच्छिकाकमण्डलुधरणचैत्यवासनीहारधर्मोपदेशशिष्यप्रव्राजनादेरकरणं स्यात्, छाद्मस्थ्ये भगवतस्तदभावात्, एतेन यादृशो गुरुस्तादृशः शिष्यः ततो वयं जिनशिष्यास्ततो नग्नाः पाणिभोजिन एकत्र गृहे भोजनकारिण इत्यहंकारो निरस्तः, तथा सत्यमुकस्य वयं शिष्या अस्माकमयं गुरुरित्यपि व्यवहारतो निषेध्यं स्यात्, एवं चान्यत्रानुकारेऽसति वस्त्रत्याग एवानुकरणीय इत्यभिनिवेशमात्रं। किंच-अर्हतामतिशयपात्रत्वान्नाग्न्ये तावद् दृश्यत्वेऽपि न कस्यचिद्रागद्वेषोत्पादो, भवतां नाग्न्ये तु स्त्रीणां रागोऽन्येषां द्वेषः प्रत्यक्ष एव, अत एवोत्प्रेक्ष्यते भवद्दर्शने 'न स्त्रीणां मोक्ष' इति, किंच भवतां शास्त्रेऽपि जिनाननुकार एवोक्तः, यदाह भावसंग्रहकारः—" सहणणस्स गुणेण य दुस्समकालस्स नह पभावेण। पुरणयरगामवासी थविरकप्पट्ठिया जाया ॥ १ ॥ उवयरणं तं गहियं जेण ण भंगो हवइ चरियस्स। गहियं पुत्थयदाणं

जोग्गं जं जस्स तस्सेव ॥ २ ॥" ११ । नापि द्वादशो, जिनकल्पिकानामपि शक्त्यपेक्षयोपकरणोक्तेः, तदुक्तम्--"जिणकप्पियवज्जोऽविहु ण सो हवउ सव्वकालमेगंतो । उवगरणमाणमेयं पुरिसावेक्खाइ बहुभेयं ॥२॥ " अस्तु वा तेषामुपकरणाभावः, तथापि धृतिशक्तिसंहननश्रुतातिशययुक्तानामेव तद्भावो, न पुनर्यस्य कस्यचित्, यद्वाचकेनाप्यूचे--"य एतान् वर्जयेद्दोषान्, धर्म्मोपकरणादृते । तस्य त्वग्रहणं युक्तं, यः स्याज्जिन इव प्रभुः ॥ १ ॥ " न चैतदनुकारगन्धोऽपि कर्त्तुं शक्यो, यतस्ते ये पात्रविषयलब्धिमन्तस्तेषां 'माइज्ज घडसहस्सा अहवा मायंति सायरा सव्वे । एयारिसलद्धीओ सो पाणिपडिग्गहो होइ ॥ १ ॥' इति पात्रं विना न संयमव्याघातः, भवतां तु तथाभावः स्पष्ट एव, यदुवाच वाचकः--'भवन्ति जन्तवो यस्मादन्नपानेषु केषुचित् । तस्मात्तेषां परीक्षार्थं, पात्रग्रहणमिष्यते ॥ १ ॥' ये तु वस्त्रविषयकलब्धिमन्तः शीतादिसहना येषां नाग्न्यं न दृश्यते पात्रादि बिभ्रति, न वासो, ये तु लब्धिद्वयवन्तस्ते पात्रं वस्त्रं च न बिभ्रति, ततः कथंकारं तदनुकारः श्रद्धेयः ?, तदाचरणस्य त्वन्मतेऽपि व्यवच्छेदात्, यदभाणि भावसंग्रहकृता--'दुविहो जिणेहिं कहिओ जिणकप्पो तह य थविरकप्पो य । सो जिणकप्पो कहिओ उत्तमसंहणणधारिस्स ॥ १ ॥' तत एवाधुनिकानां वस्त्राभावे शीतातपवारिप्रभृत्युपद्रवभिया द्रुतं गमनागमनयोर्नेर्यासमितिः, पात्राभावे संसक्तसक्तुदध्यादिगलनादिभयादनीक्षितत्वरितभोजने एकगृह एव भोजने च नैषणासमितिर्लोकसिद्धैव, मात्रकाभावे केवलभूमौ प्रश्रवणसिंघानादि कुर्वतां वर्षाकाले विशेषतो जन्तूपघातेन न परिष्ठापनिका समितिः, धर्म्माविरोधिनां परानुपरोधिनां द्रव्याणां ज्ञानादिसाधनानां ग्रहणे विसर्जने च निरीक्ष्य प्रमृज्य प्रवर्त्तनमादाननिक्षेपणा समितिः' भावनासंग्रहे, तेन आदाननिक्षेपणासमितिस्तु वस्त्रपात्रादिसद्भाव एवेति, यदुक्तं चरणप्राभृतवृत्तौ--'यत्किञ्चिद्वस्तु निक्षिप्यते ध्रियते तत् प्रतिलिख्य ध्रियते

उपकरणानां स्थापना

मयूरपिच्छासन्निधाने मृदुवस्त्रेण कदाचित्तथा क्रियते सा निक्षेपणासमितिर्भवतीति, मुखवस्त्रं विना भाषायां न तत्समितिरपि, एवं चोपकरणाभावे लोकानुवृत्तिः धर्म्मस्तथा लज्जा ब्रह्मव्रतरक्षा वा सद्ध्यानं च न स्यात्, अथ त्यक्तसर्वसंगानां साधूनां लोकानुवृत्त्या लज्जया वा किं कार्य?, प्रत्युत तयोः परहरणीयत्वादिति चेद् ननु पापोपादानहेतूनामेव लोकानुवृत्त्यादीनां परिहर्त्तव्यत्वात्, न पुनः संयमहेतूनां, तेषामुपादानोपदेशात्, यदुक्तं दशवैकालिके--'लज्जा दया संजम बंभचेरं, कल्लाणभागिस्स विसोहिठाणं। जे मे गुरू सययमणुसासयंति, तेऽहं गुरुं सययं पूययामि ॥१॥' लज्जासंपण्णा इति भगवत्याम्, कथमन्यथा भवतोऽपि भोजनसमय एव नाग्न्यं, न पुनः सदा तदादर इति, एवं निःस्पृहत्वं ब्रह्म व्रतधैर्यं वा नाग्न्येन ज्ञाप्यते इत्यपि न चिन्त्यं, धर्म्मोपकरणे स्पृहाया व्रतघातिन्या अभावात्, धर्म्मपालनार्थमेव धृतत्वाद्वस्त्रादेः, तथा च वाचकः श्रीअश्वसेनः—मोक्षाय धर्म्मसिद्ध्यर्थं, शरीरं धार्यते यथा। शरीरधारणार्थं च, भैक्ष्यग्रहणमिष्यते ॥ १ ॥ तथैवोपग्रहार्थाय, पात्रं चीवरमिष्यते। जिनैरुपग्रहः साधोरिष्यते न परिग्रहः ॥ २ ॥' ब्रह्मव्रतधैर्यं तु मुनीनां स्वतः सिद्धमेव, किं नाग्न्यमात्रेण बाह्याडम्बररूपेण?, यदाह प्राभृतकारः—भावेण होइ णग्गो बाहिरलिंगेण किं च णग्गेण? । कम्मपयडीण नियरं णासइ भावे ण दव्वेणं ॥१॥' ति, एवं सत्यपि चेदाग्रहः तर्हि स्त्रिया सहैकत्र शयने विशेषतो ब्रह्मव्रतख्यापनात् तदपि कार्यं स्यात्, अथ वस्त्रस्य संयमसहकारित्वमुक्तं तन्न युक्तं, तदभावेऽपि जिनकल्पादिषु चारित्रप्रतिपत्तेरिति चेत्, न, भरतादेराहारं विना श्रामण्येन तस्याप्यसहकारित्वप्रसंगात्, किञ्च-आशाम्बरनये ब्रह्मचारिणः के?, पञ्चमगुणस्थानिनो देशविरता एवेति चेत्, किममी मुनितुल्यास्तदन्ये वा?, नाद्यो मुनितुल्यत्वे तेषामपि वस्त्राभावानुषंगात्, न द्वितीयः, तेषां पिच्छिकाकमण्डलुप्रभृतेर्मुनिलिंगस्यालिंगत्यापाताद्, अन्यत्रापि तद्वृत्तेः, अपिच—यद्यमी श्राद्धास्तदा व्रताव-

उपकरणानां स्थापना

तारणक्रियापि तेषां भवतु, यदुक्तं महापुराणे--'सितशाटकभृत् मौंड्यभृद् भूशायी दन्तधावनस्नानताम्बूलवर्जित औपाशिकसूत्राध्यात्मशास्त्रादिपठनकृत् गुरुसेवाकृद् व्रतं चरति, तस्य द्वादशवत्सराद्वा षोडशवत्सराद्वा मधुमांसपञ्चोदुम्बरस्थूलहिंसाविरतिं बिभ्रत एव वस्त्राभरणमाल्यशस्त्रग्रहणविवाहाभिलापरूपं व्रतावतारणं भवतीति, अथैषा क्रिया गृहस्थश्रावकाणामेव, न अगृहस्थश्रावकाणामिति चेन्न, सागारानगाररूपधर्म्मद्वयस्यैव युक्तत्वात्, ननु ब्रह्मचारिणामेकादशप्रतिमाधारित्वात् श्रावकत्वेन धर्म्मद्वैविध्यमेव, परं श्रावकाणां देशविरतित्वेन व्रतवैचित्र्यं, यथा श्राविकाणां काश्चिदार्यिका काश्चित्क्षुल्लिकाः, द्वयमप्येतदगार्हस्थ्ये, काश्चिद् गृहस्था इति, अत एव ब्रह्मचारिणां पुरुषाणां सदा तथावस्थायित्वं भैक्षवृत्तिरेकाशनादिर्मुनिवद्व्यवहारः, आर्यिकाणामपि तथैव लिंगाधिकारात्, यदुक्तं प्राभृतग्रन्थे ' दुइयं तु वुत्त लिंगं उक्किट्ठं अवरसावयाणं तु । भिक्खं भमेइ पत्तो समिई भासेण मोणेण ॥ १ ॥ द्वितीयं लिंगमुक्तं प्रधानं 'अवरश्रावकाणां' अगृहस्थश्रावकाणां 'भैक्षं' भिक्षायै प्राकृतत्वाद् विभक्तिव्यत्ययः भ्रमति, पात्रवान् समितिवान् भाषया 'मौनेन' वचनगुप्त्या। लिङ्गं इत्थीण हवइ भुंजइ पिंडं सुएयकालम्मि । अज्जियवि एकवत्था वत्थावरणेण भुंजेइ ॥ २ ॥ तृतीयं लिंग-वेषः स्त्रीणां भवति सुष्ठु एककाले पिण्डं भुंक्ते आर्यिकाऽपि अपिशब्दात् क्षुल्लिकाऽपि संव्यानवस्त्रेण सहिता भवति, उपरितनं वस्त्रं उत्तार्य भोजनं कुर्यादिति तद्वृत्तिदेश इति चेत्, भवतु भवतामेषा प्रक्रिया, तथापि लिंगद्वैविध्यमेव युक्तं, समयसारसूत्रवृत्त्योः--- " ववहारिओ पुण नओ दोण्णिवि लिंगाणि भणइ मुक्खपहो । निच्छयनओ न इच्छइ मोक्खपहे सव्वालिंगाणि ॥ १ ॥ " यः खलु श्रमणश्रमणोपासकभेदेन द्विविधं द्रव्यलिंगं मोक्षमार्ग इति प्ररूपणाप्रकारः स केवलं व्यवहार एवे " ति वृत्तिः, अत एव "हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतं देशसर्वतोऽणुमहती,

मूर्च्छा परिग्रहः, निःशल्यो व्रती, अगार्यनगारश्च, अणुव्रतोऽगारी' त्यादि तत्त्वार्थसूत्राणि, एवं च न ब्रह्मचारिषु श्रमणोपासकलिंगं पिच्छिकाकमण्डलुधारित्वेन सदा तद्व्रतानवतारात्, श्रावकाणां तु एकादशप्रतिमाधारिणामपि एकादशमासेभ्यः परतो दीक्षाप्रतिपत्तिं विना तदवतारस्यावश्यकत्वात्, नापि श्रमणलिंगं, लोचाद्यनधिकारात्, तेन यतीनां वस्त्राभावनियमभिया लिंगचातुर्विध्यं समापतत्केन वार्यते इति यत्किंचिदेतत् १२ । नापि त्रयोदशः, चतुर्दशोपकरणानां जघन्यतोऽपि स्थविरकल्पे(धृतः)परमर्षिवचनात्, यदुक्तमस्मदागमे---- "पत्तं पत्ताबंधो पायट्ठवण च पायकेसरिया । पडलाइं रयत्ताणं गुच्छओ पायनिज्जोगो ॥ १ ॥' पात्रनिर्योगः- पात्रार्थमुपकरणमित्यर्थः "तिन्नेव य पच्छागा रयहरणं तह य होइ मुहपत्ती । थेराण जिणाण पुणो थेरे मत्तो य चोलपुडो ॥ १ ॥' स्थविराणामुत्कृष्टचिन्तायां शीताद्यसहिष्णुतपस्विबालग्लानादीनां संयमनिर्वाहहेतुर्द्विगुणोऽप्यधिको वा उपधिर्निशीथचूर्ण्याद्यागमोक्तो बोध्यः, जिनकल्पे तु --- "दुग तिग चउक्क पणग नव दस इक्कारसेव बारसगं । एए अट्ठ वियप्पा जिणकप्पे हुंति उवहिस्स ॥ १ ॥ पुत्तीरयहरणेहिं दुविहो तिविहो य इक्ककप्पजुओ । चउहा कप्पदुगेणं कप्पतिगेणं तु पंचविहो ॥२॥ दुविहो तिविहो चउहा पंचविहोवि हु सपायनिज्जोओ । जायइ नवहा दसहा इक्कारसहा दुवालसहा ॥ १३ ॥ " अयं कल्पस्तु जम्बूस्वामिनि निर्वृते व्युच्छिन्नः, सिद्धिगमनयोग्यकाल एव प्रतिपत्तुं योग्यत्वात्, प्रथमसंहननाभावेन तथाविधतपःकरणाशक्तत्वेन वस्त्रपात्रविषयलब्धेरप्राप्तेर्विना लब्धिं पाणिपात्रत्वे दध्यादिद्रववस्तुनि त्वरितं २ भुज्यमाने जन्तुयतनाभावो गमनागमनाशक्तरोगिग्लानादीनां वैयावृत्त्याभावोऽनुकम्पाभावो मनोऽन्तरानशनोच्चारकारणे नरकादौ पातनं पतनं च, कदाचिदशुद्धोपयोगवशात् पतिते बिन्दौ विद्यमानकीटिकादीनां तदैवोपघातः, अविद्यमानानां मक्षिकाकीटिकादीनां गन्धाकृष्टिव-

शादागमे कस्यचित् पादघातेन गृहगोधादिना वा घातः, एकत्र गृहे भोजने भूमिप्रमार्जनं सच्चित्तजलादिच्छटा इत्यादयो मुनिमुद्दिश्य दोषा इत्युक्तं प्राक्. तेनोपकरणमात्रस्य निर्ममतया ध्रियमाणस्य संयमोपकारित्वमास्थेयमेव, अत एव नग्नताया न मुख्याचारत्वं, सचेलत्वस्यापि मुख्याचारत्वात्, यदुक्तमुत्तराध्ययने--- " एगया अचेलओ होइ, सचेले यावि एगया" यत्तु अचेलत्वं तदौपचारिकमेव, युक्ताहारेऽप्यनाहारत्ववत्, यदुक्तं प्रवचनसारवृत्तौ— "अथाप्रतिषिद्धशरीरमात्रोपधिप्रतिपालनविधानमुपदिशति-इहलोगनिरावेक्खो अप्पडिबद्धो परम्मि लोयम्मि । जुत्ताहारविहारो रहियकसाओ हवे समणो ॥ १ ॥ " चतुर्थश्रुतकन्धे त्रिंशत्तमगाथा, अथ युक्ताहारविहारः साक्षादनाहार एवेत्युपदिशति--- "जस्समणेसणमप्पा तंपि तवो तप्पडिच्छगा समणा । अण्णं भिक्खमणेसणमध ते समणा अणाहारा ॥ ३१ ॥ स्वयमनशनस्वभावत्वादेषणादोषशून्यभैक्ष्यत्वाच्च युक्ताहारः साक्षादनाहार एव स्यात्, एवं स्वयमविहारस्वभावत्वात् समितिशुद्धविहारत्वाच्च युक्तविहारः साक्षादविहार एव स्यादित्यनुक्तमपि गम्यत इति, यथा चैतत् तथा युक्तचेलो मूर्छारहितैषणादिदोषादुष्ट एकपट्टचेलभाग् अजितादिजिनतीर्थसाधुः प्रथमान्तिमजिनसाधुस्तु श्वेतमानाद्युपेतवस्त्रभाग् यथाविहितत्वादचेल एवेति तुल्यं, तत्त्वतस्तु यथा स आहारकस्तथाऽयमपि सचेलक एव, न च तथात्वे व्रताभाव एव श्रद्धेयः, तदेवं सोपकरणानां यतीनां यतित्वसद्भावे सिद्धेऽपि सम्प्रति न तादृशा यतयो दृश्यन्त इत्येवं तत्प्ररूपणा । "यदपि तदपि मोहादन्तरंगावमोहाद्, ग्रथिलशिथिलबुद्धिर्बोध्यमानोऽपि बुद्धैः । सततमभिनिवेशक्लेशलेशस्य वश्यः, कथयति न कथंचित् कापथं चोज्जिहीते ॥ १ ॥ अहह! गहनवृत्तिर्मोहचर्याकदर्या, ननु यदनुचरत्वे निश्चितासौ त्रिलोकी । गुरुमगुरुविधानध्यानतो न प्रपन्ना, बहुलजलभवान्तर्मज्जनानीच्छतीव ॥२॥ व्यवहृतिपरिहारान्निश्चयस्यानवाप्तेर्दृढतरमतमेतत् किं विकल्पैरनल्पैः? ।

गुरुपरिचरणेनाध्यात्मविद्यानवद्या, स्फुरति विरतिमन्तर्बोधयन्ती जयन्ती ॥३॥ इति गाथार्थः ॥ अथ प्रविशति गुरुः, आ नेपथ्ये !

तम्हा दिगम्बराणं एए भट्टारगावि नो पुज्जा। तिलतुसमेत्तो जेसिं परिग्गहो णेव ते गुरुणो ॥ १६ ॥

तस्माद् दिगम्बराणामेते भट्टारका अपि न पूज्याः। तिलतुषमात्रो येषां परिग्रहो नैव ते गुरुवः ॥ १६ ॥

स्पष्टार्थमिदं, भगेन-ज्ञानेन तारका उपदेशदानात् जनानामिति भट्टारकाः, यदि यतीनामभावस्तर्हि कथमेते भट्टारकाः ?, मनुष्याभावे राजान इवेत्याशंकायां 'नो पूज्या' इति प्रतिवचनोद्देशः, नामतोऽमी भट्टारकाः, परं न पूज्यत्वेन, तत्र हेतुमाह-तिलतुषमात्रोऽपि येषां परिग्रहः ते न चैव गुरवः स्युरिति, न चोपकरणानां प्राग्दर्शितनीत्या लिङ्गत्वमिति वाच्यम्, तेषामुपकरणत्वाभावात्, यथाजातरूपत्वस्यैव लिङ्गत्वात्, यदुक्तं प्रवचनसारे—"उपकरणं जिणमग्गे लिंगं जहजायरूवमिदि भणियं। गुरुवयणंपि य विणओ सुत्तज्झयणं च पण्णत्तं ॥ १ ॥" यो हि नामाप्रतिषिद्धोऽस्मिन्नुपधिरपवादः स खलु निखिलोऽपि श्रामण्यपर्यायसहकारिकारणत्वेनोपकारकत्वादुपकरणभूत एव, न पुनरन्यः, तस्य तु विशेषाः सर्वाहार्यवर्जितसहजरूपोपेक्षितयथाजातरूपत्वेन बहिरङ्गलिङ्गभूताः कायपुद्गला गुरुवचनपुद्गलाः सूत्रपुद्गला विनीतताभिप्रायप्रवर्त्तकचित्तपुद्गला इति, तेन सपरिग्रहा न गुरुत्वेन पूज्या इत्यभिप्रायः, अत्रापि नैकान्तेन उपकरणनिषेधः शङ्क्यः, शिष्यभक्तावसथाहारादेः एतदग्रेतनगाथायामुत्सर्गापवादसादरस्याद्वादेनोपधेरुपदेशात्, यदुक्तं तत्रैव—"आहारे च विहारे देसं कालं समक्खमं उवधिं। जाणित्ता ते समणो वट्टइ जइ अप्पलेवी सो ॥ १ ॥" इत्यादिप्रागुक्तं युक्तिभिरेकान्तप्रक्षेपाच्चेति गाथार्थः ॥ अथ सामाजिकानां नटस्य बोधः—

भट्टारका नाम पुज्यत्वं

एवं कत्थवि हीणं कत्थवि अहियं मयाणुराएणं । सोऽभिनिवेसा ठावइ भेयं च दिगंबरेहिंतो ॥ १७ ॥
एवं कुत्रापि हीनं कुत्राप्यधिकं मतानुरागेण । सोऽभिनिवेशात् स्थापयति भेदं च दिगम्बरेभ्यः ॥ १७ ॥

सम्प्रति दृश्यमहीमण्डले मुनयो न सन्ति, मुनित्वेन व्यपदिश्यमाना भट्टारकादयो न गुरवः, पिच्छिकादिरुपाधिर्न रक्षणीयः, पुराणादिकं न प्रमाणं, इत्यादिकं प्राक्तनदिगम्बरनयात् न्यूनं, अध्यात्मनयस्यैवानुसरणं, नागमिकः पन्था प्रमाणयितव्यः, साधूनां वनवास एव इत्याद्यधिकं, स्वमतस्य-अभिप्रायस्यानुरागो-दृढीकरणरुचिस्तेन 'अभिनिवेशात्' हठात् व्यवस्थापयति, न वयं दिगम्बरा नापि श्वेताम्बराः, किन्तु तत्त्वार्थिन इति धिया दिगम्बरेभ्योऽपि भेदं व्यवस्थापयति, तत्कालापेक्षया वर्त्तमाना, चकारात् सिताम्बरेभ्यस्तु महानेवास्य मतस्य भेद इति गाथार्थः, इति निष्क्रान्ताः सर्वे ॥ अथैतन्नाटकरूपस्य उत्पत्तिसमयमाह—

सिरिविक्कमनरनाहा गएहिं सोलस सएहिं वासेहिं । असिउत्तरेहिं जायं बाणारसियस्स मयमेयं ॥ १८ ॥
श्रीविक्रमनरनाथाद्गतैः षोडशशतैर्वर्षैः । अशीत्युत्तरैर्जातं बाणारसीयस्य मतमेतत् ॥ १८ ॥

श्रीविक्रमार्कोद्राज्ञः षोडशशताशीतिवर्षातिक्रमे वाणारसीयं मतमेतत् प्रवृत्तं, न चाध्यात्मशास्त्राणि पुरातनानि तन्मतमपि प्राचीनमिति कथमेतद् घटत इति वाच्यं, वाणारसीयमतेऽपि नव्यत्वेनैतज्ज्ञानस्य भणनात्, यदुक्तं कवित्त्वबन्धे नाटके—
"अब यह बात कही है जैसे, नाटक भाषा कह्यो सु ऐसे । कुन्दकुन्दमुनि मूल उद्धरता, अमृतचंद टीकाके करता ॥ १ ॥ पांडे राजमल्ल जिनधर्मी, समयसार नाटकके मर्म्मी । तिनि गरंथ की टीका कीनी, बालाबोध सुगम करि दीनी ॥ २ ॥ इह विधि

बोधवचनिका फैली, समय पाय अध्यात्मसैली । प्रगटी जगतमाहिं जिन वांनी, घरघर नाटक कथा वखानी ॥ ३ ॥ नगर आगरे माहिं विख्याता, कारनपाय भये बहुज्ञाता । पंच पुरुष अतिनिपुन प्रवीने, निशिदिन ज्ञानकथारसभीने ॥ ४ ॥ रूपचंद पंडित प्रथम, दुतिय चतुर्भुज नाम । त्रितिय भगोतीदास नर, कौरपाल गुणधाम ॥ ५ ॥ धरमदास ए पंच जन, मिलि बैठे इक ठोर । परमारथ चरचा करै, इनके कथा न और ॥ ६ ॥ चिरा कौरा करु धरम धरु, सुमति भगोतीदास । चतुरभाव थिरता भए, रूपचंद परगास ॥ ७ ॥ इह विधि ज्ञान परगट भयो, नगर आगरे मांहि । देस देस महि विस्तर्‌या, मृषा देस महि नांहि ॥ ८ ॥ तेनाध्यात्मनयस्य प्राचीनत्वेऽपि तन्नयान्निश्चयमात्रावलम्बनेन दानशीलतपःप्रतिक्रमणादिव्यवहारं द्रव्यतो भावतो विलोपयत् स्वारसिकतया दिगम्बरश्वेताम्बरनयादन्यरूपं मतभाविर्बभूवेत्यभिप्रायः, "सोरहसै तिरानवै वीते, आसू मास सितपक्ष व्यतीते । तिथि तेरसि रविवार प्रवीना, ता दिन ग्रन्थ समापत कीना ॥१॥ इत्येतद्वाक्यं तु ग्रन्थोत्पत्तेरेव, न पुनर्मतोत्पादस्येति गाथार्थः ॥

अथ मूर्द्धाभिषिक्तः—

**अह तम्मि हु कालगए कुंयरपालेण तम्मयं धरियं । जाओ तो बहुमण्णो गुरुव्व तेसिं स सव्वेसिं ॥ १९ ॥**

**अथ तास्मिन् तु कालगते कुंअरपालेन तन्मतं धृतम् । जातस्ततो बहुमान्यो गुरुरिव तेषां स सर्वेषाम् ॥ १९ ॥**

'अथे' ति मतान्तरस्थापनाऽनन्तरं 'तस्मिन्' वाणारसीदासे परलोकं गते निरपत्यत्वात्तस्य मतं कुंअरपालनाम्ना वणिजा धृतं, प्रागेव तन्मताश्रितानां स्थिरीकरणेन नवीनानां तथाश्रद्धानोत्पादनेन समाहितं, तन्मतं निश्चलस्थानमभवदित्यर्थः, ततस्तेषां वाणारसीयानां सर्वेषां गुरुरिव बहुमान्यः, परस्परचर्चायां यत्तेनोक्तं तत्प्रमाणविभूव, गुरुरिति कथनानान्यः सितपटो दिक्पटो वा

कुंअरपालकृता तन्मतवृद्धिः

तद्गुरुर्न्नभूविवान्, उपकरणधारित्वात्तयोरिति भावः । न च मूर्छा विना तद्धारकस्य न मुनित्वप्रतिपात इत्याशंक्यं, उपकरणस्यावश्यंमूर्छाजनकत्वात्, यदाह प्रवचनसारे अमृतचन्द्रसूरिः "किह तम्मि नत्थि मुच्छा आरंभो वा असंजमो तस्स ? । तह परदव्वम्मि रओ कहमप्पाणं पसाधयइ ? ॥ १ ॥ उपधिसद्भावे हि ममत्वलक्षणाया मूर्च्छायास्तद्विषयकर्म्मप्रक्रमपरिणामलक्षणस्यारम्भस्य शुद्धात्मरूपहिंसनपरिणामलक्षणस्यासंयमस्य चावश्यंभावित्वात्, तथोपाधिद्वितीयस्य परद्रव्यरतत्वेन शुद्धात्मद्रव्यप्रसाधकत्वाभावाच्च एकान्तिकान्तरंगच्छेदत्वमुपधेरवधार्यत एव, इदमत्र तात्पर्यम्-एवंविधत्वमुपधेरवधार्य सर्वथा संन्यस्तव्य" इति तद्वृत्तिः, तेषामिति कथनाद्बाणारसीयानामेव, न पुनरन्येषां दिगम्बराणामपि "किह तम्मी' ति गाथोक्तस्य तन्मतेऽप्यौत्सर्गिकत्वात् केवलोत्सर्गप्रामाण्ये मिथ्यात्वाच्च, तत एव 'अप्पडिकुट्ठं उवहिं'मित्यादिना प्रागेव सविस्तरं निरस्तस्तदभिप्राय इति गाथार्थः—

अथ प्राचीनेन सममेकीभूय भूयोऽपि वाणारसीयः प्रविशति—

**जिणपडिमाणं भूसणमल्लारुहणाइ अंगपरियरणं । बाणारसिओ वारइ दिगम्बरस्सागमाणाए ॥ २० ॥**

**जिनप्रतिमानां भूषणमाल्यारोहणादि अंगप्रतिचरणम् । बाणारसीयो वारयति दिगम्बरस्यागमाज्ञया ॥२०॥**

जिनप्रतिमानां भूषणाद्यङ्गपूजा न कार्या, भगवतो निरञ्जनस्य वीतरागस्य मूर्त्तेः सरागत्वाभिव्यञ्जनेन परिधापनिकादेरनौचित्यात्, तथाहि-परिधापनिकानाम जिनमूर्त्तिसन्निहिता वस्त्राभरणपूजा, सा हि तत्प्रेक्षकभविकशुभध्यानहेतुत्वं वा १ भगवतः सचेलत्वं वा २ भक्तिमात्रत्वं वा ३ अवस्थाविशेषत्वं वा ४ शोभाकारित्वं वा ५ आगमोक्तत्वं ६ वाऽऽस्थाय क्रियते ?, नाद्यः,

शुभध्यानस्य हि कारणं वीतरागप्रतिमादिबहिर्द्रव्यालम्बनेन चित्तस्य स्थिरबन्धनं, तच्च परिधापनिकाकरणे दुर्लभं, वीतरागस्य हि प्रतिमा निष्परिग्रहैव वीतरागत्वं सूचयन्ती भविनां वीतरागदशारूपं शुभध्यानमुत्पादयति, यथा हि सरागस्य स्त्रीप्रभृतेः प्रतिमा सपरिग्रहैव सरागतां द्योतयन्ती जनानां सरागदशारूपं दुर्ध्यानं तनुते तद्वदियमपि चेत् कुतः शुभध्यानं ? दुर्ध्यानोत्पादस्यैवानुभवसिद्धत्वात्, अत एव श्रीगृद्धपिच्छाचार्येणोक्तं बोधप्राभृते जिनप्रतिमाद्वारे—"सपराऽजंगमदेहा दंसणणाणेण सुद्धचरणाणं । णिग्गंथवीयराया जिणमग्गे एरिसा पडिमा ॥१॥ अस्या व्याख्या यथा—"निर्ग्रन्था वस्त्राभरणजटामुकुटायुधरहिता वीतरागा रागरहितभावेऽवतारिता 'जिनमार्गे' सर्वज्ञवीतरागमते ईदृशी प्रतिमा भवति, पुनः कथंभूता?-स्वकीया-अर्हच्छासनसम्बंधिनी, पुनः किंविशिष्टा? परा-स्वकीयशासनेऽपि उत्कृष्टा अनुत्कृष्टाया-गोपुच्छिकसितपटद्राविडयापनीयकनिष्पिच्छरूपैर्जैनाभासैः प्रतिष्ठिताया अञ्चलिकारूपाया नग्नत्वधारिण्या अपि अनर्च्यत्वादवन्द्यत्वाच्च, पुनः किं०?- 'अजंगमदेहा' सुवर्णमरकतस्फटिकेन्द्रनीलपद्मरागविद्रुमचन्दनकाष्ठानुष्ठिता वा अजंगमा, सा च केषां ?–दर्शनेन ज्ञानेन निर्मलचारित्राणां-तीर्थंकरपरमदेवाना"मिति । एतदनूवाच गौतमः—निराभरणभासुरं विगतरागवेगोदयान्निरम्बरमनोहरं प्रकृतिरूपनिर्दोषतः । निरायुधसुनिर्भयं विगतहिंस्यहिंसाक्रमान्निरामिषसुतृप्तिमद्विविधवेदनानां क्षयात् ॥ १ ॥ पुनरपि तत्रैव बोधप्राभृते द्वारगाथायाम्-'जिणबिंबं सुवीयरायं' ति, सुष्ठु-अतिशयेन वीतरागं, न तु लक्ष्मीनारायणमूर्तिवत्सरागमित्येव विरुद्धान्वयेन परिधापनिकां विना भूयसां शुभध्यानोत्पादेनाव्यतिरेकितया चाकारणत्वाच्च । न द्वितीयः, सर्वज्ञानामचेलत्वस्यैव सार्वजनीनत्वात्, यत्तु सांशयिकमिथ्यात्वभाग्भिः श्वेताम्बरैर्भगवतो दीक्षाक्षणे शक्रप्रदत्तदेवदूष्यवस्त्रेण सचेलत्वं प्रतिपन्नं तन्निजावासवेश्मान्तरेऽपि प्रणिगद्यमानं न हृद्यं,देवदत्तस्य संयतानामनादेयत्वेन तैरेवोक्तत्वात्, इन्द्रस्य

जिन-
बिम्बानां
भूषण-
माल्यादि-
निषेधः

च तद्दानेन भगवच्चारित्रविघातकत्वानुपपत्तेश्च । न तृतीयः, यावद् दुर्ध्यानं नोत्पादयति तावत एव भक्तिमात्रस्योपदेशात्, अन्यथा भागवतीं विवाहदशामाश्रित्य वैवाहिककार्यस्यापि प्रादुष्करणप्रसंगः, परिधापनिकायां तु यथा दुर्ध्यानमम्भवस्तथा समर्थितं प्राक् । न तुरीयः, अवस्थाविशेषस्य राज्यावस्थारूपस्याप्रादुर्भाव्यत्वात् वैवाहिकदशावत्सरागत्वात्, सरागस्य दुर्ध्यानहेतुत्वादिति, अन्यासु च श्रामण्यकैवल्यसिद्धरूपासु वस्त्रालङ्काराभावात् । नापि पञ्चमः, भगवद्बिम्बस्य स्वयंशोभनत्वात्, यदुक्तमक्रीभावस्तोत्रे--"आहार्येभ्यः स्पृहयति परो यः स्वभावादहृद्यः, शस्त्रग्राही भवति सततं वैरिणां यश्च शक्यः। सर्वाङ्गेण त्वमसि सुभगस्त्वं न शक्यः परेषां, तत् किं भूषावसनकुसुमैः ? किंच शस्त्रैरुदस्त्रैः ? ॥ १ ॥" वाग्भट्टालंकारेऽपि, यथा--"अनलङ्कारसुभगा' इति, श्वेताम्बरनयेऽपि "वपुरेव तवाचष्टे, भगवन् ! वीतरागताम् । न हि कोटरसंस्थेऽग्नौ, तरुर्भवति शाद्वलः ॥ १ ॥ प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं, वदनकमलमंकः कामिनीसंगशून्यः । करयुगमपि यत्ते शस्त्रसम्बन्धवन्ध्यं, तदसि जगति देवो वीतरागस्त्वमेव ॥२॥" किञ्च-एतच्छोभाहेतुरपि रूपविपर्ययकारित्वेन जिनमुद्राव्याघातादाशातनाबाहुल्याच्चोपेक्ष्यं, तथाहि चक्षुर्युगलश्रीवत्सादिचिरस्थायिभूषणन्यासे तावत्यंशे स्नात्राभावः, पार्श्वस्थापितांगारादिना लाक्षादिगालने तन्न्यासः, तत्राशातना तु स्पष्टैव सुधियां गम्या, पूजादिषु अंगिकारचने गुन्द्रादिलेपः, तदुत्सारणे नखाग्रादिना भूयान् संघट्ट इति । नापि षष्ठः, आगमाश्रयहेतोरसिद्धत्वात्, न च तदागमेऽपि कश्चिन्नाट्यादिनेव केवलपरिधापनिकारचनेन सम्यग्बोधमवाप्य मोक्षं गत इति श्रूयते, किञ्च-च मुण्डापार्वतीप्रभृतितीर्थान्तरीयदेवानां प्रतिमासु (सरागत्वं सालंकारत्वं चास्ति तथा अत्रापि चेत् सरागवीतरागप्रतिमयोर्न कोऽपि विशेषः, लोकोऽपि स्त्रियाः प्रतिबिम्बे चित्रकरैः सालंकारत्वं योगीन्द्रस्य ध्यानाधिरूढस्य प्रतिबिम्बे तदभावश्च सरागवीतरागत्वसूचकश्चिन्त्यते, अन्यच्च-विष्णुप्रतिमायां लक्ष्मीलक्ष्मणा

जिन-
बिम्बानां
भूषणमा-
ल्यादि-
निषेधः

सरागत्वं चक्रगदादिना सरोपत्वं विष्णोस्तथाऽत्रापि परिधापनिकायां परिग्रहवत्त्वं भगवतो द्योत्यत इत्यनिष्टः प्रसंगः, तस्माद्भगवान्निःस्पृहो निर्ग्रन्थो वीतरागश्च, तद्बिम्बमपि तथैव कार्यम्, तथा च प्रयोगः---जिनमूर्तेर्मोक्षार्थिना परिधापनिका न कर्त्तव्या, दुर्ध्यानहेतुत्वाद्, यदेवं तदेवं, यथा स्त्रीचित्रदर्शनमिति,एवमाशातनाहेतुत्वानर्थकत्वप्रतिबिम्बताव्याघातादयोऽप्यूह्या इति॥अत्र प्रतिविधीयते-निष्परिग्रहैतव वीतरागप्रतिमायाः शुभध्यानहेतुरित्याद्युक्तंयत् तदयुक्तं, यतस्तदभावेऽपि तथाविधसिंहासनचामरावलिवीज्यमानोपरिधृतच्छत्रत्रितयपृष्ठस्थभास्वद्भामण्डलविराजितभगवन्मूर्त्तौ साक्षाद्रूपे च तदीक्षकाणां तद्ध्यानवतां भूयो भविनां शुभध्यानोदयात्, त्वदंगीकृतजिनमूर्त्तेः पुरो विविधपुष्पगन्धाक्षतनैवेद्यादिसपरिग्रहस्वरूपेणापि तथात्वाच्च, नच तत्रापरिग्रहत्वं, नृपादीनां पुरःपार्श्वस्थवस्तुभिरिव भगवन्मूर्त्योस्तद्वस्तुना तत्प्रसंगस्य दुर्निवारत्वात्, न च पुनः परिग्रहे स्वांगसन्निधानत्वस्यैव हेतुत्वं, स्वयं नग्नावस्थायामपि नृपादीनां सपरिग्रहत्वात् , अथ तत्र इच्छावशादस्ति तद् भगवन्मूर्त्तेस्तु तदभावात्कथं सपरिग्रहत्वमिति चेच्चिरं जीव, परिधापनिकायामप्यस्य तुल्यत्वात्, एवमुच्चैस्तरगवाक्षजालिकाकपिशीर्षविराजद्वप्रत्रयादिविभवचत्यालयादिनापि यदि न परिग्रहवत्त्वं तर्हि कथमंगपूजामात्रेणेत्यपि प्रतिपादनीयं, यदुक्तमभियुक्तैः श्रीमानतुंगसूरिभिः- 'इत्थं यथा तव विभूतिरभूज्जिनेन्द्रे' ति, तथा 'श्रीमत्सुरासुरे' त्यादि, स्तोत्रेऽपि त्वदीयं- 'तं तीर्थनाथमधिगम्य विनम्य मूर्ध्ना, सप्रातिहार्यविभवादिपरीतमूर्ति'मित्यादि, किंच-निष्परिग्रहायामपि भवदंगीकृतजिनमूर्त्तौ दृष्टायां म्लेच्छादीनामभव्यानां च कथं न शुभध्यानसम्भवः?, अथ तत्र द्रव्यवैगुण्यान्न तदुत्पाद इति चेत्तर्हि परिधापनिकायामपि भवादृशां केषांचिदत्र शुभध्यानासम्भवो द्रव्यवैगुण्यादेव मन्तव्यः, भूयसामन्येषां परिधापनिकादर्शने श्रीमान् परमदेवो वीतरागोऽपारसंसारकारणं घातिकर्म्म

क्षिप्त्वाऽष्टप्रातिहार्यविभूतिभृत् सुरासुरनरेंद्रकृतपूजोऽनया रीत्या उदारशृंगारजनितामिव कायकान्ति बिभ्राणः समवसरणमध्यमध्यास्ते इति धन्योऽहं धन्याश्चामी भक्तिकृत इतिशुभध्यानसद्भावस्य सार्वजनीनत्वात्, चैत्यालयादिदर्शनवत् , यदपि स्त्रीप्रतिमादिदृष्टान्तेन सपरिग्रहत्वं दुर्ध्यानकारणमिति तदपि न युक्तं, जितेन्द्रियाणां सालंकारस्त्रीदर्शनेऽपि दुर्ध्यानानुदयात्, कामुकानां निरलंकारस्त्रीगात्रमात्रदर्शनेऽपि दुर्ध्यानाच्च, यत्तु बोधप्राभृतोक्तं तत्तावदप्रमाणमेव, प्रामाण्येऽपि तस्य वस्त्राभरणपूजाया अनिषेधात्, निर्ग्रन्थाश्चतुर्विंशतिबाह्याभ्यन्तरपरिग्रहरहिता इति परिग्रहस्य च इच्छाजन्यत्वात् तस्या अचेतनायां प्रतिमायामभावादेव, वीतरागा च रागरहितभावेऽवतारिता, न तु लक्ष्मीनारायणादिमूर्त्तिवत्सरागा इत्यर्थस्यैव योग्यत्वं बोधप्राभृतवृत्तौ "जं चरइ" इति गाथायां निर्ग्रन्थशब्दस्य द्वारगाथायां श्रुतसागरसूरिणा तथैव व्याख्यातत्वात् , अत एव गौतमोक्तेऽपि साक्षाद्भावार्हद्वर्णनेनैव प्रामाण्यम् , अन्यथाऽननुभावात् , निराभरणभासुरत्वं प्रतिमासु प्रत्यक्षपराहतमेव, योऽपि परिधापनिकाभावे शुभध्यानोत्पादस्तत्रापि मानसपरिधापनिकारोपजन्यत्वमेवेति नाव्यतिरेकित्वं, कथमन्यथा तवापि दार्षदादिप्रतिमायां दिवाकरसहस्रभासुरपरमौदारिकशरीरस्य भगवतो ध्यानं संगच्छते, तत्र तथाविधकान्त्यभावेऽपि मानस एव तदारोप इत्येवं न्याय्यत्वात् , तत एव **समयसारे अमृतचन्द्रः** 'कान्त्येव स्नपयन्ति ये दश दिशो धाम्ना निरुंधन्ति ये, धामोद्दाममहस्विना जनमनो मुष्णन्ति रूपेण ये । दिव्येन ध्वनिना सुखं श्रवणयोः साक्षात् क्षरन्तोऽमृतं, वन्द्यास्तेऽष्टसहस्रलक्षणधरास्तीर्थेश्वराः सूरयः ॥ १ ॥' द्वितीयविकल्पेऽपि सर्वज्ञानामचेलकत्वं नास्मन्मते सम्मतं, यदुक्तं सप्ततिशतस्थानके-'सक्को य लक्खमुल्लं सुरदूसं ठवइ सव्वजिणखंधे । वीरस्स वरिसमहियं सयावि सेसाण तस्स ठिई ॥१॥' एतद्वचोमूलमपि आवश्यकोक्तम्-'सव्वेवि एगदूसेण निग्गया जिणवरा चउवीस "

मिति, यत्तु क्वचिदस्मन्नयेऽपि तदचेलत्वं तदौपचारिकमेव, न चोपचारेणाचेलत्वकथनमप्रमाणमेवेति वाच्यं, त्वन्नयेऽपि श्रावकाचारेऽमृतचन्द्रोऽप्याह- 'क्षुत् तृष्णा हिममुष्णं नग्नत्वं याचनारतिरलाभ' इति, अत्र श्रावकाणां वस्त्रधारित्वेऽपि नग्नत्वपरिभाषणात्। न च देवदत्तमनादेयमेव, कल्पातीतत्वाज्जिनस्य संयतानौपम्यात्, अन्यथा कथं केवलोत्पत्तौ विशेषसंयतरूपत्वेऽपि भगवाँश्छत्राणि त्ररिभर्त्ति इन्द्रैश्चामरैर्वीज्यते भास्वन्मणिकिरणकरंवितं सिंहासनमध्यास्ते, सामान्ययतेस्तस्यापि निषिद्धत्वाद्, अत एवोक्तं त्वन्नये भूपालस्तोत्रे- 'निःशेषत्रिदशेन्द्रशेखरशिखारत्नप्रदीपावली, सान्द्रीभूतमृगेन्द्रविष्टरतटीमाणिक्यदीपावली । क्वेयं श्रीः क्व च निःस्पृहत्वमिदमित्यूहातिगस्त्वादृशः, सर्वज्ञानदृशश्चरित्रमहिमा लोकेश ! लोकोत्तरः ॥ १ ॥" "प्रातिहार्यमयीं भूतिं, त्वं दधानोऽप्यनन्यगाम् । वीतरागो महाँश्चासि, जगत्येतज्जिनाद्भुतम् ॥ १ ॥" इत्यादिपुराणे ७ पर्वणि, न च परिग्रहप्रसंग इच्छाशून्यत्वात्, तद्रक्षणं च मोचनकारणस्याभावात्, स्वतः पतति चेत् पततु, यत्तु श्रीवीरेण अर्द्धं विप्राय दत्तं देवदूष्यस्य अर्द्धं रक्षितमित्यागमे तदपि छाद्मस्थ्ये न दोषावहं, संज्वलनलोभस्य तदानीं सद्भावात्, एतेन इन्द्रस्य संयमविघातकारित्वमपि प्रत्यादिष्टम्, इन्द्राणां तथा जीतकल्पत्वात्, चामरव्यजनवत्, अथ सर्वेषां जिनानां त्वन्मते नास्त्यचेलत्वं पारमार्थिकं, श्रीऋषभदेवस्य श्रीवीरस्य तु वर्षादुपरि मुख्यमचेलकत्वमागमे जम्बूद्वीपप्रज्ञप्तौ पर्युषणाकल्पे च प्रसिद्धम्, तथा च कथमनयोमूर्तौ वस्त्रादिपूजा युक्तेति चेत्, न, अचेलत्वे सत्यपि सचेलत्वप्रतिभासातिशयात्, न चातिशयानां चतुस्त्रिंशत्त्वाव्याघातस्तेषामनन्यसाधारणत्वात्, एतदतिशयस्य जिनकल्पिकैः समानत्वात्, अयमतिशयस्तु तत्त्वतस्त्वयापि प्रतिपन्न एव, दिवाकरसहस्रभासुरपरमौदारिकदेहस्य निराभरणत्वेऽपि भासुरस्य लक्षणमिषात् पट्टकूलषोडशाभरणानां च स्वीकारात्, अत एव तृतीयपक्षकक्षीकरणेऽपि न किंचिद् दुष्टं, परिश्रा-

पनिकाभक्तेर्दुर्ध्यानसम्भवस्य प्रागेव निरस्तत्वात्, 'अविलिप्तसुगन्धिस्त्वमविभूषितसुन्दरः। भक्तैरभ्यर्चितोऽस्माभिर्भूषणैः सानुलेपनैः ॥ १ ॥" इत्यादिपुराणे १४ पर्वणि, यदपि विवाहदशासाम्यं तदपि न, तस्य रागकारणत्वेन भगवतो वीतरागस्य तदनौचित्यात्, तथा चोक्तम्- 'वदनकमलमंकः कामिनीसंगशून्य' इति, न च तथा परिधापनिका, तस्याः सुदृष्टीनां बोधसाधनत्वात्। तुर्यपक्षेऽपि भगवतो हि बाल्यावस्थामाश्रित्य स्नात्रकरणवत् काश्मीरपूजाविलेपनपुष्पारोपणवस्त्रालंकारादिपरिधापनं युक्तियुक्तमेव प्रतिभाति, त्वन्मतेऽपि पंचकल्याणकपूजाविधानस्य सिद्धत्वात्, अत एव 'स्नातस्याप्रतिमस्य मेरुशिखरे शच्या विभोः शैशवे०' इति जन्मकल्याणकस्तुतिरपि उभयनये सम्मता, 'यस्यावतारे सति पैत्र्यधिष्ण्ये, ववर्ष रत्नानि हरेर्निदेशात्। धान्याधिपः खान्नवमासपूर्वं, पद्मप्रभं तं प्रणमामि साधुम् ॥१॥' इत्यवतारस्तवः, 'इन्द्रादिभिः क्षीरसमुद्रतोयैः, संस्नापितो मेरुगिरौ जिनेन्द्रः। यः कामजेता जनसौख्यकारी, तं शुद्धभावादजितं नमामि ॥ २ ॥' इति जन्मस्तवः 'गुप्तित्रयं पंच महाव्रतानि, पंचोपदिष्टाः समितीश्च येन। बभार यो द्वादशधा तपांसि, तं पुष्पदन्तं प्रणमामि देवम् ॥१३॥ इति दीक्षास्तवः, 'सत्प्रातिहार्यातिशयप्रपन्नो, गुणप्रवीणो हतसंगदोषः। यो लोकमोहान्धतमःप्रदीपश्चन्द्रप्रभं तं प्रणमामि भावात् ॥ ४ ॥' इति ज्ञानस्तवः 'ध्यानप्रबन्धप्रभवेन येन, निहत्य कर्म्मप्रकृतीः समस्ताः। मुक्तिस्वरूपा पदवी प्रपेदे, तं शम्भवं नौमि महानुभावम् ॥५॥' इति निर्वाणस्तवः,-'भवरोगार्त्तजतूनामगदंकारदर्शनः। निःश्रेयसश्रीरमणः, श्रेयांसः श्रेयसेऽस्तु वः॥१॥ इति सिद्धस्तव इति, दशलाक्षणिकजपमालादिस्तोत्रप्रमुखेषु प्रतिपदं भगवतः सर्वावस्थावर्णनं दृश्यते, तर्हि किं वक्तव्यं पंचकल्याणकावस्थाराधने?, तेन पंचकल्याणकपूजाकरणं युक्तं, तत्र च वस्त्राभरणादिपूजा कार्यैव, भवन्मतेऽपि तदवस्थायां तद्गुणनाद्, यदुक्तं जिनदासेन हरिवंशपुराणे- "अथ जाताभिषेकस्य,

वस्त्राभूषणालंकारसिद्धिः

जगन्नाथस्य भूपतेः । शची प्रसाधनं चक्रे, मतिभक्त्या सकौतुका॥ १ ॥ स्वयं जातपवित्रस्याभिषिक्तांगजिनेशितुः । ममार्जांगस्य लग्नाम्बुकणांश्च विमलांशुकैः ॥ २ ॥ जिनेद्रांगमथेन्द्राणी, दिव्यामोदिविलेपनैः । अन्वलिप्यत भक्त्याऽसौ, कर्म्मलेपविघातनम् ॥ ३ ॥ त्रैलोक्यतिलकस्यास्य, ललाटे तिलकं महत् । अचीकरत् मुदेन्द्राणी, शुभाचारप्रसिद्धये ॥ ४ ॥ एवं घत्ताबन्धहरिवंशपुराणे- 'ण्हाविऊण खीरसायरजलेण, भूसिओ आहरणे उज्जलेण' 'अथाभिषेकानिर्वृत्तौ, शचीदेवी जगद्गुरोः । प्रसाधनविधौ यत्नमकरोत्कृतकौतुका ॥१॥ तस्याभिषिक्तमात्रस्य, दधतः पावनीं तनूम् । सांगलग्नान्ममार्जाम्भःकणान् स्वच्छामलांशुकैः ॥ २ ॥ गन्धैः सुगन्धिभिः सान्द्रैरिन्द्राणी गात्रमीशितुः । अन्वलिम्पत लिम्पद्भिरिवामोदैस्त्रिविष्टपम् ॥ १३ ॥ तिलकं च ललाटेऽस्य, शची चक्रे किलादरात् । जगतां तिलकस्तेन, किमलंक्रियते विभुः ? ॥ ४ ॥ मन्दारमालयोत्तंसमिंद्राणी विदधे विभोः । तयालंकृतमूर्द्धासौ, कीर्त्येव व्यरुचद् भृशम् ॥ ५ ॥ जगच्चूडामणेरस्य, मूर्ध्नि चूडामणिं न्यधात् । सतां मूर्द्धाभिषिक्तस्य, पौलोमी भक्तिनिर्भरा ॥ ६ ॥ अनंजितासिते भर्त्तुर्लोचने सान्द्रपक्ष्मणी । पुनरंजनसंस्कारमाचार इति लम्भिते ॥ ७ ॥ कर्णावविद्धसच्छिद्रौ, कुण्डलाभ्यां विरेजतुः । कान्तिदीप्ती मुखे द्रष्टुमिंद्वर्काभ्यामिवाश्रितौ ॥८॥ हारिणा मणिहारेण, कण्ठे शोभा महत्यभूत् । मुक्तिश्रीकण्ठिकादामचारुणा त्रिजगत्पतेः ॥ ९ ॥ बाह्वोर्युगं च केयूरकटकांगदभूषितम् । तस्य कल्पांघ्रिपस्येव, विटपद्वयमाबभौ ॥ १० ॥ रेजे मणिमयं दाम, किंकिणीभिर्विराजितम् । कटीतटेऽस्य कल्पागप्ररोहश्रियमुद्वहत् ॥११॥' इत्यादिपुराणेऽपि, एवं च जन्मावस्थामाश्रित्य पंचामृतस्नात्रादिवत् काश्मीरपूजावस्त्राभरणाद्यारोपः क्रियते तत्साम्प्रतं, अस्तु वा राज्यावस्थाप्रादुर्भावस्तथापि वैवाहिकावस्थावत्सरागत्वं न वक्तुं युक्तं, रागो हि स्त्रीसंसर्गरूपः, तस्य तु राज्याभिषेकसमयेऽभावात् , न हि कश्चिन्नृपं

सालंकारं दृष्ट्वा स्त्रीसंयोगरूपरागवान् भवति, रागस्तु स एव यदुक्तं मोक्षप्राभृतटीकायाम्- 'स्त्रीभिर्योगे रागवान् शत्रुभिर्योगे द्वेषवान् पुत्रादियोगे मोहवान्' इति द्विपंचाशत्तमगाथाव्याख्यायां श्रुतसागरसूरिणा, अन्यास्वपि श्रामण्यकैवल्याद्यवस्थासु भगवतः शरीरस्य सालंकारतया प्रतिभासातिशयादर्चासु तथाऽतिशयाभावात् सालंकारकरणे त्वस्य तथैवोपपत्तेश्च, न च राज्यावस्थाविर्भावो नोचित एवेति वाच्यम् , 'आदिमं पृथिवीनाथमादिमं निष्परिग्रहम्। आदिमं तीर्थनाथं च, वृषभस्वामिनं स्तुमः ॥ १ ॥' इति, तथा 'राज्यं चक्रपुरःसरं स्मरशरप्रायः स्वकान्तःपुरं, शक्रत्वं निखिलामरोपमुकुटस्पृष्टेष्टभूमीतलम्। पादाक्रान्तसुरासुरेन्द्रविलसन्मौलिप्रभूतप्रभं, तीर्थेशत्वपदं ददातु भवतां धर्म्मो जगन्मंगलम् ॥ १ ॥' इत्यादिना शास्त्रेषु तदवस्थास्तवनोपलब्धेः, अथ व्रतावस्थामाश्रित्य तदभावो याथावस्थ्यसूचक इति चेत्, न, तत्रापि अनन्यापेक्षस्वयंसुभगत्वस्य तव स्वीकारादिति प्रपञ्चितं प्राक्, अत एवास्मत्प्राचां वाचोयुक्तिः, तथा च तद्ग्रन्थः-अहो दिगम्बरा! भवंतः परिधापनिकां निरवद्यामपि श्रामण्यावस्थाया अर्वाक् अचेलत्वान्न कुर्वन्ति तदा कथं स्नानविलेपनपुष्पादिपूजां सावद्यां कुर्वन्ति, चैत्यं वा सावद्यं नित्याचरणं कथं कारयन्ति ?, न हि जिनश्चैत्यवासी, कथं च स्त्रियः सङ्घट्टयन्ति? कथं वा विविधभक्ष्यभोजनरूपो बलिर्ढौक्यते, भवन्मते केवलिनां भुक्तिरहितत्वात्, अथ यदि भवद्भिः केनापि हेतुना भुक्तिमभ्युपगम्य छद्मस्थावस्थामाश्रित्य बलिर्विधीयते तत्कथं प्रतिमायाः पाणावेव न मुच्यते, भगवतः पाणिपात्रत्वात्, कथं च पर्यङ्कासनस्थप्रतिमायाः पुरतो बलिर्ढौक्यते, भगवत उद्ध ( ऊर्ध्वे ) स्थैव भोजनकारित्वात्, कथं वारं वारं बलिर्ढौक्यते, एकवारमेव भक्तस्य पानीयस्य चानुज्ञानात्, यदि च भगवान् सिद्धबुद्ध इतिकृत्वा भक्तिमात्रमेवात्र क्रियते तर्हि किं भक्तिप्रतिपादकस्य शुभध्यानहेतोः श्रामण्यावस्थामंगीकृत्य वस्त्राभरणादिपूजाविशेषस्यान्तरायः

क्रियते इति, यत्तु वाणारसीयमते भगवच्छरीरे काश्मीरपूजादेरप्यनंगीकरणं तत्रैवं द्रष्टव्यं-कथं त्वया सिंहासनार्चा क्रियते स्नात्रं वा ?, श्रामण्यावस्थायां तद्भावात्, कैवल्यावस्थायां च भगवतः सिंहासनात् सार्द्धहस्तत्रयाद् दूरत एवाशातनाभयाल्लोकस्थितेः, अथ न जन्मावस्थामाश्रित्य स्नात्रं, किन्तु प्राक्काले सुवर्णमणिमयार्चासद्भावाद् अधुना तु कालानुभावाद्दार्षदप्रतिमास्तासां शुद्धिकरणाय स्नात्रमिति चेत्, न, दार्षदप्रतिमायाः काष्ठमय्याश्च प्रागपि सद्भावात्, कैवल्यावस्थाया एव केवलं पूज्यत्वे स्वीक्रियमाणे कथं बलिढौकनादीत्यादि प्राग्वत्, ततः श्रामण्यावस्थामाश्रित्य यथा ध्यानं पूजा च तथा जन्मावस्थामाश्रित्यापि तत्पूजाध्यानाद्यावश्यकमेवेष्टव्यम्, अत एव पञ्चामृतपूजा सुविचारेति । एवं पञ्चमपक्षोऽपि दक्ष एव, भगवद्बिम्बे स्वयं शोभनत्वाननुभवात्, साक्षान्मूर्तेस्तु शोभनत्वं तदतिशयसद्भावात्, एकीभावे वाग्भटे च साक्षान्मूर्त्तेरेव व्याख्यानं, अन्यथा 'अनध्ययनविद्वांस' इति विशेषणं दुर्घटं स्याद्, यदि च स्वयं सुभगत्वमास्थाय वस्त्राभरणान्तरायस्तथा देहनैर्मल्यमास्थाय स्नात्राभावोऽपि प्रसज्यते, न चेष्टापत्तिः, त्वत्प्राचां तदभ्युपगमात्, यदाह बोधप्राभृतवृत्तौ श्रुतसागरसूरिः-' पाषाणादिघटितस्य जिनबिम्बस्य पञ्चामृतैः स्नपनं अष्टविधैः पूजाद्रव्यैश्च पूजनं करु' इति, 'वपुरेवे' त्यादावपि प्रसन्नतया वीतरागद्वेषत्वं व्यंग्यं, नतु पूजाद्यभावे स्वयंशोभनत्वं, अस्तु वा स्वयंशोभनत्वं तथा साक्षाच्चेऽर्हतस्तादूप्ये सत्यपि प्रातिहार्यादीनां विशेषशोभाकारित्वमिव परिधापनिकाया अपि तथात्वेऽदुष्टत्वात्, यदाहुः श्रीमानतुंगगुरुचरणाः-'कुन्दावदातचलचामरचारुशोभं, विभ्राजते तव वपुः कलधौतकान्तम्' इति,

१ इदं उत्तरं तु वाणारसीयं प्रत्येव, प्राच्याशाम्बरमते पूजार्थं प्रत्यासन्नगमनंगीकारात्

वस्त्राभूषणालंकारसिद्धिः

कल्याणमन्दिरस्तोत्रे श्रीसिद्धसेनभगवानपि–'माणिक्यहेमरजतप्रविनिर्मितेन, शालत्रयेण भगवन्नभितो विभासि' भूपालस्तोत्रेऽपि यथा–"देव! श्वेतातपत्रत्रयचमरयुगाशोकभाश्चक्रभाषापुष्पौघाः सारसिंहासनसुरपटहैरष्टभिः प्रातिहार्यैः। साश्चर्यैर्भ्राजमान०" इति, यदपि रूपविपर्ययकारित्वमुक्तं तदपि न, काश्मीरपूजायामपि ताद्रूप्याभावात्, अथास्तु तस्या अप्यभाव इति वदन् वाणारसीयः प्रष्टव्यः, तन्निषेधः किं दुर्ध्यानहेतुत्वाद् रूपविपर्ययाद्वा शास्त्रानुक्तत्वाद्वा?, नाद्यः सतां शुभध्यानहेतुत्वात्, यथा चैतत्तथोक्तचरम्, एवमपि यथा दुर्ध्यानहेतुत्वेन काश्मीरपूजानिषेधः तर्हि जिनमूर्त्तेर्नाग्न्यमेव कथं न निषिध्यते?, तस्यापि स्त्रीणां दुर्ध्यानहेतुत्वात्, अथ तस्य याथावस्थ्यस्य सूचकत्वान्न दोष इति चेत्, न, भगवल्लिंगस्यादृश्यत्वे प्रतिबिम्बताव्याघाताद्, दृश्यत्वे सुभगताव्याघाताच्च, एतद्यथारूपकरणानर्हत्वाद्, अत एव विख्यातार्णवादौ वास्तुग्रन्थे सामान्यतो गुह्यपदेन प्रतिमाभागदानमुक्तं, न पुनर्लिंगप्रमाणं, एतावन्तो भागा लिंगदैर्घ्ये, इयन्तश्च लिंगस्थूलतायामिति, एवमपि तवापरितोषे नेत्रद्वयान्तरे श्यामकनीनिके तथा शीर्षे भ्रूयुगले शरीरे च रोमराजी कथं न क्रियते?, न च तन्नास्तीति वाच्यम्, यदुक्तं बोधप्राभृतवृत्तौ अर्हत्स्वरूपाधिकारे–'तीर्थंकराणां श्मश्रूणि कूर्चेश्च न भवति, शिरसि कुन्तलास्तु भवन्ती' ति; तथा च तत्रैवोक्तम्–'देवावि य नेरइया भोयभू चक्की य तह य तित्थयरा। सव्वे केसवरामा कामा निक्कुंचिया हुंति ॥ १ ॥ अत्र कूर्चस्यैव निषेधः, न च निर्गताः कचेभ्यो निष्कचा इति व्याख्येयं, दीक्षासमये महापुराणे प्रोक्तकेशपूजालक्षणविधेरनुपपत्तेः, न च लोचकरणान्न सन्ति कचा इति वाच्यं, पुनर्लोचकरणस्य अनुक्तत्वेन वृध्द्यभावस्य घातिकर्मक्षयजन्यत्वेन च केशानां सम्भवात्, अन्यथा देवानां निर्वाणकल्याणकरणं त्वन्मताभिप्रेतं दुर्घटं स्यादिति, तत एवादिपुराणे ऋषभप्रभोर्जटावर्णनम्, "संस्कारविरहात्केशा, जटीभूतास्तथा विभोः। नूनं तेऽपि तपःक्लेशमनुसोढुं

तथा स्थिताः ॥ १ ॥ मुनेर्मूर्ध्नि जटा दूरं, प्रसस्रुः पवनोध्धुताः। ध्यानाग्निनेव तप्तस्य, जीवस्य स्वर्णकालिकाः ॥ २ ॥ इत्यष्टादशपर्वणि, तथा-परिनिर्वृतं जिनेन्द्रं ज्ञात्वा विबुधा ह्यथाशु चागम्य । देवतरुरक्तचन्दनकालागुरुसुरभिगोशीर्षैः ॥ १ ॥ अग्नीन्द्रा जिनदेहं मुकुटानलसुरभिधूपवरमाल्यैः । अभ्यर्च्य गणधरानपि गता दिवं खं भवनभवनाः ॥ २ ॥ तथा हरिवंशे 'तडिद्वद्देववृष्टं च, कृत्वा देहं जिनेशिनः । स्वेषां पुण्यार्थमुत्कृष्टं, महाधर्म्मानुरागतः ॥ १ ॥ चन्दनागुरुकर्पूरैः, सुगन्धिबहुवस्तुभिः । अग्नीन्द्रमुकुटोत्पन्नपावकेन महाधियः ॥ २ ॥ विधाय दहनं तस्य, सम्प्रणम्य पुनः पुनः । तद्भस्म प्रीतितो लात्वा, पवित्रं पापनाशनम् ॥३॥' इति । न द्वितीयो, रूपविपर्ययः किं समवसरणावस्थायाः यत्किञ्चिदवस्थाया वा?, नाद्यः, तव मतेऽप्यूर्द्धस्थितिजातकेवलानां पर्यङ्कासनप्रतिमायाः पर्यंकासनस्थितिजातकेवलज्ञानानां कायोत्सर्गस्थप्रतिमायाश्च पूज्यमानत्वात्, न च त्वन्मते केवलिनामवयवचलाचलत्वं सम्मतं येनोभयथा स्थितिरर्हतां सम्भाव्यते, यदुक्तं वाणारसीदासेन "जो अडोल पर्यंक मुद्राधारी सर्वथा, अथवा काउसग्गमुद्रा थिर पाल खेतफरस करमप्रकृति कै उदै आयें विना डग भैंरं अंतरिक्ष जाकी चाल है' इति, एवमदृश्यमानशिश्नाकारकरणादपि रूपवैपरीत्यमेव, न च तद्दर्शनमेव परेषां न विकारहेतुः इत्येष्टव्यं, निरतिशयत्वप्रसंगात्, यदि तावत्स्वकीयमवाच्यमपि नादृश्यं तर्हि किमपरैर्वराकैरतिशयैरिति, किञ्च-पुनः पुना रूपविपर्ययः काश्मीरपूजादिषु प्रसज्यते तर्हि तीर्थंकराणां यथा देहमानमेव बिम्बं कथं न कार्यते ?, तदितरत्कथं पूज्यते ?, अपिच-'शुद्धस्फाटिकसंकाशं, तेजोमूर्त्तिमयं वपुः ।

१ भशब्देन ज्योतिष्का वनशब्देन व्यन्तरा भवनाः-भवनपतयः खं-नभः दिवं-स्वर्गम् ।    २ चातुर्मुख्यादिभिः

जायते क्षीणमोहस्य, समधातुविवर्जितम् ॥ १ ॥' इति भवत्प्राचामुक्तेः क्षीणमोहत्वाविशेषेऽपि नेमिप्रभृतेरर्हतो बिम्बे श्यामादिवर्णविपर्ययः किं स्वीक्रियते ?, घातिकर्म्मक्षयजातिशयजन्यं चातुर्मुख्यं वा न कथं क्रियते?, भगवतस्तदानीं तदवभासात्, एवं च कथं पार्श्वस्य फणाटोपः, तस्यामवस्थायां तदभावात्, एवं कथं वा न भगवत ओष्ठयोः पाणिपादतले वा रक्तिमा लक्षणरूपपट्टकूल षोडशाभरणानि च, तदवस्थायां तत्सत्त्वात्, अत्र पट्टकूलषोडशाभरणाक्षरसम्मतये तदर्थिना श्रीश्रुतसागरसूरिकृतषट्प्राभृतटीकादिगम्बरग्रन्थौ वीक्ष्यौ, हरिवंशपुराणेऽप्युक्तम्—"भास्करोऽब्धिस्तथा वीणा, व्यंजने वेणुरुत्तमः । मृदंगं पुष्पमाला च, हट्टः पट्टाम्बरं शुभम् ॥ १ ॥ नानाभरणसन्दोहः, कुंडलादिकनामभृत् । ' इति सप्तमाधिकारे, दर्शनप्राभृतसूत्रे तु, "विहरइ जाव जिणिंदो सहसट्ठसुलक्खणेहिं संजुत्तो । चउतीसअइसयजुओ सा पडिमा थावरा भणिया ॥ १ ॥' इति, एतेन समवसरणावस्थायां दिवाकरसहस्रभासुरपरमौदारिकदेहवत्त्वात् तत्प्रतिबिम्बस्य च तथाविधकान्त्यभावाद्रूपविपर्यये सत्यपि तद्भिया काश्मीरादिपूजात्यागे तेषां दुरभिनिवेश एवेत्यापादितं, अस्मन्मते तु नामी दोषा यथा कथंचित् स्वशक्त्या भासुरत्वप्रतिपादनात् प्रसादनीयतया नित्यप्रतिमानुसारेण बिम्बकरणांगीकाराच्च, अत एव स्त्रीमोक्षांगीकारेऽपि न तदाकारप्रतिमापूजनं, अप्रसादनीयत्वाद्, अत एव शयानानां गोदोहोत्कटिकाद्यासनस्थितानां न प्रतिमापूजनमिति, अथायं रूपविपर्ययो न सर्वथा, काश्मीरादिपूजायां तु सरागं रूपं भगवांस्तु वीतराग इति सर्वथा रूपविपर्यय इति चेत् न, सरागत्वस्य प्रागेव दत्तोत्तरत्वात्, यदि कदाचिद्विचार्यते तदा सपरिग्रहत्वरूपं भवति तस्यादुष्टत्वात्, अथ द्रष्टृणामपि परिग्रहोल्लासादस्ति दोष इति चेत् न, भगवत्समवसरणस्थमूर्त्या व्यभिचारात्, नाग्न्यदर्शनेऽपि स्त्रीणामविकारादित्युक्तचरं, बिम्बेऽतिशयानतिशयाभ्यामावयोः समः समाधिरिति यत्किंचिदेतत् । न

द्वितीयः, यत्किंचिदवस्थाया रूपविपर्ययस्यादोषात्। शास्त्रानुक्तत्वरूपस्तृतीयपक्षोऽपि न युक्तः, अस्मन्मते बहुषु शास्त्रेषु तद्दर्शनात्, दिगम्बरशास्त्रेष्वपि पूजापाठादिषु काश्मीरपूजाया अनिषेधाच्च, यदुक्तमेकीभावे— "भक्तिप्रह्वनरेंद्रपूजितपद ! त्वत्कीर्त्तने न क्षमा" इति, भूपालस्तोत्रेऽपि-" दिविजमनुजराजव्रातपूज्यक्रमाब्ज " इति, व्रतमाहात्म्येऽपि जिनेद्रपादाम्बुरुहार्चनीयफलेन इति, आशाधरोऽप्याह— "व्योमापगाद्युत्तमतीर्थवारिधारावरांभोजपरागसारा । तीर्थंकराणाभियमंघ्रिपीठे, स्वैरं लुठित्वा त्रिजगत् पुनातु ॥ १ ॥ जलम् ॥ काश्मीरकृष्णागुरुगन्धसारकर्पूरपूरस्य विलेपनेन । निसर्गसौरभ्यगुणोल्वणानां, संचर्चयाम्यंघ्रियुगं जिनानाम् ॥ २ ॥ गन्धः ॥ आमोदमाधुर्यनिधानकुन्दसौंदर्यशुम्भत्कलमाक्षतानाम् । पुंजैः समक्षैरिव पुण्यपुंजैर्विभूषयाम्यग्रभुवं विभूनाम् ॥ ३ ॥ अक्षतः ॥ सुजातजातीमुकुदाब्जकुन्दमन्दारमल्लीबकुलादिपुष्पैः । मत्तालिमालामुखरैर्जिनेन्द्रपादारविन्दद्वयमर्चयामि ॥ ४ ॥ पुष्पम् ॥ नानारसव्यंजनदुग्धसर्पिःपक्वान्नशाल्यन्नदधीक्षुभक्ष्यम् । यथारहेमादिसुभाजनस्थं, जिनक्रमाग्रे चरुमर्पयामि ॥५॥ चरुः ॥ ओं लोकानामर्हतां भूर्भुवःस्वर्लोकानेकांकुर्वतां ज्ञानधाम्नाम्। दीपव्रातैः प्रज्वलत्कीलजालैः, पादाम्भोजद्वन्द्वमुद्दीपयामि ॥ ६ ॥ दीपः ॥ श्रीखण्डादिद्रव्यसन्दर्भगर्भैरुद्यद्धूम्यामोदितस्वर्गिवर्गैः । धूपैः पापव्यापदुच्छेददक्षानंघ्रीनर्हत्स्वामिनां धूपयामि ॥ ७ ॥ धूपः ॥ फलोत्तमैर्दाडिममातुलिंगनारंगपूगाम्रकपित्थपूर्वैः । हृद्घ्राणनेत्रोत्सवमुद्गिरद्भिः, फलैर्भ(र्य)जेऽर्हत्पदपद्मयुग्मम् ॥ ८ ॥ फलम् ॥ अथ काश्मीरादिपूजापि नैवेद्यादिवदग्रे एव कर्त्तव्या न तु तद्विलेपनं शरीरे, तत एव सर्वत्र पादाभिधानं सूपपन्नं, न च पादेऽपि विलेपनं कार्यं, भगवतः शरीरे हस्तस्पर्शस्यैव दोषात्, पादविलेपनवचस्तु ग्रामाधिपेन मण्डलाभिपतेर्दूरादपि प्रत्यक्षप्रणामकरणे ग्रामाधिपः पादयोर्लग्न इति व्यवहारवद् व्यवस्थाप्य पादपीठस्यैव पूज्यत्वात्, यद्

भक्तामरस्तवे— " विबुधार्चितपादपीठ" इति, एतदपि न युक्तं, एवं सति स्नात्राभिषेकस्याकरणं प्रसज्यते, न च तदपि न युक्तमिति, भूपालस्तोत्रे—"देवेन्द्रास्तव मज्जनानि विदधु" रिति, व्रतमाहात्म्येऽपि— "जिनाभिषेकार्जितपुण्यपुंजात्, समग्रराज्याभिषवं लभन्ते" इति, यदि च जलपूजा अभिषेककरणेनैव युक्तिमती तर्हि काश्मीरपूजापि विलेपनेनैवोपपद्यते, न च पादकथनात् पादयोरेव विलेपनं देवपूजायां, 'मानवा मौलितो वर्ण्या, देवाश्चरणतः पुनः' इति नीतिशास्त्रवचनात्, "अंघ्रिजानुकरांशेषु, मूर्ध्नि पूजा यथाक्रम" मिति विधानाच्च, मुख्यतया पादकथने नवांगपूजाया अपि लक्षणाद् ग्रहणं न्याय्यम्, अत एव भावसंग्रहे त्वन्मते- -- "चंदणसुयंधलेओ जिनवरचलणेसु कुणइ जो भविओ । लहइ तणुं विकिरिऊं सहावसुयंधयं विमलं ॥ १ ॥ " अत्र चलनशब्दाद् बहुवचनम् विलेपनफलस्यापि सर्वांगीणत्वकथनं, यदि चलनकथनात्तत्रैव पूजा तर्हि सिद्धचक्ररत्नत्रययंत्रादिपूजायां तन्न घटते, चरणाभावात्, यस्तु काश्मीरादिद्रव्यमेव नैवेद्यवत् पुरो ढौकते तन्मते दीपस्यापि करणं न युक्तं, वह्न्यंगारवर्त्तिदीपतैलादिढौकनमेवोचितं, दीपस्य प्रज्वालनेनैव पूजा धूपस्योत्क्षेपणेनैवेतिचेत्, अत्रापि विलेपनेनैव पूजौचितीमंचति, यथायोग्यतयैव वस्तूनां प्रयोगेण भक्त्यंगत्वात्, तत एवाक्षतादिप्रयोगे 'विभूषयाम्यग्रभुवं विभूना' मित्यादिको यथायोग्यं वस्तुप्रयोगपाठः पूजाशास्त्रे, अथ भगवतः समवसरणस्थबिम्बाकारस्यैव पूज्यत्वात् तत्र चास्ति प्रत्यासन्नगमनदोष इति चेत् न, पूजार्थमासन्नगतेरनिषेधात्, यदुक्तं महापुराणे एकचत्वारिंशत्तमपर्वणि जिनसेनसूरिणा " स्तुत्वा स्तुतिभिरीशानमभ्यर्च्य च यथाविधि । निषसाद यथास्थानं, धर्म्मामृतपिपासितः॥१॥ इति, तथा सप्तदशमपर्वण्यपि-अथ भरतनरेंद्रो रुद्रभक्त्या मुनींद्रं, समधिगतसमाधिं सावधानः स्वसाध्ये । सुरभिसलिलधारागन्धपुष्पाक्षताद्यैरयजत जितमोहं सप्रदीपैश्च धूपैः ॥ १ ॥ न

चात्र सिंहासनाद्यारेकणीयं, यदि तत्पूजाऽभविष्यत्तदा मानस्तंभचैत्यद्रुमस्तूपधर्म्मचक्रादिवदस्याप्यभिधानमकथयिष्यत् इति, प्रतिकूलतर्कपराहतत्वात्, पादपीठपूजाकथनं तु स्तूपादिपूजावत् महिम्नो व्यंजकं, यस्याश्रयणात् पादपीठमपि पूज्यं तर्हि स भगवान् शरीरे कथं न पूज्य इत्येवं शरीरपूजाया व्यवस्थापकमेव, न तद्बाधकं, राज्ञः पादलग्नदृष्टान्तोऽपि आसनासन्नसेवकविवेकेन समाधेयः, आसन्ना हि वस्त्रपरिधापनचन्दनमाल्यालंकारादि साक्षादेव यथायोग्यं कुर्वंति, न पुनर्दूरतः, तेषां तथाकरणे प्रत्युत राज्ञः कोपाद्, अस्तु वा समवसरणे आसन्नगमनाभावस्तथापि बिम्बे साक्षाद्दशायाः सर्वथा अनाचरणीयत्वात्, कथमन्यथा चैत्यं क्रियते, न हि जिनश्चैत्यवासीत्यादि प्राग्वत् । एवं शास्त्रसम्मत्या सिद्धे काश्मीराद्यर्चने रूपविपर्ययो जायमानोऽपि न सरागत्वं भगवतस्तद्भक्तस्य वा व्यंजयति, तथा वस्त्रादिसद्भावोऽपि, नाप्येतच्छोभाकारित्वं जिनमुद्राव्याघातकं, दार्पदादिपुद्गलानां तथाविधकान्त्यभावेन सुवर्णमणिमयपरिधापनिकया भगवतो यथास्थितकायकान्तेः कथंचित्प्रतिभासेन सुतरां तदुन्नयनात्, न च तदैतस्याः सार्वदिकत्वप्रसंग इति, इष्टापत्तेः, न चाभरणानां निर्माल्यत्वं, "भोगविणट्ठं दव्वं निम्मल्लं" इति वचनात्, पुनः पुनस्तदारोपे न दोषः, शक्रस्तवादिस्तुतिवत्, एवमाशातनाबाहुल्यमप्यकिंचित्करं, तथाहि-आशातनानाम दुर्भावजन्या, अन्यथा गुरोः कटिबाधायां दीयमानमुष्टिप्रहारस्यापि तत्प्रसक्तेः, भगवतः पुरो गच्छतां देवानां पृष्ठिदानवत्, ततो नेयमाशातना, अस्तु वा तथापि तत्त्वतः प्रतिष्ठाभिषेकात् पूर्वमेव चक्षुर्युगलश्रीवत्सतिलकादिन्यासस्यौचित्येन, श्रस्ते च पुनरारोपस्य मा भूद्भगवत्प्रतिमाया अशोभनत्वमिति धिया क्रियमाणत्वेन च न दोषः, त्वरितम्लेच्छादिभये पवित्रीभवनं विना मा भूत् प्रतिमाभङ्ग इत्याशयेन क्रियमाणधरणापह्नवतादृशस्थाननिक्षेपादिवत्, यस्तु स्नात्राभावः स तु करोपरिकरस्था-

पनेऽन्तराले स्नात्राभाववन्न दोषाय, स्वांगत्वाददोषेऽत्रापि तुल्यता, यस्तु सङ्घट्टदोषः तत्र विवेकिनो विवेक एव प्रमाणं, यथा न संघट्टस्तथैवोपदशात्, न स्यात्तद्भयात् परिधापनिकाऽभाव एव, म्लेच्छादिभङ्गभयात् प्रतिमाऽभाववत्। पष्ठपक्षेऽपि उभयसिद्धस्य हेतोर्गमकत्वमेव, भवतामागमेऽपि जन्मावस्थामाश्रित्य प्रागुक्ताक्षरैर्वस्त्राभरणादिपूजायाः प्रतिपादनात्, द्रव्यसंग्रहाध्यात्मशास्त्रवृत्तौ उपगूहनाधिकारे-"मायाब्रह्मचारिणा पार्श्वभट्टारकप्रतिमालग्नरत्नहरणं कृत" मित्युक्तं तत् कुत्र ?, न च तत् छत्रस्थं, छत्रेऽपि वीतरागस्य नौचित्यात्, नैर्ग्रन्थ्यस्वरूपव्याहतेः, अथ तत्र रत्नांगीकारः चेदिष्टं नः समीहितं, छत्रसिंहासनादिपरिकरे मणीनां स्पष्टोपलम्भात्, प्रतिमायां तदनङ्गीकारो वृथैव, यदुक्तं भक्तामरस्तोत्रे "सिंहासने मणिमयूखशिखाविचित्रे" इति, अत एव तपस उद्यापने भूषणार्चा भवन्मते युक्तिमता, पूज्यपादाः श्रीउमास्वातिवाचकाः पूजाप्रकरणेऽप्याहुः,—"स्नात्रं विलेपनविभूषणपुष्पवासधूपप्रदीपफलतन्दुलपत्रपूगैः। नैवेद्यवारिवसनैः प्रवरातपत्रवादित्रगीतनटनस्तुतिकोशवृद्ध्या ॥ १ ॥" अत एवास्मत्पाक्षिकप्रमाणीकृतागमे पुष्पार्चया कुमारपालनृपादयः सप्तदशभेदपूजारचने द्रुपदात्मजाप्रमुखा बोधिं प्राप्ता अनेके श्रूयन्ते, पूजाविवरणं जीवाभिगमराजप्रश्नीयोपांगादिषु प्रसिद्धं, परं प्रक्रान्तमतवतां तदश्रद्धानान्नात्र तद्विस्तरः, यदपि चामुण्डादिदेवप्रतिमासाम्यं तदपि नकिञ्चिद्, यतस्तस्यां क्रूरत्वसायुधत्वादिकृतो भेदो महीयान्, अन्यथा चामुण्डादिप्रतिमापि हस्तपादाद्यवयववती प्रतिमाऽर्हत्यपि तथेति न भेदमर्हति, न च राज्यावस्था भगवतः स्वीक्रियते तर्हि सायुधत्वं किं नाविर्भाव्यत इति वाच्यं, यथायोग्यतयैव तद्भक्तिकरणौचित्यात्, अन्यथा छत्रसिंहासनादिराज्यचिह्नस्वीकारे तत्रापि सायुधत्वकरणप्रसंग इति, यदपि ध्यानाधिरूढयोगीन्द्रप्रतिबिम्बेऽनलंकारत्वं प्रत्यपादि तदपि भगवतोऽर्हतः प्रतिबिम्बे छत्रसिंहासनादिपारमैश्वर्यव्यञ्जनेन कृतोत्तरमिति, प्रयोगश्चात्र-मोक्षार्थिना श्राद्धेन

जिनमूर्त्तेः परिधापनिका कार्या, शुभध्यानहेतुत्वाद्, यदेवं तदेवं, यथा चैत्यालयः. एवं भक्तिमात्रत्वशोभाकारित्वागमोक्तत्वादयो हेतवोऽप्यूह्या इति सर्वं सुस्थं,-यदपि कलुषबुद्धिर्याति नो शुद्धबोधं, विविधरसविलासैर्युक्तिबोधप्रकाशैः। जिनमतरतचित्तैर्नो विधेयं तथापि, तरणिकरणिर्धारैः सत्त्वबोधेऽलसत्वम् ॥ १ ॥ जलधरजलवृष्टिर्नन्दिताशेषसृष्टिः, क्वचन वचनयोगाद्दत्तकोपाधिरोपा। शरभरभसवृत्तेर्जायते नाशहेतुर्न खलु स घनदोषः पोष्यते दोषवद्भिः ॥ २ ॥ मतिपरिणतिरेषाऽऽस्ते ह्यशेषा विशेषादविरलबलमोहस्यावमोहस्य वश्या। प्रतिवचनविदाऽस्मात् सम्प्रदायान्नयायान्मनसि न सितलेश्या प्राञ्जले स्याद्विमोच्या ॥ ३ ॥

एवं चानेकविवेकवाक्यैः सुदृशां बोधने, तथा "स्वर्गावतारेण हि रत्नवृष्टिः, शक्राज्ञयाऽभून्नवमास यावत्। स्वप्नावली विश्वसुखाय येषां, ते सन्तु कल्याणकरा जिना वः ॥ १ ॥ ये स्नापिता जन्मनि मूर्ध्नि मेरोः, शक्रेण दुग्धार्णववारिपूरैः। बाल्ये स्थिता हेमघटैः सुराणां, ते सन्तु कल्याणकरा जिना वः ॥ २ ॥ यानेन येऽवाप्य विभूष्य नीतास्तपोवनं सन्निहिताक्षतौघाः। स्वोत्पाटितालक्यसुरासुरेज्याः, ते सन्तु० ॥३॥ जगत्रयोद्योतकरीं प्रयाता, घातिक्षयात् केवलबोधलक्ष्मीम्। सत्प्रातिहार्याभरणार्चिताङ्गाः, ते सन्तु० ॥४॥ प्रदग्धरज्ज्वाकृतिकर्म्मनाशे, तदङ्गपूजा मुकुटादलेन। कृताऽमरैश्चन्दनदेवकाष्ठैस्ते सन्तु० ॥५॥ इत्यादि ब्रह्मसेनकृतपञ्चकल्याणकपूजापाठस्य। संस्नापितस्य घृतदुग्धदधीक्षुवाहैः, सर्वाभिरौषधिभिरार्हतमुज्ज्वलाभिः। उद्वर्तितस्य विदधाम्यभिषेकमत्र, कालेयकुंकुमरसोत्कटवारिपूरैः ॥ ६ ॥ इति पञ्चामृतस्नात्रस्य, तथा--"काश्मीरपङ्कहरिचंदनसारचन्द्रनिस्यन्दनाभिरचितेन विलेपनेन। अव्याजसौरभतनोः प्रतिमां जिनस्य, सञ्चर्चयामि भवदुःखविनाशनाय ॥ १ ॥ इति श्रीजिनप्रतिमाङ्गे काश्मीरपूजायाः, येऽभ्यर्चिता मुकुटकुण्डलहाररत्नैः, शक्रादिभिः सुरगणैः स्तुतपादपद्माः। तेऽमी जिनाः प्रवरवंश-

जगत्प्रदीपास्तीर्थंकराः सततशान्तिकरा भवन्तु ॥ १ ॥ इत्यादिभूषणपूजायाश्चाक्षरोपलम्भेऽपि वाणारसीयोऽर्हदंगपूजां न श्रद्दधे
इति गाथार्थः ॥ ११ ॥ अथ नेपथ्यविश्रामे दिगम्बरः प्रविशति—

**महिलाण मुत्तिगमणं कवलाहारो य केवलधरस्स । गिहिअन्नलिंगिणोऽवि हु सिद्धी णत्थित्ति सद्दहइ ॥२१॥**

**महिलानां मुक्तिगमनं कवलाहारश्च केवलधरस्य । गृहिअन्यलिङ्गिनोऽपि खलु सिद्धिर्नास्तीति श्रद्धत्ते ॥२१॥**

'महिलानां' द्रव्यतो मनुष्यस्त्रीणां तद्भवे 'मुक्तिगमनं' सिद्धिपर्यायोदयो न भवति, द्रव्यत इति कथनाद्भावतः स्त्रीणां तदवि-
रुद्धं, यदुक्तं गोमट्टसारवृत्तौ जीवकाण्डे श्रीनेमिनमस्कारद्वारे—'ओघा चोदसठाणे सिद्धे वीसइविहाणमालावा । वेदिकसाय-
विभिण्णे अनियट्टी पंच भागे य ॥ ६१४ ॥ गुणस्थानचतुर्दशकमार्गणास्थाने च प्रसिद्धे, विंशतिविधानां 'गुण जीवा पज्जत्ती ३
पाणा सण्णा मइंदिया काया ८ । जोगा वेद कसाया११ नाणसंजम दंसणा लेसा १५ ॥१॥ भव्वा सम्मत्तं चिय १७ सण्णी आहा-
रगा य उवओगा २ । जुग्गा परूविदव्वा ओवादेसेसु समुदाया ॥२॥ इति गाथाद्वयोदितानां सामान्यपर्याप्तापर्याप्तास्त्रय आलापा
भवन्ति, तत्र गुणस्थानेष्वाह—'ओघे मिच्छदुगेवि य अयदपमत्ते सजोगठाणम्मि । तिण्णेव य आलावा सेसेसिको हवे णियमा
॥ ६९५ ॥' गुणस्थानेषु मिथ्यादृष्टिसासादनयोरसंयते प्रमत्ते सयोगे च प्रत्येकं त्रयोऽप्यालापा भवन्ति, शेषनवगुणस्थानकेषु
एकः पर्याप्तालापक एव नियमेन । अमुमेवार्थं विवादयति,—" सामण्णं १ पज्जत्तं २ अपजत्तं ३ चेइ तिण्णि आलावा । दुवियप्प-
मपज्जत्तं लद्धी णिव्वत्तगं चेइ ॥६९६॥" स्पष्टम्, ते आलापाः सामान्यः पर्याप्तः अपर्याप्तश्चेति त्रयो भवन्ति, तत्र अपर्याप्तालापो
द्विधा, लब्ध्यपर्याप्तो निवृत्त्यपर्याप्तश्चेति । "दुविहंपि अपज्जत्तं ओघे मिच्छे य होइ णियमेण । सासण अयदपमत्ते णिव्वत्तियऽ-

पुण्णगं होइ ॥ ६९७ ॥ स द्विविधोऽप्यपर्याप्तालापः सामान्ये मिथ्यादृष्टावेव भवति, नियमेन, सासादनासंयतप्रमत्तेषु नियमेन निवृत्त्यपर्याप्तालाप एव भवति । "जोगं पडिजोगिजिणे होइ हु णियमा अपुण्णगत्तं णु । अवसेसणवट्ठाणे पज्जत्तालावगो एक्को ॥ ६९८ ॥ योगं प्रतियोगमाश्रित्यैव सयोगे नियमेन खलु अपूर्णकत्वं भवति, तु पुनः, अवशेष ( नव ) गुणस्थानेष्वेकः आलापः पर्याप्त एव । चतुर्दशमार्गणास्थानेष्वाह "सत्तण्हं पुढवीणं ओघे मिच्छे य तिण्णि आलावा । पढमाविरएवि तहा सेसाणं पुण्णगालावो ॥ ५९९ ॥ नरकगतौ सामान्येन सप्तभूमिषु मिथ्यादृष्टौ त्रय आलापाः स्युः, तथेति प्रथमपृथिव्यविरतेऽपि त्रय एव आलापाः स्युः, बद्धनारकायुर्वेदकसम्यग्दृष्टेस्तत्रोत्पत्तिभावात् शेषपृथिव्यविरतानामेकः पर्याप्ताभाव एव, सम्यग्दृष्टेस्तत्रानुत्पत्तेः । "तिरिय चउक्काणोघे मिच्छदुगे अविरए य तिण्णेव । णवरं जोणिणिअयए पुण्णो सेसेवि पुण्णो उ ॥ ७०० ॥ तिर्यग्गतौ पंचगुणस्थानेषु सामान्यपंचेंद्रियपर्याप्तयोनिमत्तिरश्चां चतुर्णां साधारण्येन मिथ्यादृष्टिसासादनासंयतेषु प्रत्येकं त्रय आलापा भवन्ति, नवरं तत्रायं विशेषः—योनिमदसंयते पर्याप्तालाप एव, बद्धायुष्काणामपि सम्यग्दृष्टीनां योनिमतीषु षण्ढेषु च उत्पत्तेरसम्भवात्, तु पुनः मिश्रदेशसंयतयोरपि पर्याप्तालाप एव । "तेरिच्छलद्धि-अपज्जत्ते एक्को अपुण्णआलावो । मूलोघं समणुतिए मणुसिणि अयदम्मि पज्जत्तो ॥ ७०१ ॥ तिर्यग्लब्धिअपर्याप्तके एकः अपर्याप्तालाप एव, मनुष्यगतौ सामान्यपर्याप्तयोनिमन्मनुष्येषु प्रत्येकं चतुर्दशगुणस्थानेषु गुणस्थानवत् मूलौघः स्यात्, तथापि योनिमदसंयते पर्याप्तालाप एव, कारणं तिर्यग्योनिमतीनामुक्त तदेव, पुनरयं विशेषः-असंयततिरश्चां प्रथमोपशमवेदक-सम्यक्त्वद्वयं असंयतमानुष्यां प्रथमोपशमवेदकक्षायिकसम्यक्त्वत्रयं च संभवति, तथाऽप्येको भुज्यमानपर्याप्तालाप एव,

योनिमतीनां पंचमगुणस्थानादुपरि गमनासंभवाद् द्वितीयोपशमसम्यक्त्वं नास्ति । "मणुसिणि पमत्तविरए आहारदुगं तु णत्थि नियमेण । अवगयवेदमणुस्सिणि सण्णा भूदगइमासज्ज ॥ ७०२ ॥ द्रव्यपुरुषभावस्त्रीरूपे प्रमत्तविरते आहारकतदंगोपांगनामोदयो नियमेन नास्ति, तुशब्दादशुभवेदोदये मनःपर्यायपरिहारविशुद्धी अपि, न भावमानुष्यां चतुर्दश गुणस्थानानि, द्रव्यमानुष्यां पंचैवेति ज्ञातव्यम् । अपगतवेदानिवृत्तिकरणमानुष्यां कार्यरहिता मैथुनसंज्ञा भूतपूर्वगतिमाश्रित्य भवीत । "णरलद्धिअपज्जत्ते एक्को उ अमणुण्णगो य आलावो । इति गाथार्द्धं, तुः पुनः मनुष्यलब्ध्यपर्याप्ते एकः लब्ध्यपर्याप्तालाप एवेति तस्यार्थः। ननु किं नाम द्रव्यतः स्त्रीत्वं भावतः स्त्रीत्वं वा ? कथं चानयोर्भेदो ? येन द्रव्यतः स्त्रियां पंच गुणस्थानानि भावतः स्त्रियां चतुर्दशेति चेत् न, वेदस्योभयरूपत्वेन प्रतिपादनात्, गोमट्टसारे तथोक्तेः—, "पुरिसित्थिसंढवेदोदयम्मि पुरिसित्थिसंढओ भावे । णामोदयेण दव्वे पाएण समा कहिं विसमा ॥ २५९ ॥ पुरुषस्त्रीषण्ढाख्यत्रिवेदानां चारित्रमोहभेदनोकषायप्रकृतीनामुदयेन भावे-चित्तपरिणामे यथासंख्यं पुरुषः स्त्री षण्ढश्च भवति, तथा निर्माणनामकर्म्मोदययुक्तांगोपांगनामकर्म्मविशेषोदयेन

---

१ द्वितीयोपशमसम्यक्त्वं मनःपर्यायज्ञानिनि स्यात्, न चाहारकर्द्धिप्राप्तेनापि परिहारविशुद्धौ, त्रिंशद्वर्षैर्विना संयमस्यासंभवात्, द्वितीयोपशमसम्यक्त्वस्य तावत्कालमनवस्थानात, अव्यक्ततत्संयमस्योपशमश्रेणिमारोढुमपि दर्शनमोहोपशमाभावाच्च तद्द्वयसंयोगाघटनात् ।

२ अनिवृत्तौ प्रथमभागे गुण १ जीव १ प ६ प्रा १० सं २ मै । प । ग १ इं १ पंका १ यो ९ वे ३ क ४ ज्ञा ४ संयम २ सा छे । दं ३ ले ६ भा १ भा १ सं २ उ । क्षा । सं । आ १ । उपयोग ७ इति गोमट्टसारे ।

द्रव्ये-पुद्गलद्रव्यपर्यायविशेषे पुरुषः स्त्री षण्ढश्च भवति, तद्यथा-पुंवेदोदयेन स्त्रियामभिलाषरूपमैथुनसंज्ञाक्रान्तो जीवो भावपुरुषो भवति, स्त्रीवेदोदयेन पुरुषाभिलाषरूपमैथुनसंज्ञाऽऽक्रान्तो जीवो भावस्त्री भवति, एवं तृतीयवेदोदयेन उभयाभिलाषे भावनपुंसकम्। पुंवेदोदयेन निर्माणनामकर्मोदययुक्तांगोपांगनामकर्मोदयवशेन श्मश्रुकूर्चशिश्नादिलिंगांकितशरीरविशिष्टो जीवो भवप्रथमसमयमादिं कृत्वा तद्भवचरमसमयपर्यन्तं द्रव्यपुरुषो भवति, स्त्रीवेदोदयेन निर्माणनामकर्म्मोदययुक्ताङ्गोपाङ्गनामकर्म्मोदयेन निर्लोममुखस्तनयोन्यादिलिङ्गलक्षितशरीरयुक्तो जीवो भवप्रथमसमयमादिं कृत्वा तद्भवचरमसमयपर्यन्तं द्रव्यस्त्री भवती, नपुंसकवेदोदयनिर्माणनामकर्म्मोदययुक्तांगोपांगनामकर्म्मोदयेनोभयलिंगव्यतिरिक्तदेहाङ्कितो भवप्रथमसमयमादिं कृत्वा तद्भवचरमसमयपर्यन्तं द्रव्यनपुंसकं जीवो भवति, एते द्रव्यभावभेदाः प्रायेण प्रचुरवृत्त्या देवनारकेषु भोगभूमिजसर्वतिर्यग्मनुष्येषु च द्रव्यभावाभ्यां समवेदोदयाङ्किता भवन्ति, क्वचित् कर्म्मभूमिमनुष्यतिर्यग्गतिद्वये विषमा-विसदृशा अपि भवंति, यथा-द्रव्यतः पुरुषे भावपुरुषो भावस्त्री भावनपुंसकं, द्रव्यतः स्त्रियां भावपुरुषो भावस्त्री भावनपुंसकम्, द्रव्यतो नपुंसके भावपुरुषो भावस्त्री भावनपुंसकमिति विषमत्वं-द्रव्यभावयोरनियमः कथितः, द्रव्यपुरुषस्य क्षपकश्रेण्यारूढानिवृत्तिकरणसवेदभागपर्यन्तं वेदत्रयस्य परमागमे-"सेसोदयेणवि तहा झाणोवजुत्ताय ते उ सिज्झंति" इति प्रतिपादितत्वेन सम्भवात्। तत एव गोमट्टसारे आलापपद्धतौ मानुषीणां गु० १४

---

३ योनिर्मृदुत्वमस्थैर्य, मुग्धता क्लीवता स्तनौ। पुंस्कामितेति लिङ्गानि, सप्त स्त्रीत्वे प्रचक्षते ॥१॥ मेहनं खरता दार्ढ्यं, शौडीर्यं श्मश्रु धृष्टता। स्त्रीकामितेति लिङ्गानि, सप्त पुंस्त्वे प्रचक्षते ॥ २ ॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम्। नपुंसकं बुधाः प्राहुर्मेहनं लघु दीपनम् ॥३॥

जी २ प ६ प्रा १०।७ सं ४ शून्य च ग १ इं १ का १ योग ११ शून्य च वे १ शून्य च क ४ शून्य च ज्ञा ७ म श्रु अ के कु कु वि । सं ६ अ दे सा छे सू प. दं ४ च अ अ के, ले ६ भा ६ शून्य च भ २ से ६ सं १ शून्य च आ २ उ ११ मनःपर्ययो न हि । मानुषीणां पर्याप्तानां गु १४ जी १ प ६ प्रा. १० सं. ४ शून्य च ग १ इं १ का १ यो ९ शून्य च वे १ ज्ञा ७ संय ६ दं ४ ले ६ भा ६ शून्य च भ २ स ६ सं १ शून्यं च आ २ उ ११ संक्लिष्टपरिणामित्वेन मनःपर्यायाभावात् । मानुषीणामपर्याप्तानां गु ३ मिथ्यात्वं सासादन सजोग जी १ पर्याप्तयः ६ प्राण ७ सं ४ शून्य च ग १ इं १ का १ यो २ मिश्रकार्मण शून्य च वे १ स्त्री शून्य च ज्ञा ३ कु कु के संयम २ अ यथा दं ३ च अ के ले २ भा ४ भ २ स ३ मि सा क्षा सं १ शून्यं च आ २ उ ११ एवं चतुर्दशगुणस्थानेष्वपि मानुषीणां 'गुण जीवा पज्जत्ती' त्यादिगाथोक्तविंशतिविधानां सर्वेऽप्यालापाः ज्ञेयाः, तथा च उदयत्रिभङ्गीग्रन्थेऽपि—'मणुसिणिइत्थीसहिया तित्थयराहारपुरिससंढूणा । पुण्णियरे व अपुण्णे सग्गाणुगदियाउयं णेयं ॥ १ ॥' अस्या अर्थः- मनुष्या उदये योग्यः प्रकृतयः ९६, पर्याप्तमनुष्योक्तशते स्त्रीवेदं निक्षिप्य तीर्थकराहारकद्वयपुंपण्ढवेदानामपनयनात्, ताः का:?, ज्ञा ५ द. ९ वे २ मो २६ नरायु १ नाम्नः ४६ गो २ अं ५ इति उदययोग्या नारीणां ९६, तत्र मिथ्यात्वे उदयच्छेदः मिथ्यात्वं, सासादनेऽनन्तानुबन्धि ४ नरानुपूर्वी १ चेति पंचव्युच्छित्तिः, असंयतेऽनुदयान्मिश्रे मिश्रं १ छेदः, असंयतेऽप्रत्याख्यान ४ दुर्भग १ अनादेय १ अयशः १ एवं छेदः सप्तानां, देशे प्रत्याख्यान ४ नीचं १ चेति पंच छेदः, प्रमत्ते स्त्यानगृद्धित्रयमेव छेदः ३, अप्रमत्ते ( संघ. ३ सं. ) ४ छेदः अपूर्वकरणे ( हास्यादि ) षट् छेदः, अनिवृत्तौ भाग (भागेषु)क्रमेण स्त्रीवेद १ सञ्ज्वलनक्रोध २ मान ३ माया ४ छेदः, सूक्ष्मे सूक्ष्मलोभच्छेदः १ उपशांते च वज्रनाराचं नाराचं च छिन्नं, क्षीणे ( जि २ ज्ञा. ५ दं. ४ अं. ५ )

१६ छेदः, सयोगे (सं १ औ २ व २ गं २ र ३ स्प ४ पु. १ ति २ सा ३, शुअशु २ थिअ २ सं ६ ते १ का १ उप १ अ १ प १ ख २ द १ सु १ वै १ ) ३० छेदः, अयोगे तीर्थकृत्त्वाभावादेकादश ११ छेदः, एवं सति मिथ्यात्वेऽनुदये २ मिश्रसम्यक्त्वप्रकृती, उदय ९४, सासादने एकं संयोज्य अनुदयः ३ उदय ९३, मिश्रेऽनुदयः ५ संयोज्य मिश्रप्रकृत्युदयात् ७, उदयः ८९, असंयतेऽनुदयः एकयोजने सम्यक्त्वप्रकृत्युदयात् ७ उदयः ८९, देशे ७ संयोज्यानुदयश्चतुर्दश १४, उदयः ८२, प्रमत्ते ५ संयोज्यानुदयः १९ उदयः ७७, अप्रमत्ते त्रयं योज्यतेऽनुदयः २२ उदयः ७४, अपूर्वे ४ सयोगेऽनुदयः २६ उदयः ७०, अनिवृत्तौ ६ संयोज्यानुदयः ३२ उदयः ६४, सूक्ष्मे ४ संयोज्यानुदयः ३६ उदयः ६०, उपशान्ते एकसंयोगेऽनुदयः३७ उदयः ५९ क्षीणे द्विकसंयोगेऽनुदयः ३७ उदयः ५९, क्षीणे द्विकसंयोगेऽनुदयः ३९ उदयः ५७, सयोगे १६ संयोज्यानुदयः ५५ उदयः ४१, अयोगे ३० संयोज्यानुदयः ८५, उदयः ११, तीर्थाभावात् । ननु स्त्रीणां चतुर्दश गुणस्थानानि कथं सन्ति ?, भो भव्यवरपुण्डरीकवरसिद्धांतवेदिन् ! भवता भव्यं पृष्टम्, अत्र भावस्त्रीवेदापेक्षया चतुर्दश गुणस्थानानि भवन्ति, द्रव्यस्त्रीवेदापेक्षया तु मिथ्यात्वादि पंच गुणस्थानानि सन्ति, 'अवगयवेदे मणुसिणि सण्णा' अस्यार्थः द्रव्यस्त्रीवेदस्य पंचैव, भावस्त्रीवेदस्य 'मणुसिणी'ति कथ्यते, कथमिति चेत्, योनिस्त्रीवेदं वेदयन् सन् श्रेणिं चटति तस्य मणुसिणीति कथ्यते, तथा चोक्तं सिद्धभक्तौ–'स्त्रीवेदं वेदयन्तो ये पुरुषाः क्षपकश्रेणिमारूढाः । शेषोदयेनापि तथाध्यानोपयुक्ताश्च ते तु सिद्ध्यन्ति ॥ १ ॥' स्त्रीतरे चापर्याप्ते मनुष्यलब्ध्यपर्याप्ते उदयप्रकृतयः तिर्यग्लब्ध्यपर्याप्तवदेकसप्ततिरित्यादि । यन्त्रस्थापना यथा—

## सामान्य मनुष्यरचना उदयत्रिभङ्गी गुणस्थान १४

लब्ध्यपर्याप्त

| मनुष्य | मि. | सा. | मि. | अ. | दे. | प्र. | अ. | अ. | अ. | सू. | उ. | क्षी. | स. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | २ | ४ | १ | ६ | ५ | ५ | ४ | ६ | ६ | १ | २१ | २६ | ३० | १२ |
| ७१ | ९७ | ९५ | ९९ | ९२ | ९४ | ८१ | ७६ | ७२ | ६६ | ६० | ५९ | ५७ | ४२ | १२ |
| ० | ५ | ७ | ११ | १० | १८ | २१ | २६ | ३० | ३६ | ४२ | ४३ | ४५ | ६० | ९० |

## योनिमती मनुष्यरचना उदयत्रिभङ्गी०

| मि. | सा. | मी. | अ. | दे. | प्र. | अ. | अ. | अ. | सू. | उ. | क्षी. | स. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ५ | १ | ७ | ५ | ३ | ४ | ६ | ४ | १ | २ | १६ | ३० | ११ |
| ९४ | ९३ | ८९ | ८९ | ८२ | ७७ | ७४ | ७० | ६४ | ६० | ५९ | ५७ | ४१ | ११ |
| २ | ३ | ७ | ७ | १४ | १९ | २२ | २६ | ३२ | ३६ | ३९ | ३९ | ५६ | ८५ |

पर्याप्त मनुष्य रचना उदय०

| मि. | सा. | मी. | अ. | दे. | प्र. | अ. | अ. | अ. | सू. | उ. | क्षी. | स. | अ. | गुण |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ४ | १ | ८ | ५ | ५ | ४ | ६ | ५ | १ | २ | १६ | ३० | १२ | विच्छेद |
| ९५ | ९४ | ९७ | ९१ | ८३ | ८० | ७५ | ७१ | ६५ | ६० | ५९ | ५७ | ४२ | १२ | उदय |
| ५ | ६ | १० | ९ | ७ | २० | २५ | २९ | ३५ | ४० | ४१ | ४३ | ५८ | ८८ | अनुदय |

एवं च– 'वीस नपुंसगवेया इत्थीवेया य हुंति चालीसा । पुंवेया अडयाला सिद्धा इकम्मि समयम्मि ॥ १ ॥' इत्यादि-गाथाव्याख्यानं संगच्छते, तेन द्रव्यतः स्त्रीणां मोक्षो नैव, कौटिल्यस्य तासां स्वभावसिद्धत्वात्, यदुक्तं हेमसूरिणा–'लीला १ विलासो २ विच्छित्ति ३ विब्बोकः ४ किलिकिंचितम् ५ । मोट्टायितं ६ कुट्टमितं ७, ललितं ८ विहृतं ९ तथा ॥१॥ विभ्रम १०-श्चेत्यलङ्काराः, स्त्रीणां स्वाभाविका दश' विच्छित्तिः-कौटिल्यविशेष इत्यर्थः, अमृतचन्द्रोऽपि 'मायाचारो व्व इत्थीण' मित्याहुः प्रवचनसारे, तथा लोकेऽप्युक्तम्–'अनृतं साहसं माया, मूर्खत्वमतिलोभता । निःस्नेहत्वनिर्दयत्वे, स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥' इति, न चैतद्भावतः स्त्रियामपि तथैवेति किमनेन?, तत्सत्त्वेऽपि तद्भवे मुक्तियोग्यत्वादिति वाच्यं, भूतपूर्वगत्या तदुप-लक्षणात्, श्वेताम्बराणामपि भूतपूर्वन्यायाश्रयणस्य योग्यत्वमस्त्येव, यदुक्तं पंचमाङ्गेऽष्टमशतकेऽष्टमोद्देशके—'इरियावहिए णं भंते ! कम्मं किं इत्थी बंधति पुरिसो बंधति णपुंसगो बंधति? इत्थीओ बंधंति पुरिसा बंधंति नपुंसगा बंधंति ? णोइत्थी

णोपुरिसणोणपुंसगो वंधइ ? गोयमा ! णो इत्थी वंधति, णो पुरिसो वंधति, जाव णो णपुंसगो वंधति, पुव्वपडिवण्णए पडुच्च अवगयवेदा वंधंति, पडिवज्जमाणए पडुच्च अवगयवेदे वा अवगयवेदा वा वंधंति, जइ भंते ! अवगयवेदो वा अवगयवेदा वा वंधंति ते भंते ! इत्थीपच्छाकडो वंधति पुरिसपच्छाकडो वंधति णपुंसगपच्छाकडो वंधति जाव एते छव्वीसं भंगा जाव उदाहु इत्थीपच्छाकडा य पुरिसपच्छाकडा य णपुंसगपच्छाकडा य वंधंति ?, गोयमा ! इत्थीपच्छाकडोवि वंधति, पुरिसपच्छाकडोवि वंधति णपुंसगपच्छाकडोवि वंधति, जाव छव्वीसं भंगा, अहवा इत्थीपच्छाकडा य पुरिसपच्छाकडा य णपुंसगपच्छाकडा य वंधंती"ति । अस्तु वैतद्भावतः स्त्रियां समानं, परं द्रव्यतः स्त्रियां अशुचित्वं प्रत्यक्षलक्ष्यं मासे मासे रुधिरश्रावात्, अत एवोक्तं सूत्रप्राभृते कुन्दकुन्दाचार्येण–'चित्ता सोहि ण तेसिं ढिल्लं भावं तहा सहावेणं । विज्जइ मासा तेसिं इत्थीसु ण संकया झाणं ॥ १ ॥' अन्यत्रापि-'श्रवन्मूत्रक्लिन्नं करिवरकरस्पर्द्धि जघनं, अहो निन्द्यं रूपं कविजनविशेषैर्गुरुकृतम्' एवं त्रपावाहुल्यमपि, यदुक्तं कम्मकाण्डे—'छादयति सयं दोसेण यदो छादयति परंपि दोसेण । छादणसीला जम्हा तम्हा सा वण्णिया इत्थी ॥ १ ॥' अन्यत्रापि "दुरितघनवनाली शोककासारपाली, भवकमलमराली पापतोयप्रणाली । विकटकपटपेटी मोहभूपालचेटी विषयविषभुजंगी दुःखसारा कृशाङ्गी ॥ १ ॥' एवं च स्थितं स्वभावतो मायाप्राधान्यं तर्हि तासां कथं (चारित्रं) स्वभावस्य शक्रैरपि अपराकार्यत्वात्, तद्विना कुतस्तरां केवलं कुतस्तमां सिद्धिः, यदपि द्रव्यचारित्रं विना गृहिलिंगिपरलिंगिनां मुक्तिः सितपटैः प्रतिपन्ना सापि भावचारित्रपूर्विका, स्त्रियास्तु तदेव दुर्लभमिति न तज्जन्यादूषकता, अपिच-स्त्रीणां योनौ तादृग्नित्यरुधिरश्रावयोगेनानेकेषां जीवानामुद्भवस्त्वागमे श्रूयतेऽन्यत्रापि स्तनादौ च, तर्हि तासां च तज्जनितकण्डूत्या न कदापि मैथुनविरतिः

तद्विनाशलक्षणहिंसाभावश्च तत् कथं महाव्रतानि, यदवदत् कुन्दकुन्दः सूत्रप्राभृते—'लिंगम्मि य इत्थीणं थणंतरे णाहिकच्छ-देसेसु । भणिओ सुहुमो काओ तासिं कह होइ पव्वज्जा ? ॥ १ ॥' ननु यदि प्रव्रज्या न भवति तर्हि कथं पंच महाव्रतानि दीयन्ते ?, सत्यं, सद्ज्ञातिज्ञानार्थं महाव्रतान्युपचर्यन्ते, स्थापनान्यासः क्रियत इत्यर्थः, उपचारबीजं तु पिञ्छिकाकमण्डलु-प्रभृतिर्मुनेरुपाधिः, अत एव तन्महाव्रतसाध्यमहामिन्द्रादिपदवीप्राप्तिः फलं स्त्रीभवे नास्ति, यदि च महाव्रतं स्यात्तदा तत्प्राप्तिरपि स्यादिति विपक्षे बाधकस्तर्कः, किंच-महाव्रते वालाग्रकोटिमात्रस्यापि परिग्रहस्य त्यागः, स्त्रीणां तु वस्त्रपरिधानस्यावश्यकत्वेनैव तदभावः सुसाधः, तत एव मरुदेवीद्रुपदात्मजाप्रभृतयः स्त्रियः स्वर्गं गता नतु मोक्षमिति, स्त्रीणां मुक्तत्वे तद्रूपेण मूर्त्तेः पूज्यत्वा-पत्तेः पुरुषाकारमूर्त्तिवत् , एतेन स्त्रीणां नाग्न्ये लोकजुगुप्सा बोधिनाशब्रह्मचर्यव्याघातशासनानिन्दादिबहुदोषानुषंगात् वस्त्रधारण-मेवोचितमर्हतोपदिष्टं, तस्मिन् सति यूकालिक्षादयस्त्रीन्द्रिया जीवा उत्पद्यन्ते, तेषां वस्त्रक्षालनेऽन्यत्र प्रक्षेपे वा प्रतिपदं प्राणाति-पातान्न स्त्रीषु तात्त्विकं महाव्रतित्वमित्यायातं, तथैव श्वेतवासोभिक्षूणामपीति लाभमिच्छतो मूलक्षतिः, स्त्रीणामार्यिकाणां वन्दने मुनिना समाधिकर्म्मक्षयोऽस्तु इति वाच्यं, न पुनर्मुनिवन्दनाव्यवहारः, यदि स्त्रीणां महाव्रताभ्युपगमस्तत्कथं साधुसाध्वीनां मिथो न यथापर्यायं वन्दनाव्यवहारो, भवन्मतेऽपि तन्निषेधात्, यदुक्तमुपदेशमालायाम्-'वरिससयदिक्खियाए अज्जाए अज्जदि-क्खिओ साहू । अभिगमणवंदननमंसणेण विणएण सो पुज्जो ॥ १ ॥' एतेन सिताम्बरैरजितादितीर्थेऽनियतवर्णाद्युपेत(वस्त्र)धारित्वे साधूनां सचेलत्वं प्रथमान्तिमजिनसाधूनां श्वेतमानाद्युपेतवस्त्रधारित्वेऽप्यचेलत्वं प्रतिपन्नं तत्प्रत्याख्यातं, महाव्रतवैचित्र्यासम्भवात्, तदाऽऽगमेऽपि 'आचेलक्कुद्देसिय' इत्यादिसाध्वाचारगाथायां नाग्न्यस्यैवोक्तेः, यच्चूपचारसमर्थनं तदपि न युक्तं, उपचारस्य तत्त्व-

चिन्तायामनुपयोगित्वात्, नग्नत्वसचेलत्वयोर्विरोधाच्च, किंच-एवं प्रथमान्तिमजिनसाधूनामुपचाराचेलकत्वे साध्यमानेऽपि नाजितादिसाधूनामचेलकत्वं सेत्स्यति, तेषां तस्याप्यभावात्, न चेयं प्रथमान्त्यजिनसाध्वाचारगाथैवेति शक्यं, परीषहेष्वपि अचेलत्वस्य भणनात्, न चेयमपि तथैव, तेषामसंयतत्वप्रसंगात्, एवं निःशंका तुच्छा गर्वबहुलाः चलेन्द्रिया दुर्बलाश्च स्त्रियः कथं मोक्षाधिकारिण्यः ?, यदुक्तं विशेषावश्यकभाष्ये-'तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य । इय अइसेसज्झयणा भूयावादो य नो थीणं ॥ १ ॥ (५५२) अन्यत्र लोकेऽप्याह-'यदि स्थिरा भवेद्विद्युत्, तिष्ठन्ति यदि वायवः । दैवात्तथापि नारीणां, न स्थेम्ना स्थीयते मनः ॥ १ ॥' तथा चातिकामत्वेन पापराशिजन्यत्वेन च तीर्थकरचक्र्यादिविशिष्टलब्धियोग्यत्वाभावेनापि परमपदानधिकारः स्त्रीणां, यदुक्तम्-"आहारो द्विगुणस्तासां, निद्रा तासां चतुर्गुणा । षड्गुणो व्यवसायश्च, कामश्चाष्टगुणः स्मृतः ॥ १ ॥' आगमोऽप्याह-अणंता पावरासीओ, जया उदयमागया । ताव इत्थित्तणं पत्तं, सम्मं जाणाहि गोयमा! ॥ १ ॥" भवतां मते कतिचिल्लब्धिनिषेधः स्त्रीणाम् 'संभिन्नाई दसविणु सेसा संखाउभवियमहिलाण' मिति च लब्धिस्तोत्रे, आदिशब्दात् 'संभिन्न चक्किजिणहरिबलचारणपुव्वगणहरपुलाए । आहारगं" ति गाथोक्तं ग्राह्यम्, अपि च-स्त्रीणां स्वभावे चपलत्वात् ध्यानाभावस्तेन सर्वार्थसिद्धिगतिरपि न, तर्हि तदुच्चैर्गतिरूपा सिद्धिः कुतः ?, यदि चासौ स्यात् तदा कुत्रचित्तन्निर्वाणकेवलोत्पत्तिस्थानाद्यप्या-

---

१ ' अरहंत १ चक्कि २ केसव ३ बल ४ संभिण्णे य ५ चारणे ६ पुव्वा ७ । गणहर ८ पुलाय ९ आहारगं १० नहु भवियमहिलाणं ॥ १ ॥ इति प्रवचनसारोद्धारे ।

गमादौ प्रतीतं स्यादिति, तथा चानुमानानि—नास्ति स्त्रीणां निर्वाणं, तत्साधकप्रमाणाभावात्, नन्वयं हेतुरसिद्धः, अस्ति स्त्रीणां निर्वाणं, कारणावैकल्यात् पुंवदिति साधकसत्त्वात् इति चेदस्यैव बाधात्, स्त्रीणां बहुत्रपाक्रान्ततया वस्त्रात्यागेन चारित्रविरोधात्, तत एव यूकालिक्षादियोनिस्थजीवोपमर्दादिभिर्हिंसाविरतेरभावस्तासु इत्युक्तचरम् १ नास्ति स्त्रीणां मोक्षः पुरुषेभ्यो हीनत्वात् नपुंसकवत् २ पुरुषैरवन्द्यत्वात्तिर्यगादिवत् ३ सप्तमपृथ्वीगमनाभावात् सम्मूर्च्छिमादिवत् ४, निर्वाणकारणज्ञानादिपरमप्रकर्षः स्त्रीषु नास्ति, परमप्रकर्षत्वात्, सप्तमनरकगतिहेत्वपुण्यपरमप्रकर्षसर्वार्थसिद्धिगतिहेतुपुण्यप्रकर्षयोरिव ५, नास्ति स्त्रीणां मोक्षः, परिग्रहवत्त्वात् गृहस्थवत् ६, वस्त्रे मूर्च्छाऽभावो न भवति, बुद्धिपूर्वं तत्पतने समादानात्. यद् बुद्धिपूर्वं पतितमादीयते न तत्र मूर्च्छाऽभावो, यथा सुवर्णादौ ७, स्त्रीणां शीलं न मोक्षसाधकं, परिग्रहवदाश्रितत्वाद् गृहस्थशीलवत् ८, मुक्तिहेतुतयाऽभीष्टः सचेलाचेलरूप आर्यिकासंयमोऽत्यन्तभिन्नकार्यारम्भकः अत्यन्तभिन्नत्वात्, यतिगृहिसंयमवत्, स चाप्यत्यन्तभेदवान् मोक्षस्वर्गरूपभिन्नकार्यारम्भकश्च ९, वस्त्रं न मोक्षसाधनं, तदार्थिनां तत्त्यागस्यैवोपदेशात् मिथ्यादर्शनवत्, १०, न स्त्रीणां परमपदं विशिष्टपदानर्हत्वात् क्लीबवत् ११, स्त्रीशरीरं न मुक्तिसाधनं, रत्नत्रयापूर्णत्वात् नारकशरीरवत् १२ न स्त्रीदेहः कर्मक्षयं कार्त्स्न्येन कर्तुमलं महत्पापमिथ्यात्वसहायजनितत्वात् नारकदेहवत् १३, स्त्री भावतोऽपि मोक्षप्रसाधनेऽसमर्था द्रव्यतोऽप्यत्रासमर्थत्वात्तिर्यगादिवत्, एवं पुरुषाणां स्मारणाद्यकर्तृत्वअनुपस्थाप्यतापारांचितकप्रायश्चित्तानधिकारित्वादयोऽप्यूह्याः, नव्याशाम्बराः पुनर्विशेषमाचक्षते-सिद्धा हि ये यथास्थिता सिद्धिं प्राप्तास्ते त्रिभागोनावगाहनाकारा इत्युभयनयसिद्धं, तथा च स्त्रीकर्णयो रन्ध्रे स्तनौ योन्याकारः, स चात्मप्रदेशानां तथाऽवस्थानात् स्त्रीसिद्धेऽपि सम्भवति, एवं च जाता मोक्षेऽपि संसारस्वरूपता, पुरुषस्त्रीसद्भावात्, पुरुषाकारः सिद्ध इति सिद्धान्तविरोधाच्च,

तथा यौवने सत्यष्टवर्षानन्तरसम्भवत्कैवल्यवत्याः स्तनयोर्मांसलता रजस्वलादित्वमपि सम्भवत्येव, औदारिकस्यैव केवलिनां भवन्मतेऽभ्युपगमात्, नचास्मन्मतवत् परमौदारिकस्वीकारो येनैतद्दोषासम्भवः, एवं स्थिते केवलिनोऽपि लोकजुगुप्सा, अपि च स्त्रियाः कैवल्ये केवलिनी सिद्धा सयोगी अयोगा इत्यादि व्यपदेष्टव्यं, न च तथा व्यवहारः श्रेयान्, एतेन मल्लेर्भगवतः स्त्रीत्वं सिताम्बराभिमतं प्रत्युक्तं, तीर्थंकरीतिकथनप्रसंगात्, तत्प्रतिमायाश्च पुरुषाकारेण पूजानुपपत्तेश्च,आस्तां दूरे तर्कः, परमनुभवोऽप्येवं नास्ति यदियं स्त्री अपावित्र्यपात्रं केवलित्वेन पूज्या,पूजायां सुरासुरनरपुरुषस्पर्शे ब्रह्मचर्यवतीति । कर्म्मास्थास्वतिलाघवादभिनवश्रीकेवलाकोदयात्, संसारप्रविकारकारणभवत्पर्यायचर्याव्ययात्। सुप्रापं पदमव्ययं मृगदृशस्तद्गौरवान्वीक्षणात्, किं कक्षीक्रियते विचक्षणजनैर्मोहाधिरोहस्पृशः ॥ १ ॥ हास्यं यद्वदनाम्बुजे क्षितिभुजां दास्यं समुद्भावयेत्, प्रीतिर्भीतिरनीतिरीतिरमतिर्यद्ध्यानवृद्ध्या श्रयेत् । कामक्रोधविरोधबोधविगमा यत्संगमाज्जंगमा, जायन्ते शिवसम्पदः पदमियं रण्डा न चण्डाशया ॥ २ ॥ दोषान्वेषिदिगम्बरागमनयद्विश्वानुविम्बार्थभूल्लोके जाग्रति सुप्रभेन्दुरुचिभिः प्रातर्नभोमण्डले । मोक्षं किं वनिता नितान्तसुरताऽऽयासात्समासादयेत्, दक्षो रक्षयिता न चेद्वरयिता प्रीत्या धनः प्रेक्षते ॥ ३ ॥

अत्र प्रतिविधीयते-यत्तावदुक्तं 'द्रव्यतो मनुष्यस्त्रीणां तद्भवे न मुक्तियोग्यत्वं' तन्निजागमविरुद्धत्वाद्व्याहतमेव, मानुषीणां चतुर्दशगुणस्थानोक्तेः, न च द्रव्यतः पुरुषा एव भावतः स्त्रिय इत्यपि युक्तम्, तेषां नवगुणस्थानेष्वेव सद्भावात् संशयापत्तेः सूत्रस्य स्वरूपव्याघाताच्च, 'अल्पाक्षरमसंदिग्धं, सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च, सूत्रं सूत्रविदो विदु ॥१॥ रिति तल्लक्षणं, द्रव्यतः स्त्रियां पञ्च गुणस्थानानानि द्रव्यतः पुरुषे भावतः स्त्रियां नवेत्ययमपि त्वदङ्गीकार एव, यदुक्तं जीवसमासेऽवान्तरश्लो-

केषु वेदमार्गणायाम्, "ये साम्मूर्च्छनः पञ्चाक्षा, एकाक्षा विकलेन्द्रियाः। जन्तवो हुण्डसंस्थानाः, प्रभवन्ति नपुंसकाः ॥ १ ॥ गर्भजा नरतिर्यञ्चः, प्रभवन्ति त्रिवेदिकाः। भोगभूमिनराः पुंसस्त्रीलिङ्गद्वितयान्विताः ॥ २ ॥ द्रव्येण नरवेदेऽस्मिन्, भावेन द्वितयेऽपरे। गुणानां नवकं प्रोक्तं, मिथ्यात्वाद्यनिवृत्तकम् ॥ ३ ॥ स्त्रीनपुंसकयोर्वेदे, गुणानां पञ्चकं मतम्। द्रव्येण नरलिङ्गेऽथ, ते गुणा नव चेरिताः ॥ ४ ॥ "आदिम पण गुणठाणा दव्वित्थीणं तु हुंति नियमेण। भावित्थीण उ साणं पुंवेदीणं णव गुणा य ॥१॥ इति यन्धत्रिभङ्ग्यामुपयोगिगाथा, गोमट्टसारेऽपि "वेदादाहारोत्तिय से गुणठाणाणमोघमालावो। णवरि य संडित्थीणं णत्थि हु आहारगाण दुगं ॥ ७१२ ॥ अस्य व्याख्या—वेदमार्गणाद्याहारमार्गणापर्यन्तदशमार्गणासु स्वस्वगुणस्थानानामालापक्रमः सामान्यगुणस्थानोक्त एव भवति, तथापि भावपण्ढद्रव्यपुरुषरूपाया भावस्त्रीद्रव्यपुरुषरूपायाश्च वेदमार्गणायाः सर्वदानिवृत्तिकरण-पर्यन्तेषु गुणस्थानेषु मध्ये षष्ठगुणस्थाने प्रमत्तसंयतरूपे आहारकाहारकमिश्राभिधानालापद्वयं नास्ति, तत्राशुभवेदोदययुतयोराहार-कार्द्धिसम्भवाभावात्, "हत्थपमाणं पसत्थुदय" मित्याहारकशरीरे प्रशस्तप्रकृतीनामुदयनियमस्य सद्भावात्, तत्र वेदमार्गणायां नपुं-सकस्त्रीवेदानां स्वस्वानिवृत्तिकरणसवेदभागपर्यन्तं नवगुणस्थानेषु आलापः कर्त्तव्यः, कषायमार्गणायां क्रोधमानमायालोभानां स्वस्वा-निवृत्तिकरणस्यावेदभागपर्यन्तं नवसु, सूक्ष्मलोभस्य सूक्ष्मसम्परायपर्यन्तं दशसु च गुणस्थानेषु आलापः कार्य इति, अत्र यन्त्रन्यासः-

१ "नारकसम्मूर्छिनो नपुंसकानीति" तत्त्वार्थसूत्रे अ. २

पुंवेदरचना गुणस्थान ९

| मि | सा | मी | अ. | हे | प्र | अ | अ |
|---|---|---|---|---|---|---|---|
| १ | ४ | १ | १४ | ८ | -५ | ४ | ६ |
| १०३ | १०२ | ९६ | ९९ | ८५ | ७९ | ७४ | ७० |
| ४ | ५ | ११ | ८ | २२ | २८ | ३६ | ३७ |

स्त्रीवेदरचना गुणस्थान ९

| मि | सा | मी | अ | दे | प्र | अ | अ | अ. |
|---|---|---|---|---|---|---|---|---|
| १ | ७ | १ | ११ | ८ | ३ | ४ | ६ | ६४ |
| १०३ | १०२ | ९६ | ९६ | ८५ | ७७ | ७४ | ७० | ६४ |
| २ | ३ | ९ | २० | २८ | ३१ | ३५ | ४१ | |

नपुंसकवेदरचना गुणस्थान ९

| मि | सा | मी | अ | दे | प्र | अ | अ | अ. |
|---|---|---|---|---|---|---|---|---|
| ५ | ११ | १ | १२ | ८ | ३ | ५ | ६ | ६४ |
| ११२ | १०६ | ९६ | ९७ | ८५ | ३७ | ७४ | ७० | ७४ |
| २ | ८ | १८ | १७ | २९ | ३७ | ४० | ४४ | ५० |

ननु नवमगुणस्थानप्रथमभागं यावद्वेदोदयाद्वेदमार्गणायां नव गुणस्थानानि सन्तीत्युक्तं तद्वर्त्तमाननयाऽपेक्षं, क्रोधाद्यन्यतमकषायोदये गुणस्थाननवकवत्, न तावता क्रोधाद्यन्यतमकषायाणामुपशमे क्षये वा तज्जन्मनि उपरितनगुणस्थानेष्वारोहेणाकषायत्वं न स्यादेवेति नियमस्तद्वदत्रापि सवेदस्यापि द्रव्यतः पुरुषस्य भावतः स्त्रीवेदं वेदयतः क्षपकश्रेण्यारोहेणावेदगुणस्थानप्राप्त्या चतुर्दशगुणस्थानाधिगमे न कश्चिद्विरोध इति चेत् तदपि न, एवं सति भावतः स्त्रीत्वस्याप्यनुपपत्तेः, स्त्रीवेदोदयेन पुरुषाभिलापरूपमैथुनसंज्ञाक्रान्तजीवत्वं भावतः स्त्रीत्वमिति स्वयमेव स्वागमवचनात्तल्लक्षणं भणितं, अत एव सयोगालापके गु १ जीव २।५।६।६ प्राण ४।३।२ सं० ग १ इं १ पं काय १ त्र यो ७, म २ व २ औ २ कार्म १, वे०, क०, ज्ञा १ के, सं यथा, द १ के, ले ६ भा १ भ १ स १ क्षा, सं० आ २ उप २ इत्यत्र वेदस्थाने शून्यन्यासः कषायस्थाने शून्यन्यासवत्, स्त्रीवेदाभावेऽपि निर्माणनामकर्म्मोदययुक्तांगोपांगनामकर्म्माजन्यं द्रव्यतः स्त्रीत्वमपि न विरुद्धं, भावेन्द्रियाभावेऽपि द्रव्येन्द्रिया-

पेक्षया पंचेन्द्रियत्ववत् भावतो मनसोऽभावेऽपि विकसिताष्टदलपद्माकारद्रव्यमनःसद्भावेन मनोयोगद्वयसद्भाववत्, द्रव्येन्द्रियाण्यपेक्ष्य षट्पर्याप्तिपर्याप्तत्ववत्, भावतः शुक्ललेश्यालयत्वेऽपि शरीरवर्णरूपद्रव्यलेश्यापेक्षया षड्लेश्याऽऽश्रयत्ववत्, एतत् सर्वमाशांबरनयेऽपि सम्मतया दृश्यते, यदुक्तं गोमट्टसारे— "पज्जत्ती पाणावि य सुगमा भाविंदियं ण जोगंमि । तहि वागुस्सासाउगकायतिगदुगमजोगिणो आऊ ॥ ६८८ ॥" क्षीणकषायपर्यन्तं पर्याप्तयः षट् प्राणा दश सयोगे भावेन्द्रियं नास्ति द्रव्येन्द्रियापेक्षया षट् पर्याप्तयः वाग्बलोच्छ्वासनिश्वासआयुःकायबलानि चत्वारः प्राणा भवन्ति, शेषेंद्रियप्राणाः पंच मनोबलं प्राणश्च न संभवति, तस्मिन् सयोगकेवलिनि वाग्योगे विश्रान्ते सति त्रयः प्राणाः उच्छ्वासे उपरते द्वौ प्राणौ स्तः, अयोगे आयुःप्राण एक एवास्ति, तथा— "अंगोवंगुदयाओ दव्वमणट्ठं जिणिंदचंदंमि। मणवग्गणखंधाणं आगमणाओ दुगमजोगो ॥ २८८ ॥" जिनेंद्राः सम्यग्दृष्टयस्तेषां चन्द्रतुल्ये अज्ञानतमोनाशकत्वात् सयोगकेवलिनि अंगोपांगनामोदयात् द्रव्यमनो विकसिताष्टदलपद्माकारहृदन्तर्भागे भवति, तत्परिणमनमिति मनोवर्गणारूपपुद्गलस्कंधानामागमनाद् द्रव्यमनःपरिणमनं प्रति, प्रयोजनं पूर्वोक्तनिमित्तात् मुख्यभावमनोयोगाभावाच्च उपचारेण मनोयोगोऽस्तीति, उपचारप्रयोजनं तु सर्वजीवदयातत्त्वार्थदेशनाशुक्लध्यानादिकमिति तुशब्देन सूचित" मिति वृत्तिः" तथा "वण्णोदएण जणिदो सरीरवण्णो उ दव्वओ लेस्सा । सा सोढा किण्हाई अणेयभेया समासेण ॥ ४८४ ॥' अर्हतां पंचवर्णत्वे प्रसिद्धैव द्रव्यलेश्या 'अयओत्ति छल्लेसाओ सुहतिय लेस्सा हु देसविरईए । तत्तो य सुक्कलेस्सा अजोगिठाणं अलेस्सं तु ॥ २ ॥ इति भावलेश्या, यदि च द्रव्यस्त्रिया यावज्जीवं संक्लेश्याध्यवसायान्न पंचमगुणस्थानादुपरि आरोहः तर्हि द्रव्यपुंसोऽपि भावतः स्त्रियाः कथमयं स्यात्?, तस्य तदधिकसंक्लेशाद्, अत एवाहारकद्वयमनः-

पर्यायपरिहारविशुद्ध्याद्ययोग्यता, तदयोग्यत्वेऽपि द्रव्यपुंसस्तादृशस्य मुक्तिस्तदा कथं न द्रव्यस्त्रियाः इति; तदेवं भावतः स्त्रीत्वमनुपपन्न-मपि भूतपूर्वगतिन्यायमाश्रित्य सयोगेऽपि भावतः स्त्रीत्वं पुरुषाणां स्वीक्रियतेऽसावभिनिवेशः क्लेशावेषः फलित एव, यद्येवं भूतपूर्वेन्या-योऽनुश्रीयते तर्हि भावतोऽपि पुंवेदं वेदयन्तो वा क्षपकश्रेणिमारूढास्तेषामप्यालापः कार्यः, एवं हास्यादिषट्कक्रोधादिचतुष्टयादीनां प्रकृतीनां यथायोगं गुणस्थानेषु व्यवच्छिन्नानामप्यालापः प्रसक्तव्यः, यदि च द्रव्यतः स्त्रियो न क्षपकाः स्युः तदा गोमट्टसारे कथमुक्तम्-'हुंति खवा इग समये बोहियबुद्धा य पुरिसवेदा य । उक्कोसेणऽट्ठुत्तरसयप्पामाणा सग्गदो य चुया ॥६१७॥ पत्तेय-बुद्धतित्थंकरा य थीण उ सय मणोहिणाणजुया । दस छक्कवीस दसवीस अट्ठावीसं जहक्कमसो ॥ ६१८ ॥ जेट्ठावर बहुमज्झिम-ओगाहणया दुचारि अट्ठेव । जुगवं हवंति खवगा उवसमगा अद्धमेदेसिं ॥ ६१९ ॥ युगपदुत्कृष्टेन एकसमये बोधितबुद्धाः पुंवेदिनः स्वर्गच्युताश्च प्रत्येकं क्षपका अष्टोत्तरं शतं, उपशमकास्तदर्द्धं भवन्ति, प्रत्येकबुद्धास्तीर्थकराः स्त्रीवेदिनः नपुंसकवेदिनः मनःपर्यव-

---

१ अत्र भावग्रहे पुंवेदेऽपि भाव एव, तथा च भावतो वेदे सति न कस्यापि सिद्धिः, पुंवेदे द्रव्यग्रहे स्त्रीवेदेऽपि तथाऽस्तु, साहचर्यात्, सहचरभिन्नत्वेऽर्थदोषः, प्रत्येकबुद्धे बोधितबुद्धेऽपि तत्तदर्हद्द्रव्यलिंगावरणमेव, दिगंबरद्वयेऽपि द्रव्यत्वमेव, स्वस्वविषयपरिणामाकारात्, अथ तत्र भावोऽप्यस्तीति चेत् अस्तु, द्रव्यान्वयी भावोऽधिगमरूपः, परं तादृशश्चेद्भावो मृग्यते तदा पुंस्त्रियोरपि द्रव्यभावयोरनुगम एव द्रष्टव्यः, न च तत्र दोषो, द्रव्यतः पुंस्त्वे भावतः स्त्रीत्वमिति विरुद्धभावनिषेधात्, एवं च पुंसो द्रव्यभावयोरुभयोरुपपत्तिवत् स्त्रीणामपि तथात्वे मोक्षो निर्बाध एव, ज्येष्ठाद्यवगाहना तु द्रव्यत एवेति कथं स्त्रीवेदे भावव्याख्यानमन्यत्र पुंवेदादिषु द्रव्यमिति ।

ज्ञानिनोऽवधिज्ञानिनः उत्कृष्टावगाहा जघन्यावगाहाः बहुमध्यमावगाहाः क्षपकाः क्रमशो दश षड् विंशतिः दश विंशतिरष्टाविंशतिर्द्वौ चत्वारोऽष्टौ. उपशमकास्तदर्द्धं भवन्ति, सर्वे मिलित्वा क्षपका ४३२ उपशमका २१६ भवन्ति, इति, अत्र (यथा) पुरुषवेदत्वं द्रव्यापेक्षया तथा स्त्रीवेदनपुंसकवेदत्वं द्रव्यापेक्षयैव, भावापेक्षया तु बोधितबुद्धादिज्येष्ठजघन्यबहुमध्यमावगाहान्तविशेषणासंगतेः, ननु च द्रव्यतः पुरुषाः पुंवेदं वेदयन्तः क्षपकश्रेणिमारूढास्तेषामालापः पृथग्नोक्तः, तथापि किं?, सिद्धत्वे संख्या त्वस्त्येव, यदुक्तं क्रियाकलापे शुभचन्द्रकृते- 'पुंवेदे अडयाला थीवेया हुंति तह य चालीसा । वीस नपुंसकवेया समये इक्केण सिज्झंति ॥ १ ॥ पुंवेदं वेदंता जे पुरिसा खवगसेणिमारूढा । सेसोदएणवि तहा झाणुवजुत्ता य ते सिज्झंति" एतदनुसारेणान्येऽप्यालापाः सिद्ध्यन्तीति चेत्, न, मानुष्या आलापात्पूर्वं मनुष्याणां चतुर्विधानां सामान्यतः१ पर्याप्तानां२ तदपर्याप्तानां३ इत्यालापत्रयं, ततः परं विशेषतश्च मिथ्यादृशां ४ पर्याप्तानां ५ तदपर्याप्तानां ६ सासादनानां ७ पर्याप्तानां ८ तदपर्याप्तानां ९ सम्यग्मिथ्यादृशां १० असंयतानां ११ पर्याप्तानां १२ तदपर्याप्तानां १३ संयतासंयतानां १४ प्रमत्तानां १५ पर्याप्तानां १६ तदपर्याप्तानां १७ अप्रमत्तानां १८ अपूर्वकरणानां १९ अनिवृत्तकरणे प्रथमभागस्य २० द्वितीयभागस्य २१ तृतीयभागस्य २२ चतुर्थभागस्य २३ पञ्चमभागस्यो- २४ पशान्तकषायाणां २५ क्षीणकषायाणां २६ सयोगिजिनानां २७ अयोगिजिनानां २८ इत्येवं सर्वेऽप्यालापाः, ततो मनुष्याश्चतुर्दशगुणस्थानालापा एवं नियता लभ्यन्ते, उदयत्रिभंग्यादिष्वपि सामान्यतः १ पर्याप्ततया २ 'मणुसिणि इत्थीसहिया' इत्यादिना स्त्रिया एवालापा इति तदन्येषामप्रयोगाच्च, मानुषीणां चतुर्दशगुणस्थानालापो द्रव्यतः पुरुषा भावतो मनुष्या एवेत्यागृह्यते तर्हि द्रव्यतः स्त्रियाः पंचगुणस्थानेषु जीवसमासादिविंशतिपदार्थकथनालापोऽपि स्याद्, उदयत्रिभंग्यामपि व्युच्छित्तिउदयानुदय-

त्रिभङ्ग्या यन्त्रमपि स्यात्, तिरश्चीनामिव, न च तद्द्वयं दृश्यते, तेन निर्णीयते यदयमेवालापो द्रव्यस्त्रिया इति, मनुष्यगत्यालापेभ्यः पूर्वमानन्तर्येण सामान्यतस्तिरश्चां १ ततः पंचेन्द्रियतिरश्चां २ पर्याप्तानां ३ तदपर्याप्तानां ४ मिथ्यादृशां ५ तत्पर्याप्तानां ६ तदपर्याप्तानां ७ सासादनानां ८ तत्पर्याप्तानां ९ तदपर्याप्तानां १० मिश्राणां ११ असंयतानां १२ पर्याप्तानां १३ तदपर्याप्तानां १४ संयतासंयतानां १५ ततोऽपि तिर्यग्योनिमतीनां १६ तत्पर्याप्तानां १७ तदपर्याप्तानां १८ मिथ्यादृशां १९ तत्पर्याप्तानां २० तदपर्याप्तानां २१ सासादनानां २२ तत्पर्याप्तानां २३ तदपर्याप्तानां २४ मिश्राणां २५ असंयतानां २६ संयतासंयतानां २७ तिर्यक्पंचेन्द्रियलब्ध्यपर्याप्तानां २८ मालापाः क्रमेण दृश्यन्ते, तेन तिर्यग्योनिमतीनां प्रत्यासत्त्या मानुषीशब्देनापि मनुष्ययोनिमतीनामेवायमालापकः प्रतीयते, न चेन्मनुष्ययोनिमतीनामन्योऽप्यालापस्तिर्यग्योनिमतीनामिव भेदाद्दर्शनीयः, न च सोऽस्ति, तस्मादयमेवालापक इति, एवमुदयत्रिसंख्यामपि तिर्यक्पंचविधयन्त्रस्थापना, न पुनर्मनुष्यद्रव्यस्त्रीणां, तेन यद्योनिमतीनां प्रागुक्तं यन्त्रं तदेव द्रव्यस्त्रीणां यन्त्रकं बोध्यम्

सामान्यतिर्यग्रचना

| मि. | सा. | मी. | अ. | दे. | गुण०. |
|---|---|---|---|---|---|
| ५ | ९ | १ | ८ | ८ | व्यु. |
| १०५ | १०० | ९१ | ९२ | ८४ | उदय |
| २ | ७ | १६ | १५ | २३ | अनु. |

पंचेन्द्रियतिर्यग्रचना

| मि. | सा. | मी. | अ. | दे. |
|---|---|---|---|---|
| २ | ४ | १ | ८ | ८ |
| ९७ | ९५ | ९१ | ९२ | ८४ |
| २ | ४ | ८ | ७ | १५ |

| पर्याप्ततिर्यञ्चरचना | | | | | योनिमतीतिर्यञ्चरचना. | | | | | अलब्ध तिर्यञ्च |
|---|---|---|---|---|---|---|---|---|---|---|
| मि. | सा. | मी. | अ. | दे. | मि. | सा. | मी. | अ. | दे. | मि. |
| १ | ४ | १ | ८ | ८ | १ | ५ | १ | ७ | ८ | ० |
| ९५ | ९४ | ९० | ९१ | ८३ | ९४ | ९३ | ८९ | ८९ | ८२ | ७१ |
| २ | ३ | ७ | ६ | १४ | २ | ३ | ७ | ७ | १४ | ० |

अथ योनिमन्मनुष्यकथनेऽपि द्रव्यतः पुरुषाः, न, योनिमन्मनुष्यभेदे द्रव्यतः स्त्रीणामेव भणनात्, यदुक्तं गोमट्टसारसूत्रवृत्तौ श्रीअभयचन्द्रसूरिकृतायां पद्मप्रभाधिकारे-'सामण्णा पंचिंदिय पज्जत्ता जोणिणी अपज्जत्ता। तिरिया णरा तहावि य पंचिंदियभंगओ हीणा ॥ ४७ ॥ सामान्यतिर्यंचः १ पंचेन्द्रियतिर्यंचः २ पर्याप्ततिर्यंचो ३ योनिमत्तिर्यंचो४ऽपर्याप्ततिर्यंचः ५ इति पंचधा तिर्यंचः, तिर्यग्वन्नरा मनुष्या अपि पंचेन्द्रियभेदाद्धीनाः- सामान्यपर्याप्तयोनिमत्यपर्याप्तभेदाच्चतुर्विधा इति, "छस्सयजोयणकदिहियजगपयरं जोणिणीण परिमाणं। पुण्णूणा पंचक्खा तिरियअपज्जत्तपरिसंखा ॥ ५३ ॥ षट्शतयोजनकृतिहतजगत्प्रतरमात्रं योनिमतीनां द्रव्यतिर्यक्स्त्रीणां प्रमाणं भवतीत्यादि' तद्वृत्तिः, तथा-'पज्जत्तमणुस्साणं तिचउत्थो माणुसीण परिमाणं। सामण्णा पुण्णूणा मणुव अपज्जत्तगा हुंति ॥ ५६ ॥' पर्याप्तमनुष्याणां त्रिचतुर्थभागमात्रं मानुषीणां द्रव्यमनुष्यस्त्रीणां

१ कृतिर्गणितविशेषः तद्गुणो वर्ग इति यः कथ्यते.

परिमाणं भवतीत्यादि तद्वृत्तिश्च 'उदया उ णोकसायाण भावे वेदो य होइ जंतूणं। जोणी य लिंगमाई नामोदय दव्ववेदो हु ॥ १ ॥' इति पंचसंग्रहे। एवं योनिमतीशब्देन द्रव्यस्त्रीव्याख्यानात् मानुषीशब्देन द्रव्यतो मानुष्यस्त्रीणां ग्रहणे न भावस्त्रीशंकाऽपि मन्तव्या, अपि च सत्तात्रिभंग्यां 'एवं पंचतिरिक्खे पुण्णियरे णत्थि निरयदेवाऊ। ओघं मणुसतिएसुवि अपुण्णगे पुण्णऽपुण्णं वा ॥ २४ ॥ मणुसिणि खवगे तित्थं णत्थि देसे य णिरयतिरियाओ। ओघं देवे णहि णिरयाउसारो[२] त्ति होइ तिरियाऊ ॥ २५ ॥ भवण तियकप्पवासिय इत्थीसु ण तित्थयरसत्ता' इति, एवं पंचविधेष्वपि सामान्य १ पंचेन्द्रिय २-पर्याप्त ३ योनिमद् ४ पर्याप्त ५ पंचविधतिर्यक्ष्वापि भवति, तत्र पर्याप्तेतरे नास्ति नरकदेवायुः, पर्याप्तेतरोऽत्र लब्ध्यपर्याप्त एव, तेन सत्त्वं १४५, तस्य गुणस्थानं मिथ्यात्वमेव, 'सासादनोनोऽपर्याप्ते' इति नियमात्, इति तिर्यग्गतिसत्त्वं, ओघं मनुष्यतिरश्चोरपि अपर्याप्ते पर्याप्तोऽपर्याप्तोऽपर्याप्त इवेति मनुष्यगतौ सामान्यमनुष्य १ पर्याप्तकमनुष्य २ योनिमन्मनुष्येषु ३ त्रिविधेषु ओघवत्, किन्तु योनिमन्मनुष्यक्षपकेष्वेवं विशेषः- तेन शेषद्वये सत्त्वं १४८ मिथ्यात्वे नानाजीवापेक्षया सत्त्वं १४८ सासादने तीर्थाहारौ नेति १४५ मिश्रे तीर्थं नेति १४७ असंयते[३] सर्वं १४८ देशे प्रमत्तेऽप्रमत्ते च मनुष्यः संज्ञीति न नरकतिर्यगायुषी, बध्यमानमनुष्यायुश्चेति १४६ क्षपकापूर्वे[४] भुज्यमानं मनुष्यायुरस्तीति शेषायुस्त्रयः सप्तप्रकृत्यभावात् १३८ उपशमश्रेण्यपेक्षया[५] नरकतिर्यगायु-

२ सहस्रारान्तं तिर्यगायुःसत्त्वम्. ३ अक्षिप्तदर्शनसम्यक्त्वानां १४८। ४ अपूर्वादिचतुष्के विसंयोजितानुबन्धिचतुष्कस्य नरकतिर्यगायुर्विना १४२। यद्वाऽविरतादिचतुष्के सप्तकक्षये १४१ क्षपकं प्रतीत्य अविरतादिचतुष्के १४५ भुज्यमाननरायुर्विनाऽयुस्त्रयाभावात्। ५ सप्तकक्षये आयुस्त्रयाभावे १३८, उद्वलितानन्तानुबन्धिचतुष्कस्य उपशमश्रेण्यां बद्धदेवायुषः परिभुज्यमाननरायुषः १४६

रभावात् १४६ क्षायिकसम्यक्त्वे १३८ अबद्धायुर्मनुष्याः क्षायिकसम्यक्त्वे १३८ ऽबद्धायुर्मनुष्या असंयतादिचतुर्ष्वपि १३८ अनिवृत्तौ उपशमश्रेण्यां १४६।१३८ च, क्षपके प्रथमांशे १३८ द्वितीयांशे १२२ षोडशानां तत्प्रथमांशचरमसमय एव क्षपणात्, तृतीयांशे मध्यमाष्टकषायाभावात्[1] ११४ तुर्यांशे षण्ढाभावात् ११३ पंचमे स्त्रीवेदाभावात् ११२ षष्ठे नोकषायाभावात् १०६ सप्तमे पुमभावात् १०५ अष्टमे संज्वलनक्रोधाभावात् १०४ नवमांशे संज्वलनमानाभावात् १०३ सूक्ष्मे संज्वलनमायाभावात् १०२ उपशमश्रेणौ १४६।१३८ चोपशान्ते १४६।१३८ च क्षीणे संज्वलनलोभाभावे १०१ सयोगेऽयोगद्विचरमसमयान्तं[3] च निद्राप्रचलादिषोडशाभावात् ८५ चरमसमये द्वासप्तत्यभावात् १३, योनिमन्मनुष्ये तु 'मणुसिणि" इत्यादि, क्षपके न तीर्थं, तीर्थसत्त्ववतोऽप्रमत्तादुपरि स्त्रीवेदित्वाभावात्, अपूर्वे सत्त्व १३८ मसत्त्व १० मनिवृत्तौ प्रथमांशे सत्त्वं १३७ असत्त्वं १० द्वितीयांशे षोडशसंयोज्यासत्त्वं २६ सत्त्वं १२१ तृतीयांशे ८ संयोज्यासत्त्वं ३४ सत्त्वं ११ तुर्यांशे संयोज्यासत्त्वं ३५ सत्त्वं ११२ पंचमे एकं १ संयोज्यासत्त्वं ३६ सत्त्वं १११ षष्ठे संयोज्यासत्त्वे ४२ सत्त्वे १०५ सप्तमे एकसंयोगेऽसत्त्वं ४३ सत्त्वं १०४ अष्टमांशे एकसंयोगेऽसत्त्वे ४४ सत्त्वे १०३ नवमेऽप्येकसंयोगेऽसत्त्वं ४५ सत्त्वं १०२ सूक्ष्मेऽसत्त्वे ४ संज्वलनमायां संयोज्य ४६ सत्त्वं १०१ क्षीणे लोभं

---

१ द्वितीयतृतीयकषायचतुष्काभावात् । २ थावर २ तिरि २ नरया २ यव २ दुग थीण तिगे ३ ग १ विगल ३ साहारं १। सोळक्खओ दुवीससयं बीयंसि ॥ ३ क्षीणे द्विचरमसमयं यावत् १०१ तत्र निद्राप्रचलयोः क्षीणचरमसमये क्षयात् ९९ ततो दर्शन ४ ज्ञान ५ विघ्न-५ क्षयात् सयोगे द्विचरमसमयं यावत् ८५ ।

संयोज्यासत्त्वं ४७ सत्त्वे १०० सयोगे षोडश १६ संयोज्यासत्त्वे ६३ सत्त्वे ८४ अयोगिअचरमसमयेऽसत्त्वं ६३ सत्त्वं ८४ चरमसमयेऽसत्त्वं ७२ संयोज्य १३५ सत्त्वं १२ इत्यत्र 'मणुसिणी'शब्देन योनिमन्मनुष्यव्याख्यानात् योनिमन्मनुष्यशब्देन द्रव्यतः स्त्रीणामुपलब्धेः पूर्णो वादः, योनिमतीनां पंचमगुणस्थानादुपरि गमनासम्भवादितिवदता पूर्वपक्षवादे स्वयमेव द्रव्यस्त्रीभणनात्। न चात्र योनिमन्मनुष्यवचनात् पुरुषा एव ग्राह्याः, पुरुषेषु तीर्थासत्त्वे प्रामाण्याभावात्, न हि पुरुषेष्ववांतरजातिः काचिद् द्रव्यपुरुषभावस्त्रीत्वरूपाऽस्ति येन तदवच्छेदात् तीर्थासत्त्वं स्यात्, तिर्यग्जातीयत्वावच्छेदेन निकाचिततीर्थासत्त्ववत् ज्योतिष्कभवनपतिव्यन्तराणां तत्तज्जात्यवच्छेदेन तीर्थासत्त्ववद्वा, न्यूनातिरिक्तवृत्तेर्धर्मस्य जातित्वाप्रतीतेः, द्रव्यघटस्य भावरत्नत्वोपचारे तज्जातिवत्, प्रतीतौ वा तज्जातीयस्य यावज्जीवं क्षपकत्वानुपपत्तेः, स्त्रीवेदोदयेन पुरुषाभिलाषरूपमैथुनसंज्ञाक्रान्तत्वेनैवावास्थितेः, तथा च द्रव्यपुरुषभावपुरुषत्वजात्या पुरुषाणामपि मोक्षाभावप्रसंगः, तस्मान्न द्रव्यपुरुषभावस्त्रीत्वरूपजातिः, वेदानां भावरूपेण परिवर्त्तनस्यैव उभयनयसम्मतत्वात्, अत एव त्वयाऽप्युक्तम् 'तीर्थसत्त्ववतो जीवस्याप्रमत्तादुपरि स्त्रीवेदित्वाभावा'दिति, तथा पुरुषाणामपि क्षपकश्रेण्यारोहावच्छेदेनैव च स्त्र्यादिभाववेदं वेदयतामूर्ध्वं गुणस्थानारोहाभिधानं तात्त्विकमेवेति सूक्ष्मदृशा पर्यालोच्यम्, इतरथा क्षपकश्रेण्यारोहविशेषणवैयर्थ्यं स्यात्, आस्तां भाववेदपरावर्त्तः, तत्त्वार्थवृत्तौ द्रव्यवेदस्यापि परावर्त्तो दृश्यते, यदुक्तं-"लिंगं त्रिभेदं स्त्रीत्वादि, तच्च प्रतीतत्वाल्लिंगमुच्यते, यस्मात्पुरुषलिंगनिर्वृत्तावतिप्रकटायामपि कदाचित् स्त्रीलिंगमुदेति, न स्पष्टं बहिरुप-

४ न च प्रथमसमयमादिं कृत्वा इत्यादिना द्रव्यवेदस्यैव, यावज्जीवं व्यवस्थाकथनात्।

लभ्यते, नपुंसकलिंगमेव वा, तथा स्त्रियाः स्वलिंगनिर्वृत्तावतिस्पष्टायामेव जातुचित् पुंनपुंसकलिंगोदयो, नपुंसकस्याप्येवं स्वलिंगवृत्तौ उत्तरकालभाविनी कदाचित् पुंल्लिंगस्त्रीलिंगे भवतो, न च निर्वृत्तितो लक्ष्येते, कपिलवदि" ति, एतेन स्त्रियाः श्मश्रुमत्त्वे नपुंसोऽपि निर्लोममुखत्वेन दृश्यमानत्वात् पूर्वपक्षे द्रव्यवेदव्याख्यानं तदपि निरस्तम्, अथ योनिमन्मनुष्यत्वं गर्भजद्रव्यनृभावस्त्रीरूपोपाधिर्व्याख्यायते, तथा च तदवच्छेदेन क्वचित्तीर्थासत्त्वे न कोऽपि दोषो, योनिमतीनामित्यत्र स्त्रीप्रत्ययाद् द्रव्यस्त्रिय एवेति चेत्, न 'मणुसिणि अययम्मि पज्जत्तो' इत्यत्र योनिमदसंयते पर्याप्तालाप एवेति स्वयमेव मनुष्यस्त्रीत्वेन, तथा-'णवरिय जोणिणि अयदे' इत्यत्रापि तिर्यक्स्त्रीत्वेन पूर्वपक्षे व्याख्यानात्, अत एव मनुष्यस्त्रीशब्देन द्रव्यस्त्री एव व्याख्येया, तिर्यग्योनिमच्छब्देन तिर्यग्द्रव्यस्त्रीवत्, न चात्रापि भावतः स्त्रियो द्रव्यतः पुरुषा इति वाच्यम्, बद्धायुष्काणामपि सम्यग्दृष्टीनां योनिमतीषु षण्ढेषु च उत्पत्तेरसम्भवादिति कारणनिरूपणे व्याख्यानात्, अत्रापि योनिमतीशब्देन भावव्याख्याने न हि सा काचिद् द्रव्यनृभावस्त्रीरूपा जातिरस्ति यस्यामुत्पादनिषेधः, तेन भवन्मतकुत्सनीयद्रव्यस्त्रियामेव तदुत्पादाभावाद् व्याख्याया न्याय्यत्वात्, एवं 'मणुसिणिपमत्तविरए' इति गाथायामपि द्रव्यस्त्रीव्याख्यैव संजाघटीति तत्रापि स्त्रीप्रत्ययनिर्देशात्, न तु द्रव्यपुरुषभावस्त्रीरूपव्याख्या, तथा भावे आहारकद्विकयोगादिनिषेधानुपपत्तेः, कदाचित्तस्यैव पुंसो भावस्त्रीवेदाभावेन पुरुषवेदोदयेन च तावत्कालमध्ये चतुर्दश-

१ आ।दिशब्दान्मनःपर्ययपरिहारविशुद्धितीर्थनामकर्माद्वितीयोपशमसम्यक्त्वं चेत्येते स्त्रीलिंगनिषिद्धा भावा द्रव्यपुरुषभावस्त्रीणामपि निषिद्धास्तेऽप्यनुपपन्ना इति ।

पूर्वाध्ययनेनाहारकतन्मिश्रयोगद्वयसम्भवात्, अथ पुंवेदोदयस्य चतुर्दशपूर्वपठनं यावत् अनैयत्यादशुभवेदस्य पुनरुदयेन तद्योग-द्वयाभाव एवेतिचेन्न, एवं सति द्रव्यभावपुरुषस्यापि तुल्यत्वेन कदाचिदपि आहारकशरीरकरणं न स्यात्, भाववेदानां यावज्जीवाऽनवस्थानात्, द्रव्यवेदस्यैव भवप्रथमसमयमादिं कृत्वा तद्भवचरमसमयं यावदवस्थानस्य प्रागुदितत्वाच्च, तेन द्रव्यस्त्रीव्याख्यायामेवाहारकद्विकाद्यभावः सूपपाद इति । अथ कश्चित्पुरुषो भावतः स्त्रीवेदं वेदयति यावन्नावेदकत्वं स्यात् तावत्कालं स्त्रीवेदस्यैव सदावस्थानात् न तत्परावर्त्त इष्यते भावतो, द्रव्यतोऽपि पुंवेदिन इव तस्यापि सदा तादृूप्याद्, विचित्रत्वाद्भावस्य भावानाम्, एवं च तादृशस्य पुंसस्तीर्थाहारकद्विकाद्यसत्त्वयोग्यत्वेन न कश्चिद् बाध इति चेन्न, वेदवैषम्ये चलाचलत्वस्यैव युक्तत्वात्, अन्यथा पुरुषत्वव्याहतेर्नपुंसकत्वापातः सदा, परपुरुषाभिलापात् कदापि स्त्रिया आत्मना अभोगात् तृतीयवेदाविशेषात्, द्रव्यभावपुंसो वेदसाम्येऽपि चलाचलत्वं भावमाश्रित्यानुभूयते तर्हि वेदवैषम्ये चलत्वे किं चित्रमिति, दृश्यते द्रव्यभावपुमान् कदाचित् स्त्रीवांछकः, स एव कदापि वैराग्यादिना सद्यो भुक्तभोगादिहेतुना वा स्त्रिया अवांछक एव, किंच-प्रतीयमानमर्थं द्रव्यस्त्रीरूपं विहाय भावस्त्रिया अर्थः समाकृष्यते भूतपूर्वगत्योपचारेण चतुर्दश गुणस्थानानि मानुष्याः समर्थ्यन्ते तदहेतुकं सहेतुकं वा ?, सूत्रे मानुष्या एव प्रतिपादने वृथा सूत्रातिक्रमदोषात् नाद्यः,—न च 'अवगयवेदे मणुसिणी सण्णा भूदगदिसमासज्जे-' त्यत्र तद्ग्रहणमिति वाच्यम्, तत्र मैथुनसंज्ञाया एवोपचारसमर्थनात्, एतेन त्रिभंगीवृत्तिव्याख्यानमसंगतमावेदितं, द्रव्यस्त्रिया मोक्षाभावाद्, भावस्त्रीमोक्षव्याख्यानं सहेतुकमिति द्वितीयो न, परस्पराश्रयात्, सिद्धे द्रव्यस्त्रीमोक्षाभावे भावस्त्रीपरं सूत्रव्याख्यानं, भावस्त्रीपरसूत्रव्याख्याने सिद्धे द्रव्यस्त्रीणां मोक्षाभावसिद्धिरिति, न च शास्त्रान्तराद् द्रव्यस्त्रीमोक्षाभावसिद्धेर्नान्यो-

ऽन्याश्रय इति वाच्यं, गोमट्टसारादाधिक्येन कस्याप्यप्रामाण्यात्, गोमट्टसार एव स्थानान्तरे एतत्सूत्रार्थसमाकर्ये विपर्ययस्यापि वक्तुं शक्यत्वाच्च, भावतः स्त्रिया अपि द्रव्यतः पुरुषत्वस्यातिशयज्ञापनमुपचारफलमिति चेत्, न, द्रव्यस्याप्राधान्याद् भावस्य मुख्यत्वाद्वेदे गतेऽपि तदुपचारसद्भावाद् द्रव्यस्त्रिया एव प्राधान्यापत्तेः, यद्भावो मोक्षार्हस्तद्द्रव्यभावयोः सुतरां मोक्षार्हत्वात्, न चैवं द्रव्यस्त्रिया भावपुरुषत्वं मोक्षाय क्षममिति, यत्तु भूतपूर्वगत्याश्रयणं तदपि न सूत्रसम्मतं, यत्र तदाश्रयणं तत्र सूत्र एव प्रतिपादनाद्, अपगतवेदानिर्वृत्तिकरणमैथुनसंज्ञावत्, 'णट्ठकसाए लेस्सा उच्चदिसा भूदगइपरिण्णाया। अहवा जोगपउत्ती मुक्खोत्ति तहं हवे लेस्सा ॥ ५२२ ॥ नष्टकषाये-उपशान्तादित्रये कषायोदयानुरञ्जिता योगप्रवृत्तिर्लेश्येति लक्षणवती लेश्या भूतगतिमाश्रित्य, अथवा योगप्रकृतिर्लेश्या इत्येवं मुख्याश्रयणादित्यादिसूत्रप्रदेशवद्वा, तस्मात् नात्र भूतपूर्वोपचारो, नापि अयं द्रव्यपुरुषो भावस्त्रीत्युपलक्षणं सुविमर्शं, तथाहि-सवेदको भूत्वा अवेदको भवति, सकषायो भूत्वा अकषायश्चेति, तथा भावतः पुंवेदको भूत्वा स एव कालान्तरे स्त्रीवेदको नपुंसकवेदको वा, किञ्चिद्वस्तुनि लोभीभूत्वा अलोभी, क्रोधीभूत्वा अक्रोधी भवति इतिनोकषायप्रकृतित्वाद्वेदभावानां परिवर्त्तनानुभवादुपलक्षणासंगतेः, अत एवाहारकद्धिकनिषेधो द्रव्यस्त्रिया एव युक्तः, पूर्वपक्षे 'संभिन्नाई दस विणु सेसा संखाउभवियमहिलाणं' इत्युक्तत्वात्, उदयत्रिभंग्यामपि 'मणुसिणि इत्थी' त्येतद्गाथायां अयोगे तीर्थकृत्त्वाभावादिति, द्रव्यस्त्रीव्याख्यायामेव सुसंगतं, द्रव्यपुरुषाणां तीर्थकृत्त्वयोग्यत्वात्, भावस्त्रीत्वस्य तत्त्वतोऽयोगे भावेनोपचारस्यानुपयोगात्, न हि भावस्त्रीत्वे भवता विकल्पितेऽयोगिनि पुरुषे तद्वस्तुगतिः स्याद्, अतिप्रसंगात्, एवं पुरुषवेदनिषेधेऽपि मानुष्या

द्रव्यपुरुषव्याख्यानेऽनुपपत्तिर्मन्तव्या, द्रव्यपुंस्त्वस्य सद्भावात्, एतेन भूतपूर्वोपचारात् 'वीस नपुंसकवेया' इत्यत्र व्याख्यापि दूषिता, स्यान्मतं कौटिल्याशुचित्वत्रपाबाहुल्यादिप्रत्यक्षानुभवात् न द्रव्यस्त्रिया मोक्षः, तत एव गाथाव्याख्या औपचारिकीति नान्योऽन्याश्रय इति चेत् तन्न, कौटिल्यादीनां स्वभावे व्यवहारात्, निश्चयनयापेक्षया तु कौटिल्यं मायाकषायोदयजन्यम्, अशुचित्वं चौदारिकप्रकृत्युदयानुभावि, त्रपाबाहुल्यं तत्तन्मोहनीयप्रकृत्युदयसांकर्यकार्यं कर्म्मजं, न स्वभावजं, तथा च सम्यग्दृष्टिस्त्रीसकाशान्मिथ्यादृशोऽनन्तानुबन्धिमायावत्तया कौटिल्याधिक्यात् पुरुषस्यापि तद्भवे न मुक्तियोग्यता स्यात्, अथ तत्कौटिल्यं वेदयतो नास्त्येव मोक्षोऽन्तरकरणादिना तद्व्यपगम एव तदाप्तिरिति चेद्, अन्यत्रापि तुल्यमेतत्, अथ पुंसां तदभावे योग्यता, स्त्रीणां तु नैषा इति चेत्, न, नियामकाभावात्, न हि प्रतिज्ञामात्रेणार्थसिद्धिः, अनन्तानुबन्धिमायायाः उपशमे क्षये वा स्त्रियाः सामर्थ्यं तद्वदप्रत्याख्यानमायायास्तथा प्रत्याख्यानमायाया अपि असंख्याताध्यवसानानां त्यागसामर्थ्यं स्वीक्रियते, येन घोराणुव्रतरूपमहाव्रतदेशीयैकादशप्रतिमाऽऽचरणं यावत् स्त्रियो विशुद्धिमायान्ति, सम्यक्त्वाणुव्रतधारित्वेन प्रत्यक्षानुभवात्, सर्वथा मायाबाहुल्यत्वे तदपि दुर्लभं, अभव्यवत्, तथा च क्रमेण तृतीयतुर्यमायात्यागसामर्थ्यं सम्भवद् दुष्प्रतीकारं, स्त्रीवेदिद्रव्यपुरुषस्य तत्त्यागसामर्थ्ये तवापि स्वीकाराद्, बहुतरदृढतमंमायाक्षययोग्यतायां तदल्पशिथिलतरक्षयसामर्थ्येऽवश्यं भावात्, प्रयोगश्चात्र-विवादापन्नं तृतीयादिजनितं मायाबाहुल्यं स्त्रीणां तद्भवे क्षययोग्यं, जातिनपुंसकाद्यनवच्छिन्नमायाबाहुल्यरूपत्वात्, प्रथमद्वितीय-

१ मणुसिणि इत्थीसहिया तित्थयराहारं पुरिससंढूणा । इत्यत्र 'मणुसिणि' शब्देन द्रव्यपुरुषः भावस्त्री एवेतिव्याख्याने

जनितमायाबाहुल्यवत्, एवं क्रोधमानमायालोभत्रपाबाहुल्यमपि प्रतिक्षेप्यं, अथ तत्र नियामकमस्तीति चेद्वद, किं देवादिवद्भवो वा तिर्यगादिवद्विवेकराहित्यं वा जातिनपुंसकवत् क्लिष्टचित्तत्वं वा अतिकामत्वं वा ?, न प्राच्यो, मनुष्यभवत्वात्, तत्रापि पर्याप्तत्वात् संज्ञित्वाच्च, न द्वितीयः, पुरुषाणामिवैकादशप्रतिमादिधर्म्मकर्म्मणां प्रत्यक्षतः स्त्रीणामुपलम्भात्, न चेदृग्विवेकस्य तिर्यक्षूपलम्भो, न तृतीयः, उभयाभिलाषस्यैकाभिलाषस्य च महदन्तरत्वात्, अथ जातिक्लीवस्य देशविरतिं यावत्तत्प्रतिबन्धकध्वंससामर्थ्ययोग्यतायामपि महाव्रतप्रतिबन्धकध्वंसासामर्थ्ये किं नियामकं ?, न तावद्भवविवेकराहित्ये, पूर्ववत् क्षेप्यत्वात्, अनन्यगत्या लिंगमेव तत्र नियामकं स्वीकार्यं, तद्वत् स्त्रियामपीति चेत्, न, तत्षण्ढस्य तिरश्च इव कस्यचित्कदाचिदेव कालानुभावाज्जातिस्मृत्याद्यवाप्य हीनाध्यवसायरूपदेशव्रतस्वीकारात् तत्राप्यूर्ध्वमनारोहे न लिंगं नियामकं स्वीकुर्मः, किन्तु नगरदाहसमोभयाभिलापरूपक्लिष्टचित्तत्वमेव प्रत्यक्षसिद्धम्, न चैतत् स्त्रीष्वपि तुल्यं, भवन्मतेऽपि उत्कृष्टाध्यवसायजन्यैकादशप्रतिमाचरणयोग्यत्वात् उपचारान्महाव्रतौचित्याच्च, अत एवोक्तं ज्ञानार्णवे- 'ननु सन्ति जीवलोके काश्चिच्छुभशीलसंयमोपेताः। निजवंशतिलकभूताः श्रुतसत्यसमन्विता नार्यः ॥ १ ॥ सतीत्वेन महत्त्वेन, व्रतेन विनयेन च। विवेकेन स्त्रियः काश्चिद्, भूपयन्ति धरातलम् ॥ २ ॥ निर्विण्णैर्भवसंक्रमात् श्रुतधरैरेकान्ततो निःस्पृहैर्नार्यो यद्यपि निन्दिताः शमधनैर्ब्रह्मव्रतालम्बिभिः। निन्द्यन्ते न तथापि निर्मलयमस्वाध्यायवृत्तांकिता, निर्वेदप्रशमादिपुण्यचरितैर्याः शुद्धभूता भुवि ॥ ३ ॥ नचैवंविधः कश्चिज्जातिनपुंसको दृष्टः श्रुतो वा, तस्य कामानुपशमादेव नोर्ध्वं गुणस्थानारोहः; त्वन्मतेऽपीष्टिकापाकोपमकामाशयत्वं तस्य सिद्धं, यदुक्तं गोमट्टसारे- 'तिणकारीसीट्टपागग्गिसरिसपरिणामवेयणुम्मुक्का। अवगयवेदा जीवा सयसंभवणंतवरसोक्खा ॥ २७४ ॥' एतादृशत्रिविधवेदाभावे मुक्ताः

जीवाः स्वकस्मात् सम्भवदनन्तवरसौख्या इत्यर्थः, स्त्रियास्तु ब्रह्मचर्यादिसुकृतैः पुरुषेभ्योऽपि वैशिष्ट्यं साक्षात्क्रियते, अत एव 'छादयति' इत्यादिगाथाया वृत्तौ 'यद्यपि तीर्थकरजनन्यादिस्त्रीसम्यग्दृष्टीनामेतदुक्तदोषाभावेऽपि तासां दुर्लभत्वेन प्राचुर्यापेक्षया स्त्रीलक्षणमुक्त''मिति गोमट्टसारवृत्तौ विवेकः, प्रयोगश्च-विप्रतिपन्नाः स्त्रियो महाव्रतं तद्भवे प्राप्तुं योग्याः, तद्भवेऽप्येकादशप्रतिमादिव्रतयोग्यत्वात् पुरुषवत्, न चात्र कृत्रिमक्लीवे व्यभिचारोऽस्मन्मते तस्यापि तद्योग्यत्वात्, त्वन्मते साध्यसाधनयोरुभयाभावाच्च, नन्वेवं कामानुपशमात् जातिपण्ढस्य नोर्द्ध्वगुणस्थानारोहस्तर्हि कृत्रिमनपुंसकेऽप्येषैव गतिस्तत्कथं तन्मुक्तिरिति चेत् न, अध्यवसायस्य वैचित्र्यात्, प्राधान्येन तेषां पुरुषवेदस्यैवोपपत्तेः, नपुंसकवेदं भावेन वेदयतः पुरुषस्य क्षपकत्ववत्तस्यापि तत्त्वे न किंचिद्बाधकमुत्पश्याम इति, तत एव 'स्त्रीषण्ढवेदयोरपि तीर्थाहारकबन्धो न विरुध्यते, उदयस्यैव पुंवेदिषु नियमा'दिति गोमट्टसारवृत्तौ, जातिषण्ढस्य विशिष्टश्राद्धक्रियाऽयोग्यत्वहेतुना उभयनयसम्मतेन महाव्रताभावः सुसाध इति ॥ अथ स्त्रीणामपावित्र्यं महाव्रतं दूषयति, तत् न, तदाध्यात्मिकं शारीरं वा ?, नाद्यः, तस्य दुष्टपरिणामजन्यत्वात्, कषायबाहुल्ये प्राग् निरस्ते तदभावात्। द्वितीयेऽप्यपावित्र्यं योन्यादिजन्यं तदितरद्वा ?, न तावदाद्यं, बाह्यापावित्र्यस्यान्तरमहाव्रतघातकत्वानुपपत्तेः, मुनेः कालादिदोषादुद्भूतकफबाहुल्यप्रमेहादिरोगजन्याशुचित्ववत्, न च मुनीनां तन्नास्ति, ग्लानत्वे तदवश्यं भावाद्, ग्लानत्वं तु साक्षाद् दृश्यते, श्रूयतेऽपि च प्रवचनसारे- 'बालो वा वुड्ढो वा समभिहयदो वा पुणो गिलाणो वा। चरियं चरउ सजोगं मूलच्छेदो जहा ण हवे ॥ १ ॥ बालो वृद्धः श्रमाभिहतो वा पुनर्ग्लानो वा चर्यां चरतु स्वयोग्यां मूलछेदो यथा न भवे''दिति " तद्वृत्तिः, अत एवौषधदानोपदेशः पेशलः, औदारिकशरीरे रोगस्यावश्यं सम्भावना, न चेत्किं गजसुकुमालस्य महाव्रतेष्वपि दाघरोगस्वीकारः, साधोः

रोगपरीषहजेतृत्त्वं परेषां साधूनां रोगिमुनेर्वैयावृत्यं चोपदिष्टं तथैवोपपत्तिमत्, 'आचार्यादीनां व्याधिपरीषहमिथ्यात्वाद्युपनिपाते सति अप्रत्युपकाराशया प्रासुकौषधभक्तपानाश्रयपीठफलकसंस्तारादिभिर्धर्म्मोपकरणैस्तत्प्रतीकारो वैयावृत्त्य'मिति भावनासंग्रहे, पुनः प्रवचनसारे-- ''रोगेण वा क्षुधया तृष्णया वा श्रमेण रूढं दृष्ट्वा श्रमणं साधुः प्रतिपद्यतामात्मशक्त्या''इति,व्रतमाहात्म्येऽपि-'भेषजदानफलोदयतः स्या'दिति, योन्यां रक्तश्रावोऽनेकजीवोत्पत्तितद्विनाशस्त्वशक्यपरिहारत्वान्न दीक्षाक्षतये, मुनेर्हर्षारक्तश्रावववत्, कफोद्रेके नाशामलश्रावववत्, निर्नामिकाजन्यपूतिश्रावववत्, तत्परिष्ठापने यतनापरत्वात्, 'संस्वेदः-प्रस्वेदः तत्र भवा संस्वेदिमाः चक्रवर्त्तिकक्षाद्युत्पन्नास्तेऽपि सूक्ष्मत्वात् त्यक्तुमशक्याः' पंचसंग्रहे जीवकाण्डे सप्तमाधिकारे प्रोक्तचक्रिकक्षादिजीवपरिष्ठापनवत्, अन्यच्च-साधूदरे कृमिप्रभृतय उत्पद्यन्ते विपद्यन्ते च, तेन न तद्व्रतविघातः, तद्वत् स्त्रीणामपीति समः समाधिः, अन्यथा तात्त्विकैकादशप्रतिमास्थितिरपि न सम्भवति, तस्यां यतिवद्धिंसाविरतेः, इर्यासमितिपरिणतयतींद्रव्यापाद्यमानवेगापतत्कुलिंगवदवश्यंभाविहिंसायां मुनित्वमत एवाप्रतिहतामित्युक्तं प्राक्, एतेन- 'मेहुणसण्णारूढो नवलक्ख हणेइ सुहुमजीवाणं। केवलिणा पन्नत्ता सद्दहियव्वा सया कालं ॥ १ ॥ इत्थीजोणीए संभवंति बेइंदिया हु जे जीवा। एक्को व दो व तिण्णि व लक्खपुहुत्तं च उक्कोसं ॥ २ ॥ पुरिसेण सह गयाए तेसिं जीवाण होइ उद्दवणं। वेणुगदिट्ठंतेणं तत्तायसिलायनाएणं ॥ ३ ॥' संसक्तायां योनौ द्वीन्द्रिया एते, शुक्रशोणितसम्भवास्तु पंचेन्द्रिया अपि, यदुक्तम्- 'पंचिंदिया मणुस्सा एगनरभुत्तनारिगब्भम्मि। उक्कोसं नवलक्खा जायंती एगवेलाए ॥ १ ॥ नवलक्खाणं मज्झे जायइ इक्कस्स दोण्ह व समत्ती। सेसा पुण एमेव य विलयं वच्चंति तत्थेव ॥ २ ॥' इत्यादिजीवोपमर्ददोषोऽपि प्रत्युक्तो, नारीणां शीलवतीनां ज्ञात्वा तत्करणकारणानुमतिप्रतिषेधात्, तथैव प्रतिमा(भा)सौष्ठवात्,

एवं च 'चित्ता सोही' त्यादिगाथोक्तं सर्वं समाधेयम् । अथ स्त्रीणां वस्त्रावश्यकत्वान्नापरिग्रहत्वमिति चेत् न, विकल्पासहत्वात्, तथाहि-स्त्रीणां वस्त्रं किं सहजातं ब्रह्मचर्यव्रतरक्षाहेतुकं वा ?, नाद्यः, प्रत्यक्षबाधात्, द्वितीये तु यद्व्रतहेतुस्तन्न परिग्रहः, पिच्छिकादेरिवेति प्राक् सविस्तरमुक्तं, किंच-चीवरपरिभोगस्तासामशक्यत्यागतया व्रतघातको जीवोत्पत्तिहेतुतया वा ?, नाद्यः, सम्प्रति प्राणानपि तित्यक्षूणामैकान्तिकात्यन्तिकानन्दसम्पदर्थिनीनां नग्नयोगिनीप्रभृतीनां दर्शनाद् अशक्यत्यागताया वस्त्रेऽश्रद्धानात्, न द्वितीयः, आहारस्यापि व्रतघातकत्वापादनात्, उत्पद्यन्त एव हि जठरे आहारयोगात् कृमय इति, एवं मूर्च्छाहेतुत्वमपि प्रागुक्तदिशा निरस्तव्यं, शरीरवत्तस्यापि तदहेतुत्वात्, अथ शरीरं श्रामण्यसहकारि न पुनस्तद्विघातकमिति चेत् न अत्रापि तुल्यत्वात्, अपि च-यदि स्त्रीणां वस्त्रं मोक्षप्रतिबन्धकं तत्किं सर्वदा तद्भावात् कदाचिद्वा ?, नाद्यः, तमस्विन्यां रहसि नाग्न्ये महाव्रतभावनया कैवल्यप्रसंगात्, द्वितीयस्तु पुरुषैस्तुल्य एवेति, रात्रौ बाह्ये नाग्न्येऽपि ममत्वाभावजन्यमचेलत्वं न सम्भवत्येवेति चेन्न, क्षुत्तृष्णाहिममुष्णं नग्नत्वं याचनारतिरलाभः । दंशो मशकादीनामाक्रोशो व्याधिदुःखसंगमनम् ॥ २४ ॥ स्पर्शश्च तृणादीनामज्ञानं दर्शनं तथा । प्रज्ञासत्कारपुरस्कारा शय्या चर्यावधौ निषद्या स्त्री ॥२५॥ द्वाविंशतिरप्येते परीषहाः सन्ततं च सोढव्याः। संक्लेशमुक्तमनसा संक्लेशनिमित्तभीतेन ॥२६॥ इति रत्नत्रयमेतत् प्रतिसमयं विकलमपि गृहस्थेन । परिपालनीयमनिशं निरत्ययां मुक्तिमभिलषता ॥२७॥ इति श्रावकाचारे प्रागुक्तामृतचन्द्रवचःप्रामाण्याद्भवन्मते तदंगीकाराद्, अत एव काष्ठासंघे स्त्रीणां महाव्रतस्वीकारोऽपि संगत एव, मूलसंघेऽपि पिच्छिकाकमण्डलुरूपमुनिलिंगस्य प्रतिपत्तिरौपचारिकमहाव्रताधि(दि)योग्यत्वात्, यदुक्तं श्रीहरिवंशपुराणे जिनदासकृते द्रौपदीप्राग्भवाधिकारे- 'महाव्रतानि पंचाथ, ददौ ताभ्यामुदग्रधीः। चारित्राचारिशिष्यायै, मत्पार्श्वे प्रेषिते इमे॥१॥

आदिपुराणे २४ पर्वणि-' भरतस्यानुजा ब्राह्मी, दीक्षित्वा गुर्वनुग्रहात्। गणिनीपदमार्याणां, सा भेजे पूजितामरैः॥१॥ न चेयमणुव्रतदीक्षा भविष्यतीतिज्ञेयम्, 'उपात्ताणुव्रता धीरा, प्रयतात्मा प्रियव्रता। स्त्रीणां विशुद्धचित्तानां, बभूवाग्रेसरे सती ॥ १ ॥'-तिभेदकथनात्, महाव्रताभावे चतुर्विधसंघानापत्तिः, अथैकादशप्रतिमाधराः श्राविकाः साऽन्यः आर्यिका इति वाच्याः, उत्कृष्टपदप्राप्तत्वात्, शेषत्रयं प्रतीतमेवेति चेन्न, ब्रह्मचारिणां तत्राप्रवेशात्, नामी मुनयस्तवानंगीकारात्, प्रतिमाभृत्त्वेऽपि श्रावका एवैते तद्वदार्यिका अपि श्राविका एव, उत्कृष्टपदप्राप्तिस्तु परं प्रत्यासिद्धा, तस्या अपि केवलित्वाङ्गीकारात्, त्वन्मतेऽपि गणिनीपदस्य उत्कृष्टत्वात्, न हि सर्वा आर्या गणिन्यः, तथा च सर्वतीर्थकृतां श्राविकाभ्योऽतिरिक्ता आर्यिकासंख्याऽनुपपन्नैव, योऽप्यहमिन्द्रपदालाभः स्त्रीणां प्रत्यपादि सोऽपि न साम्प्रतमस्मन्मते तदंगीकारात्, यन्निजगदुर्जगदुत्सवकारिणः श्रीहेमाचार्याः श्रीनेमिचरित्रे प्रथमसर्गे—"पादपोपगमनं स विधायान्तेऽपराजितमगान्मुनिशंखः। तेऽपि तेन विधिनैव यशोमत्यादयोऽग्युरपराजितमेव ॥१॥" एवं पृथ्वीचन्द्रचरित्रे विजयचन्द्रचरित्रे च सर्वार्थसिद्धिगमनमपि स्त्रीणां प्रतीतं, यदुक्तं विजयचंद्रचरित्रे—"सोऊण इमं वयणं सुदंसणा पासिऊण कणयंव। संपत्तजाइसरणा आलिंगइ गुरुसिणेहेणं ॥ ५९ ॥ साहु तए सहि! सम्मं अहयं पडिबोहिया पयत्तेणं। इय भणिऊणं दोन्निवि संजाया हरिससंतुट्ठा ॥ ५९ ॥ काऊण सावगत्तं सुद्धं समणत्तणं च पालेउं। मरिऊण समुप्पन्ना सव्वट्ठे सुरवरा दो वि ॥ ६० ॥ तत्तो चविऊण पुणो सम्मत्तं पालिऊण सुविसुद्धं। कम्मक्खएण दुन्निवि पत्ता सिद्धिं सुहसमिद्धिं ॥ ६१ ॥" इति दीपपूजाविषये जिनमतीकथानके पंचमे, यापि मूर्त्तिपूजा प्रसञ्जिता अस्मन्मते प्रसादनीयबिम्बोपयोगेन शाश्वतप्रतिमानुकारस्वीकाराददुष्टैव, न च पुनर्मल्लेः कैवल्ये बाल्ये वा स्तनाभासो, बाल्ये एव दीक्षापक्षाश्रयात्, तद्दिन एव च केवलोत्पत्ते-

स्तदसंभवात्, अत एव पुरुषमूर्त्तावपि न शिश्नं न कूर्चश्मश्रुणी सुभगत्वव्याघातात्, योऽपि यूकाद्युद्भवे प्राणातिपातः स चैकाद-शप्रतिमायाः सामान्यात् न दोषपोषकः, न चैवं यूकाभयात् परिधानमोचनन्यायवत् यूकाद्युत्पत्तिभयात् मुनित्वाभावः सिद्ध्यतीति, यत्र ( यतनावति ) वस्त्रे न यूकोद्भवस्तथा संस्कारादन्वेव परिधानानुज्ञानात् इति, यतनैव परं प्रमाणं, अन्यथा कमण्डलुनीरसंस-क्तिवशादुद्भव त्पनकभयादाहारादुद्भववत्कृमिकोटिभयाद्वस्त्रादेरिव तस्यापि त्याग एव मुनित्वं स्यात्, अपि च—केशेषु कंकताद्य-करणात् अक्षालितमूर्द्धजपुञ्जे कस्यचिन्मस्तके यूकोद्भवे किं लोचो न कार्यः?, किं छेदप्रतिसन्धानं वा विधेयम्?, आद्ये बहुयूको-द्भवश्चारित्रातीचारश्च, द्वितीये तु अत्रापि तुल्यत्वं, न च मुनिमस्तके न यूकावकाश इति, नियामकाभावात्, एवं कक्षाऽधोभागेषु चिंचिणीजीवोत्पत्तौ लोचकरणे यतनैव प्रमाणं, न पुनस्तदुद्भवान्महाव्रताभावः, तथात्वे च कथमवदत् कुन्दकुन्दः सूत्रप्राभृते-“जइ दंसणेण सुद्धा उत्ता मग्गेण सावि संजुत्ता। घोरं चरइ चरित्तं इत्थीसु ण पावया भणिया ॥ १ ॥” यदि च स्त्रीषु न महा-व्रतित्वं तदा ब्रह्मचारिणः कथमार्यिकां वन्दन्ते, वन्दने धर्म्मवृद्धिरिति महाव्रतिवत् कथं ताः प्रतिवदन्ति, साधुना तासां नमने कथं धर्म्मवृद्धिरित्यणुव्रतिनमने इव नोच्चार्यते, अस्मन्नये तु यथापर्यायं न साध्वीवन्दनव्यवहारः, किन्तु सम्प्रतिदीक्षितस्य साधो-रपि वन्दनं प्रथमतः शतवर्षदीक्षितया साध्व्या कार्यं, न विपर्ययात्, कासांचिन्मुनिवन्दने गर्वादिना भूरिकर्म्मबन्धनिमित्तत्वात्, आम्नायोऽयं, न पुनर्निश्चयः, ‘सव्वस्स समणसंघस्से' त्यादिना तन्नमनात्, अत एव प्रातरुत्थाय शीलवतीनां स्तुतिर्यतिभिरपि

१ 'पव्वया' इति पाठे प्रव्रज्या यथाख्यातरूपा न भवतीति वृत्तिकारवचनादन्यथा न पापता उक्ता

पठ्यते, यच्चान्यैरुपकरणाधिक्यात् स्त्रीणां महाव्रताभावः साध्यते तत्रापि एकादशप्रतिमाभेदवन्न दोषः, अन्यथा आर्यिका क्षुल्लिका चेति भेदद्वयं न स्यात्, यदुक्तं सूत्रप्राभृते—"लिंगं इत्थी ण हवइ भुंजइ पिण्डं सुएयकालम्मि । अज्जियवि एकवत्था वत्थावरणेण भुंजेइ ॥ १ ॥" इत्यादेः प्रागेवोक्तेः, तदेवं सिद्धे स्त्रीणां महाव्रतसाधने तत्साध्यो मोक्षोऽपि सिद्धः, द्रौपद्यादीनां षोडशस्वर्गगतिस्तु चिन्त्यैव, कल्पोपपन्नसुराणां द्वादशधैव सूत्रणात्, यतस्तत्त्वार्थसूत्रे "देवाश्चतुर्निकायाः, आदितस्त्रिषु पीतान्तलेश्याः, दशाष्टपंच(द्वा)दशविकल्पाः कल्पोपपन्नपर्यन्ताः", अत एव त्वन्मते "भवणाण य चालीसा वंतरदेवाण हुंति बत्तीसा । कप्पामर चोवीसा चंदो सूरा य मणुयतिरिओ य ॥ १ ॥" इयं गाथाऽपि इन्द्रप्रतीन्द्रगणनया त्वत्कल्पितयाऽप्युपपद्यते, यत्तु वामदेवकृते त्रैलोक्यदीपके—"चतुर्णां मध्ययुग्मानां, चत्वारः स्वर्गनायकाः । प्रत्येकं शेषयुग्मानां, कल्पाः स्युर्द्वादशेति वै ॥ २६० ॥ सौधर्म्मेन्द्रस्तृतीयेन्द्रो, ब्रह्मेन्द्रो लान्तवाधिपः । आनतारणशक्रौ द्वौ, षडेते दक्षिणाधिपाः ॥ २६१ ॥ ईशानेन्द्रोऽथ माहेन्द्रः, शुक्रेन्द्रस्तच्छतारकम् । प्राणतेन्द्रोऽच्युतेन्द्रश्च, सौम्येन्द्राः प्रभवन्ति षट् ॥ २६२ ॥" इत्यादिना इन्द्रगणनया द्वादशेत्यावाससूत्रं समाहितं तन्न, भवनपत्याद्यावाससाहचर्यात्, अस्तु वा तत्तथापि चतुर्णां मध्ययुग्मानामेकनायकत्वेन ऐक्याद् द्वादशैव कल्पा उपपन्ना इति, इन्द्रास्तु यथोत्तरमहमिन्द्रत्वसम्भावनया आनतप्राणतयोरेकः परद्वयेऽप्येक एवेन्द्र इति विवेचने कल्पोपपन्ना दशेति, तेन "चउसट्ठि चमरसहिओ चउतीसहिं अइसएहिं संजुत्तो । अणुचरबहुसत्ताहिओ कम्मक्खयकारणनिमित्तो ॥ २९ ॥" इति दर्शनप्राभृते तीर्थकृद्वर्णने तव मतेऽपि चतुःषष्टिरेवेन्द्राणां सिद्धयति, इन्द्रप्रतीन्द्रयोः सामानाधिपत्याघटनात्, तत एव

१ मल्लप्रतिमल्लवासुदेव प्रतिवासुदेववद्वा ।

तत्त्वार्थसूत्रे "पूर्वयोर्द्वीन्द्रा" इति, गोमट्टसारे प्रतिपादितामराधोऽवधिस्थितिरिति द्वादशधा कल्पसाधना, यदुक्तम्-'सक्कीसाणा पढमं बिइयं तु सणंकुमारमाहिंदा । तइयं तु बंभलंतग सुक्कसहस्सारया तुरियं ॥ ४२१ ॥ आणयपाणयवासी आरण तह अच्चुया य पस्संति । पंचमखिइपेरंतं छट्ठं गेविज्जगा देवा ॥ ४२२ ॥ सव्वं च लोगनालिं पस्संति अणुत्तरेसु जे देवा । सक्खेत्ते य सकम्मे रूपगदमणंतभागं च ॥ ४२३ ॥" तत्त्वार्थसूत्रे नवानुत्तरावासस्याकथनात् तदङ्गीकरणमपि चिन्त्यमिति कृतं प्रसङ्गेन ॥

दिक्पटमते देवलोकयन्त्रकम्

| देवलोकः | | | पटल | | | देवलोकः |
|---|---|---|---|---|---|---|
| अ | इं | १ | ६ | १ | इं | अ |
| प्रा | इं | १ | ० | १ | इं | आ |
| स | इं | १ | १ | ० | ० | श |
| म | इं | १ | १ | ० | ० | शु |
| का | ० | ० | २ | १ | इं | लां |
| ब्र | ० | ० | ४ | १ | इं | ब्र |
| मा | इं | १ | ७ | १ | इं | स |
| ई | इं | १ | ३१ | १ | इं | सौ |

४५००००००

पंच ०० १ ०० अनु

० ० ०

० ० ०

० ० ०

३

नव ३

३ ग्रैवेयक

एवं तुच्छादिविशेषणान्यपि न मोक्षप्रतिषेधकानि, दृष्टिवादपठनाधिकारे मोक्षानधिकारेऽव्याप्तेः, तथाहि-स्त्रिया दृष्टिवादापठनं सूत्रतः अर्थतो वा?, पक्षद्वयेऽपि देशतः सर्वतो वा?, आद्येऽसिद्धिः, सूत्रस्यार्थस्य च देशतः पठनाभ्युपगमात्, नवमपूर्वोद्धृतपरीषहाध्ययनपर्युषणाकल्पादिवत्, द्वितीये मापतुषादिभिर्व्यभिचारः, तेषां सर्वतः पठने तादृग्बुद्ध्यभावेनानधिकारात्, न च तत्र बुद्धिवैगुण्यं प्रयोजकं, स्त्रियास्तु बुद्धिसद्भावेऽप्यनधिकार इति वाच्यं, मापतुषादेर्धारणरूपबुद्धिवैगुण्यस्येव धारणशक्तत्वेऽपि अगम्भीरतारूपबुद्धिवैगुण्यादेव, लोकेऽपि तुच्छबुद्धिरयमिति तुच्छत्वस्य बुद्धेरेव विशेषणात्, तथा च यः (पुमां) स्तद्धारणासमर्थोऽपि मुक्तियोग्यः स्त्रियस्तु तत्समर्था अपि न मुक्तियोग्या इति महत् साहसं, पुरुषत्वजातीयत्वात् तद्योग्यत्वे स्त्रीपुंसान्यतरत्वावच्छेदेन मनुष्यजातेरेव तद्योग्यत्वनियमनाद् अम्भोजाक्ष्यामपि सामान्यात्, वस्तुतो द्वयमपि न किंचिद् । यदपि पापराशिसमुत्पन्नत्वं मोक्षनिषेधकमुदगारि तदपि दुःस्वरैर्दुर्भगैर्निर्धनादिभिर्व्यभिचारि, तेषामपि तद्भावेनानन्तपापराशिसमुत्पन्नत्वात्, एवं वामनकुब्जहुण्डसंस्थानवन्तोऽप्यवसेयाः, पुण्यैः प्राप्तपुरुषत्वेन मोक्षयोग्यत्वं चेद्, अत्रापि समचतुरस्रसंस्थानसुस्वरादेयसुभगादिपुण्यप्रकृतिकत्वात्कथं न तदिति, यथा ते पुण्यात् पुरुषत्वभाजोऽपि तत्तत्स्वरलाभैश्वर्यादिमदजन्यानन्तपापराशिसमुत्पन्ना अपि मुक्तियोग्यास्तथा स्त्रियोऽपि पापोदयात् स्त्रीत्वभाजोऽपि सुस्वरसुस्थानसुरूपैश्वर्ययशोहेतुपुण्यराशिजन्याः कथं न तद्योग्या इति, एवं नीचकौलेयकेष्वपि बोध्यम्, हरिकेशिसाध्वादिवत्, न च तेषामपि न मोक्षयोग्यत्वं, तथाऽनुमानात्, विवादापन्नाः-पुरुषास्तद्भवे मुक्तियोग्या विशिष्टांगोपांगपुरुषत्वात् सम्प्रतिपन्नवदिति, एतेन मुक्तियोग्यत्वे पुरुषत्वजातिरूपमवच्छेदकं स्त्रिया मोक्षे तु स्त्रीपुरुषान्यतरमनुष्यत्वमुपाधिरूपमवच्छेदकमिति वैषम्यमप्यपास्तं, जात्यन्धादीनां तदयोग्यत्वादिति, ननु-"गोयं दुहुच्च उच्चनीयं

कुलाल इव सुघडभुंभलाइयं" इति कर्म्मविपाके कथनाद्यावज्जीवं तथारूपत्वानवगमान्नीचैर्गोत्रस्य "सगसीइ देसि तिरिगइ आउ-निउज्जोय तिकसाया ॥ अट्ठुच्छेओ इगसी पमत्ती" ति कर्म्मस्तववचनान्नीचैर्गोत्रोदयवत उच्चैर्गुणस्थानारोहः कथं प्रमत्तादिरिति चेत्, सत्यं, यदा नीचैर्गोत्रोदयजन्यं नीचाचरणं द्रव्यतो भावतश्च त्यजति तदैव तस्य प्रमत्ताद्यारोहो न पुनस्तदाचरतः, तेन तत्त्वतो नीचाचरणमेव नीचैर्गोत्रं, न पुनर्नीचकुलं, तस्य व्यावहारिकत्वात्, अन्यथा सत्कुलजातस्य चतुरशीतिलक्षपूर्वायुषः पूर्वलक्षेषु द्वित्रेषु गतेषु कुलमदाद्युद्भूतनीचैर्गोत्रबन्धस्योदयो दुर्घटः स्यात्, अबाधाकालस्यानुदयरूपस्य तावतोऽभावात्, अत एवोक्तं कर्म्मकाण्डे--"संताणकमेणागयजीवायरणस्स गोयमिति सण्णा । उच्चं नीयं चरणं उच्चं नीयं भवे गोयं ॥ १ ॥" "सन्तानक्र-मेणागतजीवाचरणस्य गोत्रमिति संज्ञा भवति, तत्रोच्चाचरणमुच्चैर्गोत्रं नीचाचरणं नीचैर्गोत्र" मिति गोमट्टसारे गाथार्थः, अपि-च-न हि बाह्यस्य व्यावहारिकस्य कुलव्यवहारस्य मोक्षं प्रति साधकत्वं बाधकत्वं चास्ति, आन्तरत्वात् मोक्षसाधनस्य, यत्तु आगमे सत्कुलत्वं वर्णितं तत्तत्र प्रायो धर्म्मस्य सुलभत्वादेव, अन्यथा तिरश्चां कथं देशविरतिः?, नरभवस्याप्यभावेन दूरापास्तत्वात् सत्कु-लस्य, किं च-एवं यदि कश्चिद्वदति यद्धनवानेव मोक्षं याति, न पुनर्दरिद्र इति, सोऽपि दुर्वारः स्यात्, तत्राप्यलाभरूपनीचैर्गोत्रो-

१ त्रयोविंशतितमपदे नीचकुलोत्पन्नोऽपि जातिसम्पन्न इव राजादिविशिष्टपुरुषपरिग्रहाज्जनस्य मान्य उपजायते, एवमुत्तमकुलोत्पन्नोऽपि यदि नीचैःकर्म्मवशाच्चाण्डालीं सेवते स निन्द्यः, तीर्थान्तरीया अपि, "मां हि पार्थ ! व्यपाश्रित्य, येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा इति भगवद्गीतायां नवमाध्याये द्वात्रिंशत्श्लोके मुक्तिं प्रपन्ना एव ।

दयाद् गोत्रस्याष्टविधत्वं श्रीउत्तराध्ययनवृत्तौ श्रीभगवतीसूत्रे च इत्यलं प्रसङ्गेन, स्त्रीणां निर्वाणस्थानाद्यप्रसिद्धिस्तु शत्रुञ्जयरैवतादिष्वनन्तशः सिद्धा इति सामान्यतः प्रतीतौ व्याहतैव, विविच्य कस्याश्चिन्मरुदेवीराजीमत्यादेरस्त्येव, कासांचित्तदभावे पुरुषाणामपि केषांचित् सामान्यात् तादृक्पुरुषत्वोपाधिना तत्प्रतीतेर्योग्यत्वनियमने तादृग्मनुष्यत्वोपाधिना तत्प्रसिद्धिः सुकरैव, किञ्च-यद्येषां प्रसिद्धं तच्चेत् स्वीकार्यं तर्हि मगधेषु वटग्रामान्तिके मुनिपात्रखानिः प्रसिद्धा साऽपि प्रमाणीक्रियतामिति यत्किंचिदेतत्, तीर्थान्तरीया अपि-'मां हि पार्थ ! व्यपाश्रित्य, येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ १ ॥' इतिभगवद्गीतायां नवमाध्याये द्वात्रिंशत्श्लोके स्त्रीमुक्तिं प्रपन्ना एवं ।

अथानुमाननिर्घातः- प्रथमेऽनुमानेऽसिद्धिः, तथाहि-हीनत्वं हि यत्किंचित्पुरुषाद्वा गुणाधिकाद् वा ?, नाद्यः, सामान्यजनापेक्षया आर्यिकाणामाधिक्ये तवापि स्वीकारात्, ब्रह्मचर्यादिक्रियाविशिष्टैरपि वन्द्यत्वात्, द्वितीये गणधराणामपि तीर्थकराद्धीनत्वेन मोक्षाभावप्रसंगात्, एवं द्रव्यतो भावतो वेत्यपि विकल्पनीयं, प्रथमे संसारापेक्षया व्रतापेक्षया वा ?, नाद्यः, स्त्रीणां राजन्यानां बहुभ्यो नरेभ्योऽधिकत्वात्, प्रत्यहं तैः सेव्यत्वात्, अथ तासामपि स्वभर्तृभ्यो हीनत्वमेवेति चेन्न, तद्भर्तृणामपि देवेभ्यस्तथा ततोऽपि महर्द्धिकेभ्यो न्यूनत्वाद्, द्वितीयेऽपि महाव्रतिभ्यो न्यूनत्वं सम्प्रदायानुरुद्धं न चेत् प्रतिबोधकारिणीनां भावतोऽधिकत्वात्, भावत एव न्यूनत्वमिति चेत्, तदपि न, परचेतोवृत्तीनामगम्यत्वाद्, धर्म्मकर्म्मभिः कतिचिन्नरेभ्योऽतिशयस्य स्त्रीणां

१ यवनमतेऽपि, अम्मांहस्तजनांरी अलव्रत्तइं रोयतहक्सद्,अस्यार्थः,- एवं मार्गे सत्यपि अष्ट स्त्रीणामवश्यं दर्शनमपि भविष्यति मोक्ष इत्यर्थः,

प्रत्यक्षाच्च, किं त्वया सामान्येन स्त्रियः पक्षीकृता विवादाध्यारूढा वा ?, आद्ये एकदेशे सिद्धसाधनात्, आधुनिकानां तिरश्चीनां भोगभूमिस्त्रीणां मोक्षास्वीकारात्, द्वितीये न्यूनता निग्रहात्, विवादास्पदेति विशेषणानुपादानात्, प्रतिपक्षश्च विमताः स्त्रियः तद्भवे मुक्तिगमनयोग्या नपुंसकेभ्योऽधिकत्वात् सम्प्रतिपन्नपुरुषवदिति, योऽपि नपुंसकदृष्टान्तः सोऽपि न सिद्धान्तः, तत्रापि कथंचित्कस्यचिन्मोक्षांगीकारात्, अस्मन्नये कृत्रिमनपुंसकानां त्वन्नये द्रव्यतः पुरुषाणां भावतो नपुंसकवेदिनां मोक्षयोग्यत्वात्, द्रव्यनरस्य स्त्रीवेदिनोऽपि वेदापरावर्त्ते सदा नपुंसकत्वे मोक्षस्वीकाराच्च, कृत्रिमनपुंसका हि प्रायः क्षतादिना नराकाररहिताः पुरुषा एव, तेषां मोक्षायोग्यत्वे नियामकाभावात्, तद्धि भवेत्, उभयाभिलाषित्वं उभयथा भोगासामर्थ्यं वा ?, नाद्यः, द्रव्यनरभावक्लीबे व्यभिचारात्, न द्वितीयः पुंस्येव व्यभिचारात्, स्त्रीभोगसमर्थत्वेऽपि तस्य उभयत्वविशिष्टभोगासामर्थ्यात्, एकसत्त्वे द्वित्वाभाववत् व्यासज्यप्रतियोगिकाभावस्यापि प्रामाण्यात्, यद्वा रोगाक्रान्तत्वश्रान्तत्ववृद्धत्वादिविशिष्टानां पुंसामुभयथा भोगासामर्थ्यसम्भावनया नैकान्तिकाच्च, उभयलिंगव्यतिरिक्तत्वमिष्टिकापाकातिशायिकामाग्नित्वं च जातिक्लीब एव, स एव च मोक्षायोग्यः, कृत्रिमाणां पुरुषत्वान्नायोग्यत्वं, व्यवहारस्तु अवाच्याकारश्मश्रुकूर्चाद्यभावत एव, ततो जातिपदानुपादानान्न्यूनता १। पुरुषैरवन्द्यत्वमपि न किंचिद्, भूयसीनां तीर्थंकरजननीनां सुरेन्द्रैरपि वन्दितत्वात्, आर्यिकाणां ब्रह्मचारिभिर्नमस्करणीयत्वाच्च, अथ ताभिरुत्कृष्टपदं प्राप्तं ब्रह्मचारिणां तु तत्प्राप्तव्यमिति तल्लघुत्वोपपत्तेस्तद्वन्दनं तेषां युक्तं, राज्ञ्याः प्राप्तोत्कृष्टमहिषीरूपपदायाः प्राप्तव्यपट्टाभिषेकपदराजकुमारनमनवदिति चेत् न, ब्रह्मचारिभिरपि आर्यिकातुल्यस्य पदस्य प्राप्तत्वात्, द्वयोरेकादशप्रतिमाधारकत्व-

निर्णयात्, न हि राजा चक्रवर्त्यादिपदवीयोग्यः प्राप्तपट्टाभिषेको राज्ञीं महिषीं न्यायमार्गात् नमस्करोति, प्रत्युत पुरुषत्वेन महाव्रतयोग्यत्वेन ब्रह्मचारिण एव आर्यिका वन्द्याः स्युरिति साम्प्रतं । किंच-' तित्थं चाउव्वण्णो संघो' इति वचनात् स्त्रीणां तीर्थान्तर्भूतत्वेन 'नमस्तीर्थाय' इत्युक्तवतस्तीर्थपस्यापि तन्नमनांगीकारात् प्रतिवाद्यसिद्धः २। यदपि सप्तमनरकपृथ्वीगमनाभावादित्युक्तं तत्रापि किं तद्भवे भवान्तरे वा ?, नाद्यः, चरमशरीरिभिर्व्यभिचारात्, नेतरोऽसम्भवात्, पुरुषत्वोपाध्यपेक्षया तद्गतियोग्यत्वे सति पर्याप्तसंज्ञिपंचेन्द्रियजातिनपुंसकातिरिक्तमनुष्यत्वापेक्षयाऽत्रापि तुल्यत्वात्, न चास्याप्रयोजकत्वं बहुव्यापकत्वादिति वाच्यम्, नीचकुलीननरदेवादिवर्त्तित्वेन तदपेक्षया पुरुषत्वजातेर्बहुव्यापकत्वात्, अन्यच्चापि--यस्याधोगतौ बहु सामर्थ्यं तस्यैवोर्ध्वगतावपीत्यपि नियमो नास्ति, भुजगखगसिंहसर्प्पस्त्रीमत्स्यानामधोगतौ क्रमसामर्थ्येऽपि ऊर्ध्वगतौ सहस्रारे तुल्यगमनसामर्थ्यादिति प्रांचः। सर्वार्थसिद्धिगमनाभावस्तु परं प्रत्यसिद्ध एव. अस्मन्नये तदंगीकारात्, न च निगोदाद्यागतावाप्तपुरुषत्वचरमशरीरिणां सर्वार्थसिद्धिगमनाभावेऽपि मोक्षस्यायोग्यत्वमस्ति, न चात्रापि तज्जातीये तदस्तीतिवाच्यं, केवलपुरुषत्वजातेः सर्वार्थसिद्धिगमनेऽप्रयोजकत्वाद् विशिष्टांगोपांगवज्रर्षभनाराचसंहननसत्कुलीनमनुष्यत्वभव्यत्वादिविशिष्टपुरुषत्वस्यैव त्वन्मतेऽभ्युपगमात्, एवमस्माकमपि पर्याप्तसंज्ञिजातिनपुंसकातिरिक्तानन्धप्रथमसंहननचतुर्थारकोत्पन्नत्वादिविशिष्टमनुष्यत्वस्य सर्वार्थसिद्धिगमने मोक्षे च गमकत्वमिति तुल्यत्वात्, किंच- सर्वार्थसिद्धिगमनं न जातं तथापि न मोक्षायोग्यता स्त्रीणां सिध्यति, तथाविध-

योग्यताया एव नियामकत्वात्, त्वन्मये योनिमन्मनुष्यपक्षे तीर्थसत्त्वयोग्यत्ववत्, अस्ति चैतादृशो योग्यताविशेषः कश्चिद् गमनागमनयोः परं न मोक्षयोग्यताप्रतिबन्धकः, त्वन्नयेऽपि तथात्वात्, यदुक्तं सिद्धिगतिविचारे,- नरकेभ्यश्चतुर्थपृथिवीं यावदुद्वृत्ता जघन्यतः एको द्वौ वा उत्कर्षतो दश चैकसमये सिध्यन्ति, एवं भवनपतिदेवेभ्योऽप्यागता दश, तद्देवीभ्यस्त्वागता जघन्यत एक उत्कर्षतः पंच, मनुष्येभ्य आगता जघन्यत एक उत्कर्षेण दश, मनुष्यस्त्रीभ्य आगता जघन्यत एक उत्कर्षतो विंशतिः सिध्यन्ति, ज्योतिर्देवेभ्य आगता दश, तद्देवीभ्य उत्कर्षतो विंशतिः सिध्यति," एतेनाग्रेतनानुमानान्यपि अवमन्तव्यानि, वस्त्रादिसद्भावतया, परिग्रहाशयपूर्वकत्वात्तेषां, न चोपकरणानां परिग्रहत्वं, प्रागेव सविस्तरं निरस्तत्वात्, स्थविरकल्पजिनकल्पसंयमयोः शिष्योपदेशगणस्थिरतातदितरस्वरूपयोरेकमोक्षकार्यारम्भकत्वेन व्यभिचारग्रस्तत्वादित्यावेदितं, न च तयोः किंचिद्भेदत्वमार्यायिकासंयमयोः सर्वदेशसंयमत्वादत्यन्तभिन्नत्वमिति वाच्यं, स्याद्वादिनामत्यन्तभिन्नत्वानंगीकारात्, किंच-स्त्रीणां महाव्रतमपि प्रमाणपथेन प्राक् साधितमेवेति किं पुनर्वचनविलासेनेति, यत्तु भावत्रिभंग्याम्रुक्तम् "मणुवेसियरगईतिगहीणा भावा हवंति तत्थेव। णिव्वत्तिय पज्जत्ते मणपज्जयएसुवसम ( पंक्तिरत्र त्रुटिता ) दुगदु गचउचउरिगवीसं णव छिदी कमसो ॥२॥ लद्धियपुण्णमणुस्से-वामगुणट्ठाणभाव मज्झम्मि। थीपुंसिदरगईतियसुहतियलेस्साण वेभंगो ॥ ३ ॥ मणुसिव्व दव्वभावत्थीं सुहि पुंसंढखाइया भावा। उवसमसरागचरियं मणपज्जवनाणमवि णत्थि ॥ ४ ॥ अत्र मनुष्यपर्याप्तयन्त्रकस्थापना—

| मनुष्यपर्याप्तरचना | | | | | | | | | | | | | | | भावत्रिभंगी. निर्वृत्तिअपर्याप्तर० | | | | | मनुष्यस्त्रीर० | | | | मनुष्यस्त्री अपर्याप्त | | | अपर्याप्त लब्ध्या तस्यैकं गुणस्थानं |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मि. | सा | मी | अ | दे | प्र | अ | अ | अ | आहि | सू | उ | क्षी | स | अ | मि | सा | अ | प्र | स | मि | सा | मी | अ | दे | मि | सा | मि |
| २ | ३ | ० | ४ | १ | ० | ३ | ० | ३ | ३ | २ | २० | १३ | १ | ८ | २ | ४ | ४ | २१ | ४ | २ | ३ | ० | ४ | १ | २ | २ | ० |
| २१ | २९ | ३० | ३३ | ३० | ३१ | ३१ | २८ | २८ | २५ | २२ | २१ | २० | १४ | १३ | ३० | २८ | ३० | २७ | १४ | २९ | २७ | २८ | ३० | २७ | २८ | २६ | २५ |
| १९ | २१ | २० | १७ | २० | १९ | १९ | २२ | २२ | २५ | २८ | २९ | ३० | ३६ | ३७ | १५ | १७ | १५ | १८ | ३१ | ७ | ९ | ८ | ६ | ९ | ० | २ | ० |

ततो द्रव्यभावस्त्रीयन्त्रस्थापना पंचमगुणस्थानकं यावत्, तेन द्रव्यभावस्त्रियाः चारित्रं सर्वतो न स्यादिति तन्न युक्तिक्षमम्, तथाहि–तस्याः षट्त्रिंशद्भावस्थापनया चतुर्दशभावनिषेधे पुंपण्ढवेदयोर्निषेधः, स द्रव्येण भावेन वा?, आद्ये 'मणुसिन्वे' त्यत्र मानुषीवेत्युपमाबलात् उदयत्रिभंग्यां- 'मणुसिणि इत्थीसहिया तित्थयराहार पुरिससंढूणा' इत्यत्रापि पुंषण्ढयोर्निषेधः प्रतीयते, स च तव मतेऽनिष्टो, द्रव्यपुरुषस्यैव 'मणुसिणी' शब्देन व्याख्यानात्, अत एव 'मणुसिणिपमत्तविरए आहारदुगं तु णत्थि णियमेणे'-ति गोमट्टसारसूत्रगाथायामपि द्रव्यपुरुषभावस्त्रीपर एव 'मणुसिणि' शब्दो व्याख्यातः, एतेनाहारकद्विकमनःपर्यायपरिहारविशुद्धि-चारित्राद्यभावयोग्यतावतो जीवस्य द्रव्यपुंपण्ढवेदनिषेधो बलादापततीत्योपादनात् 'इत्थीसहिय' त्ति पदेनापि द्रव्यस्त्रीव्याख्यया-

ऽस्मन्मताभीष्टसिद्धिरित्यावेदितम् , अपि च- 'उपसम खाइयसम्मं तियपरिणामा खओवसमिएसुं । मणपज्जवए संजमसरागचरियं ण सेस हवे ॥ १ ॥ उदईए थीसंढं अण्ण गई तिद य असुहतियलेस्सा । अवि णय सेसा हुंति हु भोगजपुण्णेसु मणुएसु ॥ २ ॥' इत्यत्र तथा- 'एवं भोगत्थीणं खाइयसम्मं च पुरिसवेदं च । ण हि थीवेदं विज्जई सेसं जाणाहि पुव्वंव ॥ ३ ॥' अत्रापि द्रव्यवेदमाश्रित्यैव विधिनिषेधौ दृश्येते, तर्हि तत्साहचर्यात् 'मणुसिव्व दव्वभावित्थी' त्यादिगाथायामपि द्रव्यपुंषण्ढयोरेव निषेधो नियम्यते स च प्रागुक्तरीत्या भवतोऽनिष्ट एवेति, अत्रापि सुखाववोधाय यन्त्रकस्थापना यथा—

| भोगभूस्त्रीऽपर्याप्त | | भोग भू मनुष्य पर्याप्त | | | | भोगभूनर अपर्याप्त | | | भोगभूस्त्री पर्याप्त | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मि | सा | मि | सा | मी | अ | मि | सा | अ | मि | सा | मी | अ |
| २ | २ | २ | ३ | ० | १ | २ | ४ | २ | २ | ३ | ० | १ |
| २५ | २३ | २६ | २४ | २५ | २८ | २५ | २३ | २५ | २६ | २४ | २५ | २७ |
| ० | २ | ७ | ९ | ८ | ५ | ६ | ८ | ६ | ६ | ८ | ७ | ५ |

एवं चात्र भावतः पुंषण्ढवेदयोर्निषेधो भविष्यतीत्याशंकापि निरस्ता, भोगभूमिजेषु द्रव्यभावयोः समरूपत्वात् , अथास्तु भवतः पुंषण्ढनिषेधस्तर्हि आजन्मजीवितं तन्निषेधः कियत्कालस्थायी वा ?, नाद्यः, उभयनयेऽपि भाववेदानां परिवर्त्तनादित्येवं प्रागुदितत्वाद्, दृश्यन्तेऽपि काश्चन द्रव्यस्त्रियः शीलाचरणात्परं मुक्तभावत्रिवेदाः, श्रूयन्ते चागमे त्रिकरणशुद्ध्याऽऽर्यिकादयः, तद्वत्काश्चन

द्रव्यस्त्रीत्वेऽपि प्रांजलपरिणामा भावपुंवेदोदयात् पुरुषचर्यया क्रीडन्त्यः काश्चन उभयथा परिभोगाभिलाषतत्तत्कर्म्मकौशल्यसारा इति, द्रव्यतः पुरुषाणामपि बाल्ये चापल्यमन्यद्वेदोदयेन तारुण्ये त्वन्यथा इति प्रत्यक्षानुभवोऽपि दुरपन्हवः, किंच-पुंवेदः स्त्र्यभिलापरूप एवेति न नियमः, स्त्रीवत् पुरुषस्याप्यासेवने पुंवेदात्, एवं स्त्रीवेदेऽपि न पुरुषाभिलाषनियमः, पुरुषक्रीडया परस्त्रिया स्वोपभोगे क्रियमाणे रिरंसायां स्त्रीवेदात्, तथा च पुरुषस्य स्त्रीवेद एव न सम्भवति, न हि काचित् स्त्री स्त्रीवत् पुरुषं भुंक्ते, विपरीतरतादावपि पुरुषस्य पुंवेदस्यैवोदयात्, न च पुरुषाभिलापो माऽस्तु, तथापि छादयतीत्यादिगाथोक्तलक्षणेनापि स्त्रीवेदकत्वं सम्भाव्यमेवेति वाच्यं, तत्रापि स्वयमात्मानं दोषेऽज्ञानादिके छादयति-प्रावृणोति परमपि पुरुषं दोषेण हिंसाऽसत्यादिना पातकेन छादयति-आवृणोति छादनशीला द्रव्यभावाभ्यां सा स्त्रीति वर्णिता इति द्रव्यस्त्रीव्याख्यानात्, तेन भाववेदानां परावर्त्तान्नाजन्म पुंवेदो निषेध्धव्यः, तत एव त्वद्मयेऽपि भाववेदं प्रतीत्य नवधा सिद्धिः, एवं च द्रव्यतः पुरुषत्वे सत्यपि केषांचिन्नारदादीनामिव बालब्रह्मचारित्वं केषांचिद् भाववेदवैचित्र्यं प्रत्यक्षमेवेति कथमाजन्म भाववेद एको विधीयतेऽन्यस्तु निषेध्यत इति युक्तं स्यात्, न चात्र बाल्यादौ शक्तिरस्त्येव, कारणान्तराभावान्न व्यक्तिरितिवाच्यम्, उदयस्यैवात्राधिकारान्न बन्धरूपा शक्तिर्विमर्शनीया. अनादि-प्रवाहरूपस्य बन्धस्य यावत् क्षयं सर्वेषां सत्त्वात्, एतेन गोमट्टसारवृत्तौ वेदमार्गणानुवादे स्त्रीवेदिनां गुणस्थानानि नव जीव-समासाश्चत्वारः संज्ञ्यसंज्ञिपर्याप्तापर्याप्ताः पर्याप्तयः, ६।६।५।५ प्राणाः १०।७।९।८ संज्ञा ४ गतयः ३ मनुष्यतिर्यग्देवरूपाः इन्द्रियाणि एकं पंचेन्द्रियत्वं कायस्त्रसरूपः १ योगास्त्रयोदश १३ आहारद्वयं न हि, वेद एकः स्त्री १ कषायाश्चत्वारः, ज्ञानानि षट्, कुमतिः १ कुश्रुतं २ विभंगो ३ मतिः ४ श्रुतं ५ अवधिज्ञानं ६ संयम ४ अविरत १ देश २ सामायिक ३ छेदा ४ दर्शनानि त्रीणि चक्षुर्दर्शनं

१ अचक्षुदर्शनं २ अवधिदर्शनं ३ लेश्याः षट् द्रव्यतो भावतो, भव्याभव्यद्वयं सम्यक्त्वानि षट् मिथ्यात्व १ सास्वादनं २ मिश्रं ३ औपशमिकं४ वेदकं५ क्षायिकं ६ संज्ञ्यसंज्ञिद्वयं २ उपयोगा नव इत्याद्यालापकेऽपि द्रव्यवेद एव ग्राह्यः, भावतोऽसंज्ञिनां क्लीबत्वादित्युभयनयसम्मतत्वात्, तेन 'द्रव्येन नरवेदेऽस्मिन्, भावेन द्वितये परे। गुणानां नवकं प्रोक्त' मित्यादि प्रत्यादिष्टं, यथासम्भवव्याख्याने तु द्रव्यस्त्रियां महाव्रताद्यारोपसद्भावान्न किंचिद् बाधकमुत्पश्याम इति पुंपण्ढवेदयोर्निषेधस्य कियत्कालस्थायित्वे द्रव्यस्त्रीणां भिन्नयन्त्रकन्यासवैयर्थ्यापत्तेः, न द्वितीयोऽपि, द्रव्यपुंसामपि तत्समये ताद्रूप्यादिति, एवं च 'द्रव्यस्त्रीवेदवत्याः प्रथमोपशमवेदकक्षायिकसम्यक्त्वत्रयं सम्भवती'ति गोमट्टसारवृत्तिवचनात् क्षायिका भावा न भवन्तीत्यपि अनुपपन्नमेव, 'मणुसिव्वे' त्युपमायां क्षायिकभावसामस्त्यात्, किंच-भावत्रिभंग्याः सूत्रे द्रव्यस्त्रीत्वस्यैव पंचगुणस्थाननियमात् भावपदोपादानं व्यर्थं, भावस्त्रीवेदपरिवर्त्तनेनोपलक्षणाघटनात्, तथा च भावस्त्रीत्वं भाववेदवद्भावतीर्थंकरवत्तत्पर्यायस्फुटानुभवेनैव तत्र द्रव्यस्त्रीत्वानुपपत्तेः, यदि च बद्धदेवायुष्कनरस्य द्रव्यत्ववत् भविष्यत्तीर्थंकरस्य द्रव्यतीर्थंकरत्ववद्वा द्रव्यत्त्वं स्वीक्रियते चेत्तदस्तु, बद्धायुष्कायास्तस्यास्तद्गुणस्थानत्वमेव काऽस्माकं हानिः[1], परं भावमनुष्याश्चतुर्दशगुणस्थानाम्रिकथने सिद्धा विप्रतिपन्नस्त्रिया मुक्तिरिति, द्रव्यतः स्त्रीलिंगाया एव भावस्त्रीत्वात्[2]। यदपि वस्त्रत्यागोपदेशनं मोक्षार्थिनां तदपि न, 'नो कप्पइ निग्गंथीए अचेले होत्तए' त्ति जिनोपदेशात्, स्थविर-

१ असंज्ञिनां द्रव्यस्त्रीत्वं संज्ञिनां भावस्त्रीत्वे नव गुणस्थानानि ।

२ किंच श्रेणिसमये योनिस्त्रीवेदं वेदयन् यः क्षपकः स्यात् स नरो भावस्त्री इत्ययमपि नवविकल्पो न श्रेयान्, त्वन्नये बाह्यध्यानमुद्रयैव श्रेणिनियमात् योनिस्त्रीवेदवेदनाया असम्भव एव, न हि अस्मन्नयवत् गच्छतो भुंजानस्य वा श्रेणिध्यानं त्वयेष्यते ।

कल्पिकानामिव स्त्रीणां तद्धरणेऽपि मोक्षाप्रतिबन्धात्, साभरणसिद्धवत्, न च साभरणसिद्धत्वं नास्मत्सम्मतमिति वाच्यं, क्रियाकलापे तदुक्तेः--'तित्थयरेयरसिद्धे जलथलआयासनिव्वुए सिद्धे। अंतयडेयरसिद्धे उक्कोसजहण्णमज्झिमोगाहे ॥ १ ॥ उड्ढमहेतिरियलोए छव्विहकाले य निव्वुए सिद्धे। उवसग्गनिरुवसग्गे दीवोदहिनिव्वुदे य वंदामि ॥ २ ॥ पच्छायडे य सिद्धे दुगतिगचउनाणपंचचउरयमे। परिवडियापरिवडिए संजमसम्मत्तनाणमाईहिं ॥ ३ ॥ साहरणासाहरणे समुग्घादेयरिय निव्वुए वंदे। ठिइपालियंकानिसण्णे विगयमले परमनाणए वंदे ॥ ४ ॥ पुंवेदं वेदंता जे पुरिसा खवगसेणिमारूढा। सेसोदएणवि तथा झाणुवजुत्ता य तेहु सिज्झंति ॥ ५ ॥ पत्तेयसयंबुद्धा य बोहियबुद्धा य होंति ते सिद्धा। पत्तेयं २ समयं २ च पणिवयामि ॥ ६ ॥ तीर्थंकरसिद्धा १ अतीर्थंकरासिद्धा २ जल ३ स्थल ४ आकाशसिद्धा ५ अन्तकृत्सिद्धाः ६ तदितर ७ उत्कृष्ट ८ मध्यम ९ जघन्या १० वगाहनासिद्धाः ऊर्ध्वलोका ११ धोलोक १२ तिर्यग्लोकसिद्धाः १३ षड्विधः सुषमादिकालस्तत्सिद्धा १४ उपसर्गसिद्धा १५ निरुपसर्गसिद्धा १६ द्वीपनिर्वृत्ताः १७ उदधिनिर्वृता १८ द्वित्रिचतुर्ज्ञानानि पश्चात्कृत्य सिद्धाः १९ कोऽर्थः?-केचिद् द्वयोर्मतिश्रुतज्ञानयोः पूर्वं स्थित्वा एवं त्रिषु चतुर्षु वा ज्ञानेषु स्थित्वा सिद्धा इत्यर्थः, तथा पंचसंयमसिद्धाश्चतुःसंयमसिद्धाः, परिहारविशुद्धिसंयमस्य केषांचिदभावात्, संयमसम्यक्त्वज्ञानपरिपतिता २० स्तदितरसिद्धाश्च २१ आदिशब्दाद् ध्यानलेश्यादिपरिग्रह इति, उपसर्गेतरवशात् साभरणसिद्धा २२ स्तदितरसिद्धाः २३ साहृतासाहृतसिद्धा वा २६ भवन्ति, समुद्घातसिद्धा २७ स्तदन्ये २८ च स्थितसिद्धा २९ पर्यंकसिद्धा ३० द्रव्यतः पुंवेदा भावतः स्त्रीवेदा[1] क्षपकश्रेण्यारूढाः शुक्लध्यानोपयुक्ताः सिध्यन्ती' ति तद्वृत्तिः, एतेन

१ अपि च शुक्लध्यानेन श्रेणिप्रतिपत्त्या भावतः पुवेदोऽपि न युक्तःतर्हि कुतस्त्रीवेदत्व इत्यपि भाव्यं।

ये केचित् क्षपकश्रेणेः प्राक् एव स्त्रीवेदवेदकाः स्वभावतः पुरुषास्तेषां 'वीस नपुंसगवेया' इत्यादिगाथायां गणनेत्युक्तवन्तस्ते क्षिप्ताः। एवं विशिष्टपदानर्हत्वमपि न मोक्षबाधकं, 'न विप्राः पृथिवीयोग्या, भिक्षायोग्याः पुनः पुनः' इति वचनाद् ब्राह्मणानामिव तदविरोधात्, अस्ति स्त्रीणां निर्वाणपदप्राप्तियोग्यता सर्वोत्कृष्टदेशविरतिवन्द्यपदयोग्यत्वात्, सम्प्रतिपन्नवदिति प्रतिपक्षः, क्वचित् स्त्रीराज्यप्रसिद्धेर्देशासिद्धिरपि, रत्नत्रयापूर्णत्वं तु प्रतिवाद्यसिद्धमेव, अस्मन्नये तदंगीकारात् काष्ठासंघेऽपि चारित्रप्रतीतेश्च, मूलसंघनयेऽपि यदि स्त्रीणां चारित्रं न स्यात् तदा कथं द्रव्यसंग्रहवृत्तौ प्रोक्तमेतत् 'सीता महादेवी विभूतिपदं त्यक्त्वा सकलभूषणानगारकेवलिपादमूले कृतान्तवक्त्रादिराजभिस्तथा बहुराज्ञीभिश्च सह जिनदीक्षां गृहीतवती'ति, न चात्र जिनदीक्षाशब्देनाणुव्रतदीक्षा वाच्या, राज्ञां सहैकवाक्यतया तद्विवेकासिद्धेः, श्रावकव्रतदीक्षापि तादृशां प्रागेव सम्भाव्यते, ततः काऽसौ तृतीया दीक्षा, आर्यिकाव्रतरूपा चेत् साध्वीव्रतस्य ततोऽविवेकाज्जातैव महाव्रतदशा यौक्तिकी, वस्तुतो व्रतस्य द्वैविध्यप्रतिपादनात्, यदुक्तं महापुराणे- 'व्रताविष्करणं दीक्षा, द्विधाऽऽम्नातं च तद् व्रतं । महच्चाणु च दोषाणां, कृत्स्नदेशनिवृत्तितः ॥ १ ॥' नचैवम्-इक्कं जिणस्स रूवं बीयं उक्किट्ठसावयाणं तु । अवरट्ठिया य तइयं चउत्थं पुण लिंगदंसणं नत्थि ॥ १ ॥ एकमद्वितीयं जिनस्य रूपं-नग्नत्वं यतिलिंगं द्वितीयं उत्कृष्टश्रावकाणां- ब्रह्मचारिणां, जघन्यं तृतीयं आर्यिकाणां, चशब्दात्क्षुल्लि-

---

२ संयतालोचनं द्विधा इष्टं, गुरुशिष्ययोगे एकान्ते, तथा संयतिकालोचनं प्रकाशे त्रयाश्रयमिष्टं, गुरोरार्यिका द्रव्ययोगे इति भावनासंग्रहे साध्वीकथनात्

कानां, चतुर्थं पुनर्लिंगदर्शनं नास्तीत्यर्थः, इति दर्शनप्राभृतसूत्रे प्रोक्तं तृतीयं लिंगमपलप्यते इति चेत्, न, तृतीयलिंगस्य प्रथमान्तर्भावात् चतुर्थस्य द्वितीयेऽन्तर्भावात्, न च चतुर्थं नास्त्येवेत्येकान्तः श्रेयान्, प्रोक्तं भावप्राभृतसूत्रे- 'सेवहि चउविहलिंगं अब्भिंतरलिंगसुद्धिमावण्णो। बाहिरलिंगमकज्जं होइ फुडं भावरहियाणं ॥ ९२ ॥ महाव्रतं देशव्रतं आर्याव्रतं गृहस्थव्रतं चेति चतुर्विधं'मिति तद्वृत्तिः, अत एव समयसारवृत्त्याद्युक्त्या लिंगद्वैविध्यमेव समार्थितं प्राक्। स्त्रीदेहस्य महत्पापमिथ्यात्वसहायजनितत्वान्न मुक्तिसाधनयोग्यतेत्यत्रापि हुण्डसंस्थानिभिर्व्यभिचारः, तच्छरीरस्य तथात्वेऽपि केवलप्राप्तियोग्यत्वात्, इतरथा सयोगिनि षड्संस्थानोदयो दुर्घटः स्यात् इति प्रागेवोक्तम्, एवमसिद्धिरपि, यावन्मात्रनिर्माणकर्म्मणः पुण्येनैव जन्यत्वात्, स्त्रीवेदस्य तु भावरूपस्य पापजन्यत्वं तथा पुंवेदस्यापीति यत्किंचिदेतत्, स्त्रीणां द्रव्यतोऽप्यसामर्थ्यं सर्वपुरुषापेक्षया यत्किंचित्पुरुषापेक्षया वा ?, आद्ये स्त्रीरत्नादीनां शेषपुरुषेभ्यो बलवत्त्वस्यागमसिद्धत्वाद्, द्वितीयेऽपि पुरुषाणां यत्किंचित्पुरुषेभ्योऽप्यसामर्थ्यान्न मोक्षाभावसाधकं, यदप्युच्यतेऽसामर्थ्यं तत् किं संहननाभावात् धैर्याभावात् धर्म्मदार्ढ्याभावाद्वा जिनादिलब्धिधनायोग्यत्वाद्वा ?, नाद्यः, स्त्रीणां प्रथमसंहननसद्भावात्, 'संघयणं पुण पढम' मिति आवश्यकनिर्युक्तिप्रवचनात् प्रतिवाद्यसिद्धेः। न द्वितीयो, वह्निप्रवेशादौ धैर्यस्य प्रत्यक्षलक्ष्यत्वात्, स्थामरूपबलस्य तु नात्र प्रयोजनं, पंगुवामनात्यन्तरोगिणां तद्भावेऽपि मोक्षयोग्यताया अविरोधात्, न चैषामपि माऽस्तु मोक्षयोग्यतेत्यपि चिन्त्यं, नियामकाभावात्, हीनांगोपांगत्वं तु नात्र नियामकं, कुब्जवामनादिसंस्थानवतां मोक्षोपपत्तेः, विवादापन्नाः पुरुषास्तद्भवे मुक्तियोग्याः सत्कुलत्वात् सम्प्रतिपन्नवदिति प्रयोगाच्च, एतेन बोधप्राभृतटीकायां- 'यत्कुरूपिणो हीनाधिकांगस्य कुष्ठादिरोगिणः प्रव्रज्या न भवति' इति तन्निरस्तं। न तृतीयः, 'समणीमवगयवेय' मित्यादि

प्रवचनसारोद्धारवचनात् स्त्रीणामसंहतुं योग्यत्वेन विशिष्टशीलदानतपःसु दार्ढ्यस्य दृश्यमानत्वात्, प्रत्युत पुरुषेषु तथाविधतदभावान्मोक्षाभावप्रसंगाच्च। नापि तुर्यः, आहारकशरीरजिनादिलब्धिधनायोग्यत्वेऽपि दिगम्बरनये द्रव्यपुरुषभावस्त्रीरूपे जीवे मोक्षयोग्यत्वात्, एवं संग्रामादिकरणासामर्थ्येऽपि वाच्यं, वादादिलब्धिराहित्यं पुरुषाणां स्मारणाद्यकर्तृत्वं अल्पश्रुतत्वं मापतुषादिभिर्व्यभिचारग्रस्तं, अमहर्द्धिकत्वं चासिद्धं, नृपमातृपुत्र्यादीनां महर्द्धिकत्वप्रसिद्धेः, न चैतत्परायत्तमिति न महर्द्धिकत्वमिति वाच्यं, सामान्यनृपैर्व्यभिचरितत्वात्, मायादिप्रकर्षवत्त्वं चरमशरीरिनारदादिभिर्व्यभिचारि, अनुपस्थाप्यतापारांचितकशून्यत्वमपि न किंचित्, विशुद्ध्युपदेशस्य शास्त्रे योग्यतापेक्षत्वात्, यदुक्तं धर्म्मशास्त्रे- 'संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे। रोगचिकित्साविधिरिव कस्यापि कथंचिदुपकारी ॥ १ ॥' यत्तु नव्यैर्विकल्पितं संसारस्वरूपत्वं कुत्रापि स्त्रीकर्णयोरिव पुरुषकर्णयोरपि तदा कुण्डलपरिधानाद्रन्ध्रोपपत्तेः समः समाधिः, न च पुरुषाणां तथात्वं कुत इति ध्येयं, यदुक्तं महापुराणे श्रीजिनसेनेननाम्ना विद्युत्प्रभे यस्य, रुचिरे मणिकुण्डले। जित्वा ये वैद्युतीं दीप्तिं, रुरुचाते स्फुरत्त्विषी ॥१॥' इति भरतवर्णने, स्तनाकारस्तु कुब्जशरीरिणो मांसलशरीरिणो मोक्षवन्न दोषाय, आत्मप्रदेशानां तथाऽनवस्थानात्, एवमवाच्याकारोऽपि न तत्र, पुरुषस्यापि तदाकारप्रसक्तेः, न च सोऽप्यस्त्वितिवाच्यं, 'जीवमणिद्दिट्ठसंठाण' मिति प्रवचनसारवचनात्, न च पुरुषाकारः सिद्ध इत्यभिधानात्तत्सिद्धिः, तत्र तिर्यगाद्याकारनिषेधात्, अत एवोक्तं द्रव्यसंग्रहवृत्तौ- छायाप्रतिमावत् पुरुषाकारो, न च छायायामवाच्याकारोऽस्ति, याऽपि लोकजुगुप्सा साऽपि दुःस्वरदुर्विहायोगतिहुण्डकुब्जसंस्थानितावन्न दोषाय, तीर्थंकराणां सुभगत्वातिशयात् परेषां केवलिनां श्यामादिद्रव्यलेश्यावन्न कैवल्यबाधकता, रुधिरश्रावस्तु वेदोद्रेकजन्योऽसम्भाव्य एव, तदभावाद्, अन्यथा पुरुषस्यापि

वीर्यश्रावो दुर्वारः स्यात्, परमौदारिकचर्च्चेस्त्वनन्तरमेव वक्ष्यते, केवली सिद्ध इत्यादिव्यपदेशास्तु जीवापेक्षयैवान्यथा स्त्रियाः संज्ञिनीतिव्यपदेशोऽपि स्यात्, नृपमातृप्रभृतैर्भृत्यैः पुंस्त्वेनापि व्यपदेश्यमानत्वाद् यत्किंचिदेतत्, अनुभवस्तु केवलोऽनुकूलतर्कं विनाऽप्रमाणमेव, यदाह न्यायकुसुमांजलिकारः- "आर्षं धर्म्मोपदेशं च, वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते, स धर्म्मं वेद नेतर ॥ १ ॥' इति, ब्रह्मचर्यरक्षा तु कामं कामिनां कामचेष्टादिदर्शनवत् पुरुषैस्तुल्यैव स्त्रिया इति सर्वं सुस्थं, तथा च प्रयोगाः- विवादापन्नाः स्त्रियः तद्भवे मुक्तियोग्याः, विशिष्टाणुव्रतितपश्चरणयोग्यत्वाद्, यदेवं तदेवं, यथा पुरुषः सम्प्रतिपन्नो, यन्नैवं तन्नैवं, यथा देवादि, वस्त्राद्युपकरणं साधूनां न परिग्रहः, संयमोपग्राहित्वात्, कमण्डलुपिच्छिकादिवत् शरीराहारादिवत् ॥

पक्षं द्विजिह्वाभरणस्य मन्दप्रभेन्दुदुष्टस्य दिगम्बरस्य । जित्वा स्त्रिया निर्वृतिहेतुवेदी, देदीप्यते श्रीजिनधर्म्मभूपः ॥ १ ॥ सप्तम्यां भुवि नो गतिः परिणतिः प्रायो न शस्त्राहवे, नो विष्णुप्रतिविष्णुपातककथा यस्या न देशव्यथा । शीलात् पुण्यतनोर्जनो- र्मृदुतनोः तस्याप्रशस्याशयः, कः सिद्धिं प्रतिपद्यते न निपुणस्तत् कर्म्मणां लाघवात् ॥ २ ॥ अर्हज्जन्ममहे महेन्द्रमहिता लोकंपृ- णैर्या गुणैस्तारुण्येऽपि मनाग् न जिह्मगमनाः कारुण्यपुण्याश्रयः । यस्या अस्य मतिप्रसन्नमतुलां राज्ञः श्रियं नन्दयत्यानन्दाय महो- दयाय न कथं रामाऽभिरामा ह्यसौ ? ॥ २ ॥ यशोऽम्भोविस्तारे परिणमति शुक्लाम्बरमतिर्नृणां येषां तेषामियममृतरम्या वचनिका । घनोल्लासा नूनं भवतु यदिवाऽऽशाम्बरधियां, पिधानात् श्रद्धानं दिशतु सुदृशां निर्वृतिकरम् ॥ ३ ॥

इति श्रीयुक्तिप्रबोधनाटकस्वोपज्ञव्याख्यायां महो० श्रीमेघविजयगणिकृतायां स्त्रीमुक्तियुक्तिसन्दर्भः ॥

अथ 'कवलाहारश्च न केवलधरस्ये' त्युपन्यस्यते, तत्र तावत्परेषामयमाशयः-केवली भगवान् सर्वज्ञो निःस्पृहो निर्मोहः स पुञ्जीभूतभक्तस्य कवलान् करोति कृत्वा आदत्ते आदाय वक्त्रं प्रसारयति प्रसार्य निक्षिपती' ति क्रियासमुदायस्त्वसम्भाव्य एव, ममत्वस्य स्पष्टमेव निष्टङ्क्यमानत्वात्, अस्मदादिवदिति न तत्र विवादः सादरो, यतोऽसौ शरीरपुष्ट्यर्थं वा शरीरस्थित्यर्थं वा ज्ञानसंयमध्यानादिगुणसिद्ध्यर्थं वा असद्वेद्योदयजन्यक्षुत्प्रतिघातार्थं वा कवलानाहरेत् ?, नाद्यः, शरीरे ममत्वाभावात्। न द्वितीयः तस्मिन्ननन्तबलवति कवलाहारबलेन शरीरस्थितावनन्तबलस्याकिञ्चित्करत्वप्रसङ्गात्, अनन्तबलत्वं मेरुकम्पादिना तव नयेऽपि। न तृतीयो भगवतो ज्ञानादिगुणानां सिद्धत्वेन कृतकृत्यत्वात्। न तुर्यः भास्वत्प्रभाप्रसरे प्रदीपप्रभावत् पयःसमुद्रे विषकणिकावत् शर्कराराशौ निम्बकणिकावत् अनन्तसद्वेद्योदयेऽसद्वेद्योदयस्याकिंचित्करत्वात्, एतच्च तत्त्वतो विपरीताविपरीतैः सितपटैरपि प्रतिपन्नमेव, कथमन्यथा श्रीवीरस्य केवलोत्पत्त्यनन्तरं पण्मासावधिजातस्य रक्तातीसारस्य आश्चर्यत्वेन स्वीकारः, तदागमेऽपि श्रीआवश्यकानिर्युक्तौ "अस्सायमाइयाओ जावि य असुहा हवंति पयडीओ। निंबरसलवुव्व पए न हुंति ता असुभयां तस्स ॥१॥" इतिवचनात्, अयमेवाशयस्तत्त्वार्थवृत्तौ तन्मतकृतायां, अत एवाहुर्जिनसेनाः "न भुक्तिः क्षीणमोहस्य, तवानन्तसुखोदयात्। क्षुत्क्लेशबाधितो जन्तुः, कवलाहारभुग् भवेत् ॥१॥ असद्वेद्योदयाद् भुक्तिं, त्वयि यो योजयेदधीः। मोहानिलप्रतीकारे, तस्यान्वेष्यं जरद्घृतम् ॥ २ ॥ असद्वेद्यविषं घातिविध्वंसध्वस्तशक्तिकम्। त्वय्यकिंचित्करं मन्त्रशक्त्येवापबलं विषम् ॥ ३ ॥ असद्वेद्योदयो घातिसहकारिव्यपायतः। त्वय्यकिंचित्करो नाथ!, सामग्र्या हि फलोदयः ॥४॥" इति महापुराणे, एवमेव गुणस्थानक्रमारोहेऽपि "एवं च क्षीणमोहान्ता, त्रिपष्टिप्रकृतिस्थितिः। पंचाशीतिर्जरद्वस्त्रप्रायाः शेषाः सयोगिनि ॥ १ ॥" एतद्व्याख्या यथा-पंचा-

शीतिः प्रकृतयो जरद्वस्त्रप्रायाः अत्यर्थं जीर्णचीवरकल्पा इति, अपि च यथा सैन्यनायके पतिते सति जीवत्यपि शत्रुवृन्दे तत् मृतवत्प्रतिभासते, विकृतिकारकत्वाभावात्, तथा सर्वेषां कर्म्मणां मुख्यभूते मोहनीयकर्म्मणि नष्टे सति वेदनीयायुर्नामगोत्रकर्म्मचतुष्टये सत्यपि भगवतो विविधफलोदयाभावात् अघातीन्यपि कर्म्माणि नष्टान्येव, तथा चाचाराङ्गवृत्तिः,-"णाहगब्भि य पस्संते (हए संते) जहा सेणा विणस्सई । एवं कम्मा विणस्संति, मोहणिज्जे खयं गए ॥ १ ॥ (पत्र० १६०) अत एव निरुपमगुणमनन्तचतुष्टयलक्षणमारूढोऽर्हन् अष्टकर्म्मरहित उच्यते, मुक्त एवोपचर्यते, "मुत्ताणं मोयगाण" मिति शक्रस्तवपाठात्, अयमेवार्थः श्वेताम्बरपराजये श्रीजगन्नाथवादिभिरुक्तः, यथा शालिबीजं सहकारिसलिलादिकारणसहितं अंकुरादिकार्यं जनयति तथैवासद्वेद्यं मोहनीयकर्म्मसहकारिकारणसहितं क्षुल्लक्षणकार्यमर्जयति, न च मोहाभावे क्षुदुत्पादः, एकस्य कारणस्य कार्योत्पादनेऽसामर्थ्यात्, 'सामग्री जनिका नैकं कारण' मिति प्रसिद्धेश्च, यद्येकमेव कारणं कार्यं जनयेत् तर्ह्येक एव तन्तुः पटमुत्पादयेत्, न च तथा। किंच कवलाहारिणां शयनहदनमूत्रणक्षुद्बाधितत्वपिपासामोहचिन्तारत्यरतिकामप्रमुखैरवश्यमेव भाव्यं, तथा सति कृतमनन्तसुखेन क्षुदादिभिर्बाधात्, कृतमनन्तबलेन क्षुधा क्षीणशक्तिकत्वात्, तज्जनितपरीषहसहनाशक्तत्वाच्च, स्थितं चारादनन्तज्ञानेन, कवलाहारग्रहणे मतिज्ञानस्यैव भावात्, किंच- यदि मोह विनाऽपि क्षुदुत्पादमसद्वेद्योदयान्मनुषे प्रतिनियतकार्यत्वात् कर्मणां तर्हि तदस्तु परं मोहाभावात् कवलग्रहणधारणे तु न स्यातां, तयोस्तत्कार्यत्वादेव, अन्यथा मोहमन्तरा द्रव्यादिग्रहणप्रसंगात्, तथा च ग्रहणधारणाभ्यां विना न निक्षेपस्तमन्तरा कुतः क्षुधः प्रतिघात इति, एवं क्षुद्वानेव केवली सदा तिष्ठेदित्यनिष्टप्रसंगः, तस्मान्मोहसहकारिणोऽभावादसद्वेद्योदयोऽकिंचित्कर एवेति स्थितं । किंच- ये निय-

मयमव्रतशीलविहीनास्तेऽपि जीववधादिकं वीक्षमाणा न वल्भन्ते,तर्हि जिनो हिंस्यमानान् जन्मिनो मांसानि च पुरीषाद्यशुचिद्रव्याण्यध्यक्षीकुर्वन् विशुद्धव्रतभृत् कथं वल्भेत ?, निर्दयत्वप्रसंगात्, तेभ्योऽपि हीनबलवत्त्वप्रसंगाच्च, लोकेऽपि केचिज्जटिलादयो योगमाहात्म्यविशेषेणाकवलाहारवन्तः श्रूयन्ते, तर्हि कथं भगवतो योगीन्द्रशिरोमणेस्तत्त्वं स्यात् ?, प्रतीयते चापि भूताविष्टस्य पुंसः कस्याचित्तद्बलेनौदारिकशरीरिणोऽप्यकवलाहारित्वं क्वचित्, तर्हि अनन्तबलवतो भगवतस्तथात्वे किं चित्रं ?, आहारसंज्ञा हि रतिकर्म्मपूर्विका, तस्याश्च लोभेऽन्तर्भावः, तदुक्तं गोमट्टसारे– 'माया लोहे रइपुव्वाहारो कोहमाणगम्मि भयं। वेदे मेहुणसण्णा लोहम्मि परिग्गहे सण्णा ॥ १ ॥' तथा मायालोभयोरभावेनैव भगवति कवलाहाराभावः, ननु केवली कवलाहारवान्, असद्वेद्योदयवत्त्वे सति गर्भनिर्गतत्वात्, औदारिकशरीरित्वे सति तादृक्त्वाद्वा अस्मदादिवदिति चेत्, न, आद्ये यद्यसद्वेद्योदयात्कवलाहारः स्यात् तर्हि क्षुत्क्षीणशक्तेरनन्तबलं न स्यादिति प्रतिकूलस्तर्को विशेषणवैयर्थ्यं चानुकूलतर्काभावाद्, अकिंचित्करत्वं च, द्वितीये विशेषणासिद्धिः-शुद्धस्फटिकसंकाशं, तेजोमूर्त्तिमयं वपुः। जायते क्षीणमोहस्य, सप्त धातुविवर्जितम् ॥१॥ इति परमौदारिकदेहांगीकारात्, न चौदारिकत्यागाद्भवान्तरप्रसंगः, तारुण्याद्यवस्थावत् आम्रफलादौ नीलपीतादिरूपवच्च सर्वथाऽभेदात्, अथ सयोगिगुणस्थानपर्यन्तं जीवा आहारकमार्गणायामागमे प्रसिद्धाः तत्कथं केवलिनोऽनाहारकत्वमिति चेत्, न, नोकर्म्माहारेण तदुपपत्तेः, तदुक्तम्- 'णोकम्मकम्माहारो कवलाहारो य लेवमाहारो। उज्जुमणोवि य कमसो आहारो छव्विहो भणिओ ॥ १ ॥ णोकम्मं तित्थयरे कम्मं णरए य माणसो अमरे। कवलाहारो णरपसु उज्जो पक्खी य इगि लेवो ॥ २ ॥' इति, सूक्ष्माः सुरसाः सुगन्धा अन्यमनुजासम्भविनः कवलाहारं विनापि किंचिदूनपूर्वकोटिपर्यंतं शरीरस्थितिहेतवः सप्तधातुरहितपरमौदारिक-

शरीरनोकर्म्माहारयोग्यलाभान्तरायकर्म्मनिरवशेषक्षयात् प्रतिक्षणं पुद्गला आश्रवन्तीति नोकर्म्माहारेणैव केवलिनामाहारकत्वमिति नवकेवललब्धिव्याख्यानाधिकारे, यदि केवली कवलानादत्ते नासौ देवः, तथात्वे मानुषत्वात्, यदुक्तं समन्तभद्रेण भगवता- मानुषीं प्रकृतिमभ्यतीतवान्, देवतास्वपि च देवता यतः । तेन नाथ ! परमासि देवता, श्रेयसे जिनवृष ! प्रसीद नः ॥१॥" अत एवाष्टादशदोषराहित्यं स्यात्, तेषु मुख्यत्वात् क्षुधः, तथाहि- क्षुत्पिपासाजरागदजन्मभयस्मयातंकरागद्वेषमोहचिन्तारातिनिद्रावि-पादस्वेदखेदविस्मया दोषा न जिने इति, तत एव चतुस्त्रिंशदतिशयसिद्धिरपि, तथाहि- नित्यं निस्स्वेदत्वं निर्मलता मलमूत्ररहितता तत्पितुश्च तन्मातुश्च मलमूत्रं न भवति, उक्तं च षट्प्राभृतवृत्तौ- 'तित्थयरा तप्पियरा हलहर चक्की य अद्धचक्की य । देवा य भोगभूमा आहारो अत्थि नत्थि नीहारो ॥ १ ॥' एवं तीर्थंकराणां श्मश्रुकूर्चयोरभावः १ शिरसि कुन्तलसत्ता २ क्षीरगौररुधिरमांसत्वं ३ समचतुरस्रसंस्थानं ४ वज्रर्षभनाराचसंहननं ५ सुरूपता ६ सुगन्धता ७ सुलक्षणत्वं ८ अनन्तवीर्यं ९ प्रियहितवादित्वं १० चेति दशातिशया जन्मतोऽपि स्वामिनः शरीरस्य, गव्यूतिशतचतुष्टयसुभिक्षता ११ गगनगमनं १२ अप्राणिवधः १३ कवलाहाराभावः १४ उपसर्गाभावः १५ चतुर्मुखत्वं १६ सर्वविद्यानां परमेश्वरत्वं १७ अच्छायत्वं दर्पणे मुखप्रतिबिम्बं न भवति १८ चक्षुषि मेषोन्मेषो न भवति १९ नखानां केशानां च वृद्धिर्न भवति २० एते दशातिशया घातिकर्म्मक्षयजा भवन्ति, सर्वार्द्धमागधीया भाषा भवति, कोऽर्थः ?, अर्द्धं भगवद्भाषाया मगधदेशभाषात्मकं अर्द्धं च सर्वभाषात्मकं, कथमेवं देवोपनीतत्वं तदतिशयस्येति चेत्, मगधदेशसन्निधाने तथा परिणतभाषया प्रवर्त्तते १ सर्वजनताविषया मैत्री भवति, सर्वे हि जनसमूहा मागधप्रीतिकरदेवातिशयवशान्मागधभाषया भाषन्ते, अन्योऽन्यं मित्रतया वर्त्तते २ इति द्वावतिशयौ, सर्वर्त्तूनां तरवः फलादि प्राप्नु-

मयमव्रतशीलविहीनास्तेऽपि जीववधादिकं वीक्षमाणा न वल्भन्ते, तर्हि जिनो हिंस्यमानान् जन्मिनो मांसानि च पुरीषाद्यशुचिद्रव्याण्यध्यक्षीकुर्वन् विशुद्धव्रतभृत् कथं वल्भेत ?, निर्दयत्वप्रसंगात्, तेभ्योऽपि हीनबलवत्त्वप्रसंगाच्च, लोकेऽपि केचिज्जटिलादयो योगमाहात्म्यविशेषेणाकवलाहारवन्तः श्रूयन्ते, तर्हि कथं भगवतो योगीन्द्रशिरोमणेस्तत्त्वं स्यात् ?, प्रतीयते चापि भूताविष्टस्य पुंसः कस्यचित्तद्बलेनौदारिकशरीरिणोऽप्यकवलाहारित्वं क्वचित्, तर्हि अनन्तबलवतो भगवतस्तथात्वे किं चित्रं ?, आहारसंज्ञा हि रतिकर्म्मपूर्विका, तस्याश्च लोभेऽन्तर्भावः, तदुक्तं गोमट्टसारे- 'माया लोहे रइपुव्वाहारो कोहमाणगम्मि भयं । वेदे मेहुणसण्णा लोहम्मि परिग्गहे सण्णा ॥ १ ॥' तथा मायालोभयोरभावेनैव भगवति कवलाहाराभावः, ननु केवली कवलाहारवान्, असद्वेद्योदयवत्त्वे सति गर्भनिर्गतत्वात्, औदारिकशरीरित्वे सति तादृक्त्वाद्वा अस्मदादिवदिति चेत्, न, आद्ये यद्यसद्वेद्योदयात्कवलाहारः स्यात् तर्हि क्षुत्क्षीणशक्तेरनन्तबलं न स्यादिति प्रतिकूलस्तर्को विशेषणवैयर्थ्यं चानुकूलतर्काभावाद्, अकिंचित्करत्वं च, द्वितीये विशेषणासिद्धिः-शुद्धस्फटिकसंकाशं, तेजोमूर्त्तिमयं वपुः । जायते क्षीणमोहस्य, सप्त धातुविवर्जितम् ॥१॥ इति परमौदारिकदेहांगीकारात्, न चौदारिकत्यागाद्भवान्तरप्रसंगः, तारुण्याद्यवस्थावत् आम्रफलादौ नीलपीतादिरूपवच्च सर्वथाऽभेदात्, अथ सयोगिगुणस्थानपर्यन्तं जीवा आहारकमार्गणायामागमे प्रसिद्धाः तत्कथं केवलिनोऽनाहारकत्वमिति चेत्, न, नोकर्म्माहारेण तदुपपत्तेः, तदुक्तम्- 'णोकम्मकम्माहारो कवलाहारो य लेवमाहारो । उज्जुमणोवि य कमसो आहारो छव्विहो भणिओ ॥ १ ॥ णोकम्मं तित्थयरे कम्मं णरए य माणसो अमरे । कवलाहारो णरपसु उज्जो पक्खी य इगि लेवो ॥ २ ॥' इति, सूक्ष्माः सुरसाः सुगन्धा अन्यमनुजासम्भविनः कवलाहारं विनापि किंचिदूनपूर्वकोटिपर्यंतं शरीरस्थितिहेतवः सप्तधातुरहितपरमौदारिक-

शरीरनोकर्म्माहारयोग्यलाभान्तरायकर्म्मनिरवशेषक्षयात् प्रतिक्षणं पुद्गला आश्रवन्तीति नोकर्म्माहारेणैव केवलिनामाहारकत्वमिति नवकेवललब्धिव्याख्यानाधिकारे, यदि केवली कवलानादत्ते नासौ देवः, तथात्वे मानुषत्वात्, यदुक्तं समन्तभद्रेण भगवता- मानुषीं प्रकृतिमभ्यतीतवान्, देवतास्वपि च देवता यतः । तेन नाथ ! परमासि देवता, श्रेयसे जिनवृष ! प्रसीद नः ॥१॥" अत एवाष्टादशदोषराहित्यं स्यात्, तेषु मुख्यत्वात् क्षुधः, तथाहि- क्षुत्पिपासाजरागदजन्मभयस्मयातंकरागद्वेषमोहचिन्तारतिनिद्राविपादस्वेदखेदविस्मया दोषा न जिने इति, तत एव चतुस्त्रिंशदतिशयसिद्धिरपि, तथाहि- नित्यं निस्स्वेदत्वं निर्मलता मलमूत्ररहितता तत्पितुश्च तन्मातुश्च मलमूत्रं न भवति, उक्तं च षट्प्राभृतवृत्तौ- 'तित्थयरा तप्पियरा हलहर चक्की य अद्धचक्की य । देवा य भोगभूमा आहारो अत्थि नत्थि नीहारो ॥ १ ॥' एवं तीर्थंकराणां श्मश्रुकूर्चयोरभावः १ शिरसि कुन्तलसत्ता २ क्षीरगौररुधिरमांसत्वं ३ समचतुरस्रसंस्थानं ४ वज्रर्षभनाराचसंहननं ५ सुरूपता ६ सुगन्धता ७ सुलक्षणत्वं ८ अनन्तवीर्यं ९ प्रियहितवादित्वं १० चेति दशातिशया जन्मतोऽपि स्वामिनः शरीरस्य, गव्यूतिशतचतुष्टयसुभिक्षता ११ गगनगमनं १२ अप्राणिवधः १३ कवलाहाराभावः १४ उपसर्गाभावः १५ चतुर्मुखत्वं १६ सर्वविद्यानां परमेश्वरत्वं १७ अच्छायत्वं दर्पणे मुखप्रतिबिम्बं न भवति १८ चक्षुषि मेषोन्मेषो न भवति १९ नखानां केशानां च वृद्धिर्न भवति २० एते दशातिशया घातिकर्म्मक्षयजा भवन्ति, सर्वार्द्धमागधीया भाषा भवति, कोऽर्थः ?, अर्द्धं भगवद्भाषाया मगधदेशभाषात्मकं अर्द्धं च सर्वभाषात्मकं, कथमेवं देवोपनीतत्वं तदतिशयस्येति चेत्, मगधदेशसन्निधाने तथा परिणतभाषया प्रवर्त्तते १ सर्वजनताविषया मैत्री भवति, सर्वे हि जनसमूहा मागधप्रीतिंकरदेवातिशयवशान्मागधभाषया भाषन्ते, अन्योऽन्यं मित्रतया वर्त्तते २ इति द्वावतिशयौ, सर्वर्त्तूनां तरवः फलादि प्राप्नु-

वन्ति ३ भूः रत्नमयी भवति ४ वातोऽनुकूलः शीतो मन्दः सुरभिश्च ५ सर्वलोकानां मोदः ६ अग्रेऽग्रे एकयोजनं वायवः सुगन्धा भूमेः कण्टकाद्यपनयन्ति ७ स्तनितकुमारा गन्धोदकं वर्षन्ति पादाधोऽम्बुजमेकं अग्रतः सप्त कमलानि पृष्ठतश्च सप्त योजनैकप्रमाणानि सहस्रपत्राणि पद्मरागमणिकेसराणि अर्द्धयोजनकानि ९ भूः सर्वधान्या निष्पत्तिमयी १० आकाशं निर्म्मलं दिशो निर्मला ईत्यभावः ११ भवनवासिनः सर्वदेवानाह्वयन्ति महापूजार्थं त्वरितमागच्छतु भवन्त इति १२ स्फुरद्धर्म्मचक्रं आकाशे चलति पुरतः १३ छत्रध्वजदर्पणकलशचामरभृंगारतालसुप्रतीष्टक इत्यष्ट मंगलानि पुरतः १४, एते देवकृताशिया इति बोधप्राभृतवृत्तौ दर्शनप्राभृतवृत्तौ च, किंच-कर्म्माष्टकमध्ये केन कर्म्मणा कवलाहारग्रहणं ?, न तावदाद्ये, तयोस्तद्विलक्षणत्वात्, नापि वेदनीये, तस्य पराभिप्रायेणापि क्षुदुत्पादनमात्रशक्तित्वात्, नाप्यायुर्नामगोत्राणि, अविप्रतिपत्तेः, अवशिष्टो मोहः, स चार्हति नास्तीति कथं स्वाशयपूरणं ?, एतेन यदुक्तं रत्नाकरावतारिकायाम् 'यत्कवलाहारेण सर्वज्ञस्य साक्षाद् विरोधो वा परंपरया ?, नाद्यः, नहि केवली कवलान्न प्राप्नोति, प्राप्तानपि तान्नाहर्तुं शक्नोति, शक्तोऽपि विमलकेवलालोकपलायनशंकया नाहरतीत्यस्ति सम्भवः, अन्तरायज्ञानावरणकर्म्मणोः समूलकाषंकषणादित्यादि तन्निरस्तं, द्रव्यादिग्रहणेऽपि समानत्वात्, न हि केवली द्रव्यादि नाऽऽप्नोतीति तुल्याविरोधात्, परम्परया यथा द्रव्यग्रहणे चारित्रविरोधः ततः सार्वज्ञो न, तथा कवलाहारग्रहणे बुभुक्षालक्षणमोहस्यावश्यंभावित्वाच्चारित्रविरोधः, ततः सार्वज्ञ्येन विरोधात्, न च प्रमत्तसंयतानां चारित्रविरोधापत्तिरिष्टापत्तेः, कवलाहारं कुर्वतां प्रमत्तसंयतानां सूक्ष्मसाम्परायिकयथाख्यातरूपात्युग्रचारित्रद्वयविरोधांगीकारात्, न हि अस्माकं सांशयिकवद् भुंजानानामपि केवलज्ञानस्वीकारोऽस्ति, ध्यानासनस्थस्यैव क्षपकश्रेणेरारोहात्, न हि वयं कवलाहारग्रहणे सर्वचारित्रविरोधमभिदध्मः, एवं बाह्य-

कारणमपि सार्वज्ञ्येन विरुध्यते, तथाहि-नहि असौ स्वयं जग्धुं गृहस्थगृहे याति, नाप्यन्ये गृहस्थगृहाद्बहिरन्नादिकमानयन्ति, इच्छास्वरूपेण परिग्रहप्रसंगात् पात्राद्युपकरणाभावाच्च, पात्रादिसद्भावे परिग्रहादसंयतत्वं, तथा च तदानीतं कथमसौ भुंक्ते इति । एवं कवलाहारकार्यमपि सार्वज्ञ्येन विरुद्धं, तथाहि- कवलाहारकार्यं नीहारो निद्रा च, निद्रा तु दर्शनावरणीयभेदात्केवलिनि निषिद्धैव, नीहारोऽपि जुगुप्सासम्पादकत्वादसम्भवी, एवं सहचरादिविरोधोऽप्युद्भाव्यः, किंच— केवली नारकादिगतिप्राणिनः छेदनादिपीडितान् पश्यन् तथाऽनन्तश उच्छिष्टभावं प्राप्तमन्नाद्यवलोकयन् कथमाहरति ?, सतां गर्हणीयत्वादिति, अत्रानुमानानि- सर्वज्ञ इच्छावान् कवलाहारवत्त्वादस्मदादिवत् १, इच्छाऽपि मोहपूर्विका इच्छात्वात् अस्मदादीच्छावत्, इच्छावान् सर्वज्ञो दुःखोपद्रुतः परीषहासहिष्णुर्वा कवलाहारवत्त्वात् रथ्यापुरुषवत्, कवलाहारो निद्रादिहेतुः कवलाहारत्वादस्मदादिवत्, कवलाहारिणो मतिज्ञानवन्तः कवलाहारित्वादस्मदादिवत् इति । 'मुक्तिर्भुक्तिविरोधिनां सुनियता न्यायैः समुन्नीयते, सा सर्वार्थविबोधिनां किमु भवेज्जीवद्विमुक्तात्मनाम् । योगाभोगमहोपयोगवशतः स्यादेव देवास्थितिः, सामान्ये नरि चित्रमर्हति तदा मान्ये त्रिलोक्या हि किम् ? ॥ १ ॥ ये स्युः केवलिनो न ते कवलिनः शब्देऽपि मात्राश्रयात्, तद्ये तेषु समादधुः कवलितां ते लाघवान्वेषिणः । नानाभोगविलासलालसकथाश्रद्धां न किं कुर्वते ?, पक्षं सैतपटं स्फुटातिकपटं निर्देशयन्तोऽगिनाम् ॥ २ ॥ असद्विकल्पैस्तदनल्पजल्पैर्जिनेश्वराणामदनं वदन्ति । तेषां तपःकार्यमकार्यमेव, विनापि संलेखनकर्म्मरेखाम् ॥३॥

अत्र प्रतिविधीयते, यत्तावदुक्तम्- 'क्रियासमुदायोऽसम्भाव्यः' तन्न युक्तं, केवली भगवान् निःस्पृहो वीतरागो नाभिप्रयत्नं करोति, कृत्वा च श्वासोच्छ्वासयोग्यपुद्गलानुपादत्ते, उपादाय तत्तया परिणमय्य मुंचति, मोचने ताल्वाद्यभिघाते वक्त्रं प्रसारयति,

प्रसार्य गिरः किरतीति क्रियासमुदायवत(त्व)सम्भवात्, न चैतत् कमलोद्बोधादिवत्स्वाभाविकमिति मन्तव्यं, जीवप्रयत्नमन्तराऽनुपपत्तेः, अन्यथा हि सयोगायोगयोर्न विभेदः, यदि प्रयत्नमन्तरा ध्वनिः स्यात् तदा वाग्योगाश्रवः कथं स्यात्?, तज्जन्यः सामयिकः सातबन्धो न स्यात्, पर्याप्तयः प्राणाश्च न सम्भवेयुः, तत एवोक्तं प्राग् मुक्त्यधिकारे 'पज्जत्ती पाणाविय' इत्यादि गोमट्टसारवचसा वाग्योगविश्रामाविश्रामद्वयं भगवतः संगच्छते,-गते भरतराजर्षौ, दिव्यभाषोपसंहृतेः। निवातास्तिमितं वार्द्धिमिवानाविष्कृतध्वनिम् ॥ १ ॥' इत्यादिपुराणे २५ पर्वणि सहेतुकं ध्वनेरुपसंहारभणनात्, तथा- 'प्रश्नादिनाऽपि तद्भावं, जानन्नपि स सर्ववित्। तत्प्रश्नान्तमुदैक्षिष्ट, प्रतिपत्रनुरोधतः ॥ १ ॥' इति द्वितीयपर्वणि प्रश्नानन्तरं विवक्षां विना ज्ञानादेव वाचः प्रारम्भाच्च, एतेन स्वभावादेव देवध्वनेरुद्भवो मेघादेरिवेति मतं निरस्तं, प्रष्टुः प्रश्नानुसारेण वाग्निसर्गात् प्रष्टुरभावे तद्विरामात् ज्ञात्वा प्रयत्नकरणेनैवोपपत्तेः, यदुक्तं पुनरपि गोमट्टसारवृत्तौ 'पुद्गलविपाकी शरीरांगोपांगनामकर्म्मोदयैर्मनोवचनकाययुक्तजीवस्य कर्मनोकर्म्मागमकारणं या शक्तिः तद्धेतुकत्वेनोत्पन्नजीवप्रदेशपरिस्पन्दः स योगो मनोवचनकायवृत्तिभेदेन त्रिधा' इत्यत्रात्मनः शक्तिहेतुत्वं योगस्योक्तं, पुनस्तत्रैव मनोयोगोऽपि आत्मशक्तिजन्यः प्रोक्तः, यदुक्तं गोमट्टसारवृत्तौ 'अंगोवंगुदयाओ' इति गाथाव्याख्यायां, अथवाऽऽत्मप्रदेशानां कर्मनोकर्म्मकर्षणशक्तिरूपो भावमनोयोगः, ततः समुत्पन्नो मनोवर्गणानां द्रव्यमनःपरिणमनरूपो द्रव्यमनोयोगश्च अनेन गाथासूत्रेणोक्त इति। यस्तु बाणारसीयमतेन भगवतोऽर्हतो दशमद्वारे नाशिकायां वा मुद्रितमुख एव श्वासनिर्गमवत् वक्त्रप्रसारमन्तराऽनक्षरात्मकध्वनेरभ्युपगमः सोऽनुपपन्न, 'वीरमुहकमलनिग्गयसयलसुयग्गहणपयडणसमत्थं। णमिऊण गोयममहं सिद्धांतालावमणुवोच्छं ॥ १७ ॥ इति गोमट्टसारे, तथा- 'अर्हद्वक्त्रप्रसूतं गणधररचितं द्वादशांगं

केवलि मुक्ति-सिद्धौ वाण्याः साक्षरता

विशालं, चित्रं बह्वर्थयुक्तं मुनिगणवृषभैर्धारितं बुद्धिमद्भिः । मोक्षाग्रद्वारभूतं व्रतचरणफलं ज्ञेयभावप्रदीपं, भक्त्या नित्यं प्रपद्ये श्रुतमहमखिलं सर्वलोकैकसारम् ॥ १ ॥' इति पूजापाठे वीतरागवदनान्निर्गतमिति, पंचास्तिकायवृत्तौ- 'अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् । नादरूपं समुत्पन्नं, शास्त्रं परमदुर्लभम् ॥ १ ॥' अशरीरस्य शास्त्रोत्पत्तिः संगच्छते न, कूर्मरोमवत्. 'अष्टौ स्थानानि वर्णाना' मिति शब्दानां करणकारणत्वादिति, भावप्राभृतवृत्तौ पंचाशदुत्तरशततमगाथाव्याख्यायां वदनादेव वाण्याः प्रादुर्भावोक्तेः, अन्यथा ध्वनेः शास्त्रोत्पत्तिं वदन् परवादी दुर्जयः स्याद्, अत एव महापुराणे जिनसेनः- 'तत्प्रश्नावसितावित्थं, व्याचष्टे स्म जगद्गुरुः । वचनामृतसंसेकैः, प्रीणयन्नखिलं सदः ॥ १ ॥' न चात्रान्तरा गणभृन्निक्षेप्यः 'इत्याकर्ण्य गुरोर्वाक्यं, स वर्णाश्रमपालकः । सन्देहकर्दमापायात्, सुप्रसन्नं व्यधान्मनः ॥ २ ॥' भूयो भूयः प्रणम्येशं, समापृच्छ्य पुनः पुनः । पुनरावव्रृते कृत्स्नात्, स प्रीतो गुर्वनुग्रहात् ॥ ३ ॥' इत्यत्र स्वयं भरतेन श्रुतमित्युक्तत्वात्, एतेन यद्भगवद्दिव्यवागर्थं गणधर एव वेत्ति ततः सोऽशेषान् भव्यजीवान् प्रतिबोधयतीति वदन् परास्तो, भगवद्वचसोऽनाकर्णनीयत्वप्रसंगात्, न हि स कोऽपि मूर्खोऽस्ति योऽनक्षरां स्वयमनवबोधनीयां गिरं श्रोतुमुत्सहते, न च कोकिलादिवत् सुभगतया शकुनान्वेषणे पक्षिवाक्यवदायतिशुभाशुभज्ञायकतया वा भगवद्गिरोऽपि श्रवणीयतेति वाच्यं, तत्त्वार्थिनां मुमुक्षूणां तथाऽप्रवृत्तेः, अन्यकेवलिनां गणधराभावेऽपि देशकत्वं श्रूयते तदपि न संजाघटीति, तत्रापि तत्तद्वृद्धबोध्यत्वे स्वीक्रियमाणे गणधराविशेषेणाननुगमात् तीर्थंकरवचसो गणधरस्यैव बोध्यत्वे

१ यथा कैश्चिदभ्युपगम्यते, तस्मिन् ध्यानसमापन्ने चिंतारत्नवदास्थिते । निःसरन्ति यथाकामं, कुड्यादिभ्योऽपि देशनाः ॥ १ ॥

केवलिमुक्तिसिद्धौ वाण्याः साक्षरता

पारतन्त्र्यादन्यस्य प्रश्नानवकाशोऽपि सिद्धान्तविरुद्धः, यदुक्तं गोमट्टसारवृत्तौ 'आयारे सुद्दयडे ठाणे समवायणामए अंगे ।
तत्तो विवाहपण्णत्तीए णाहस्स धम्मकहा ॥ ३५६ ॥ आचारांगे- आचारोपदेशे गाथा यथा- जयं चरे जयं चिट्ठे, जयं आसे जयं
सए । जयं भुंजेज्ज भासेज्ज, एवं पावं ण बज्झइ ॥ १ ॥ णाहस्स धम्मकहेति कोऽर्थः १, नाथस्त्रिलोके गणधरदेवस्वामी तीर्थकरः
परमभट्टारकस्तस्य धर्मकथा जीवादिवस्तुस्वभावकथनं, घातिकर्मक्षयानंतरं केवलसहोत्पन्नस्तीर्थकरत्वपुण्यातिशयविजृम्भितो
महितस्तीर्थकरस्य पूर्वाह्णमध्याह्नापराह्णार्धरात्रेषु षड्घटिकाकालपर्यन्तं द्वादशगणसभामध्ये स्वभावतो दिव्यध्वनिरुद्गच्छति,
अन्यकालेऽपि गणधरशक्रचक्रधरप्रश्नानन्तरं चोद्भवति, एवं समुद्भूतो दिव्यध्वनिः समस्तान् श्रोतृगणानुद्दिश्य उत्तमक्षमादिलक्षणं
रत्नत्रयात्मकं वा धर्मं कथयति, अथवा ज्ञातुर्गणधरदेवस्य जिज्ञासमानस्य प्रश्नानुसारेण तदुत्तरधर्मकथनं तत्पृष्टास्तित्वादि-
स्वरूपकथनं तद्धर्मकथानामकं षष्ठमंगमिति। अथैवं भवतु गणधरेणान्येन वा बोध्यता भगवद्वचसः, परं ध्वनिकथनादनक्षरात्मकत्वं
तु सिद्धमेवेति चेत् न, अनक्षरात्मकत्वे सत्यानुभयरूपवाग्योगद्वयस्याविवेचनात् मेघध्वनेरिव, तथाच गोमट्टसारवृत्त्युक्तः कथमा-
लापःसिध्येत्, तथाहि-सयोगकेवलगुणस्थाने गु०१जी२प६।६प्रा४।२सं०ग१इं१का१यो७म२वा२औ२का१वे०क०ज्ञा०१के।सं१यथा०
द. १ के. ले० ६ भा ६ स १ स १ क्षा स० आ. १ अना २ उ० २ । तथा तद्गाथापि--"मणसहियाणं वयणं दिट्ठं तंपुव्वमिति
सयोगम्मि । उत्तो मणोवयारो णिंदियणाणेण हीणम्मि ॥ २२४ ॥ इन्द्रियज्ञानेन-मतिज्ञानेन हीने सयोगकेवलिनि मुख्यवृत्त्या

२ इन्द्रियादेरसत्यमृषायोगवत् ।

मनोयोगाभावात्, उपचारेण मनोयोगोऽस्तीति परमागमे उक्तः, तस्योपचारस्य निमित्तप्रयोजनपूर्वकत्वात्, तत्र तावन्निमित्तमुच्यते-अस्मादृशानां छद्मस्थानां तत्पूर्वकं-मनःपूर्वकमेव वचनं-वर्णपदवाक्यात्मकं वाग्व्यापारो दृष्ट इतिहेतोर्निमित्तत्वात्, इतिशब्दोऽस्य हेत्वर्थे वृत्तिः, ननु अस्मदादिष्वनतिशयपुरुषेषु निष्ठो धर्म्मः सातिशयपुरुषे भगवति कथं कल्प्यत इति चेत् ,तन्न, मुख्यस्य मनोयोगस्यासम्भवादिति, तत्कल्पनारूप उपचार इत्युक्तः, तस्य प्रयोजनमिदानीमुच्यते "अंगोवंगुदयाओ" इतिगाथा इति वृत्तिः, ननु उत्पत्तावनक्षरात्मकत्वेऽपि श्रोतृश्रोत्रप्रदेशप्राप्तिसमयपर्यन्तमनुभयस्वभावत्वे प्रसिद्धे तदनन्तरं श्रोतृजनाभिप्रेतार्थेषु संशयादिनिराकरणेन सम्यग्ज्ञानजनकत्वेन भव्यवाग्योगत्वसिद्धेरिति गोमट्टसारवृत्तिवचसा वाग्योगद्वयसिद्धिरिति चेत्, न, एवं सति मेघध्वनेरपि श्रवणानन्तरं भाविवृष्टिविषयसंशयनिराकरणेन ज्ञानजनकत्वात् सत्यवाग्योगत्वासिद्धेः, सर्वार्धमागधीयभाषाऽतिशयवैयर्थ्यापत्तेश्च, अथैतदतिशयस्य देवकृतत्वेनैवानक्षरात्मकमपि भगवद्वचः साक्षरमिव प्रतिभाति सामान्यजनस्यापि आदेयसुभगादिनामकर्म्मातिशयादनीदृशमपि वचो हितावहमेव प्रतिभाति तर्हि किमतिशयनिधानस्य भगवतो वचसा इति चेत्, न-"अल्पाक्षरमसंदिग्धं, सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च, वाक्यं स्वायंभुवं विदुः ॥ १ ॥ इति षट्प्राभृतवृत्तिवचनात्, तेन यद्यपि आदिपुराणे प्रवक्तुरस्य वक्त्राब्जे, विकृतिर्नैव कोऽप्यभूत्। दर्पणे किमु भावानां, विक्रियाऽस्ति प्रकाशने॥१॥ ताल्वोष्ठमपरिस्पन्दि, नच्छायान्तरमानने। अस्पृष्टकरणा वर्णा, मुखादस्य विनिर्ययुः ॥ २ ॥ इति २४ पर्वणि उपदेशे निःश्रमत्वव्यञ्जनं कृतं तथापि वर्णात्मकत्वमुक्तमेव, ततः प्रागुक्तशास्त्रसम्मत्या वाक्यस्य जीवप्रयत्नजन्यत्वे निश्चिते ताल्वोष्ठपुटकण्ठादिसन्निधानेऽपि यन्मुद्रितमुखेनानक्षरध्वनिरुद्भवतीति स्वीकारः शपथप्रत्येयो, न युक्तिगम्यः, तदुक्तमादिपुराणे 'देवकृतो ध्वनिरित्यसदेतद्, देवगुणस्य तथा

केवलि मुक्ति-सिद्धौ वाण्याः साक्षरता

विहतिः स्यात् । साक्षर एव च वर्णसमूहान्, नैव विनाऽर्थगतिर्जगति स्या ॥१॥ दिति । किंच-वक्रचालनाद्यभावोऽपि कथं सिद्धः ? अनक्षरात्मकत्वाद्वाच इति चेत्, तदपि कथं सिद्धं ? वक्रचालनाद्यभावादित्यन्योऽन्याश्रयोऽपि, अथ वक्रचालनाद्यभावस्य 'जो अडोल पर्यंकमुद्राधारी'त्यादि बादरकाययोगाभावात् सिद्धेर्नान्योऽन्याश्रय इति चेत्, बादरमनोयोगं बादरकाययोगं च परिहाप्य सूक्ष्मकाययोगालम्बनोऽन्तर्मुहूर्त्तशेषायुर्वेद्यनामगोत्रः सूक्ष्मक्रियाऽप्रतिपातिभाग् भवतीति भावप्राभृते "बारसविह तव चरण'मिति गाथाव्याख्यायां, तथा प्रथमं शुक्लध्यानं पृथक्त्ववितर्कवीचारं उपशान्तकषायेऽस्ति, क्षीणकषायस्यादावस्ति, तत् शुक्लतरलेश्याबलाद् ध्यानमन्तर्मुहूर्त्तकालपरिवर्त्तनं, द्वितीयमेकत्ववितर्कावीचारं ध्यानमेकयोगेनार्थगुणपर्यायेष्वन्यतमस्मिन्नवस्थानं, ईदृशे शुक्लध्याने घातित्रयविनाशे केवली जायते, स यदाऽन्तर्मुहूर्त्तशेषायुष्कः समस्थितिवेद्यनामगोत्रश्च भवति तदा बादरकाययोगे स्थित्वा क्रमेण बादरमनोवचनोच्छ्वासनिश्वासं बादरकाययोगं च निरुध्य ततः सूक्ष्मकाययोगे स्थित्वा क्रमेण सूक्ष्ममनोवचनोच्छ्वासं निरुध्य सूक्ष्मकाययोगः स्यात्, तस्य सूक्ष्मक्रियाऽप्रतिपाति तृतीयं शुक्लं, ततः परमशुक्लं प्रारभते, तत्र सर्वाश्रवनिरोध इति, भावनासंग्रहे स्फुटमन्तर्मुहूर्त्तशेषायुष एव बादरकाययोगप्रहाणप्रतिपादनात् ततः पूर्वं बादरकाययोगस्यावश्यं सत्त्वात्, सर्वथा बादरकाययोगाभावे क्रियाभावात्, पूर्वं वप्रत्रयाधिरोहः पश्चाद्योजनोच्चकमलोपरि पादन्यासो निर्वाणसमये सम्मेतादिक्षेत्राश्रयणमित्यादि न घटते, न च सम्मेतादिक्षेत्रोपरि आकाश एव तदवस्थानमिति वाच्यं, "पावापुरस्य बहिरुन्नतभूमिदेशे, पद्मोत्पलाऽऽकुलवतां सरसां हि मध्ये। श्रीवर्द्धमानजिनदेव इति प्रतीतो, निर्वाणमाप भगवान् प्रविधूतपाप्मा ॥ १ ॥" तथा "पद्मवनदीर्घिकाकुलविविधद्रुमखण्डमण्डिते रम्ये । पावानगरोद्याने व्युत्सर्गेण स्थितः स मुनिः ॥ २ ॥ इत्यादिना क्रियाकलापवृत्तौ विविच्य

क्षेत्राश्रयणस्योक्तत्वात्, एतेन च केवलोत्पत्त्यनन्तरमेव सूक्ष्मक्रियाध्यानप्रतिपत्तिरर्हत इति मतं निरस्तं, ध्यानत्रयसाङ्कर्यात्, एकं केवलादाचतुर्दशगुणस्थानं, द्वितीयं योगध्यानं मासादिसात्राधिकं, तृतीयं सूक्ष्मक्रियमान्तर्मुहूर्त्तिकमिति, तथा च सूत्रविरोध इत्यादि 'केवलेति' गाथा ६२ व्याख्यायां गोमट्टसारवृत्तौ क्षीणकषायगुणस्थानकालचरमभागवर्त्ति एकत्ववितर्कावीचाराख्य-द्वितीयशुक्लध्यानप्रभावेन ज्ञानदर्शनावरणान्तरायाख्यघातित्रये विनाशिते सति केवलज्ञानवान् योगेन मनोवाक्कायकर्म्मान्यतमेन युक्तः सयोगजिनः, सूक्ष्मक्रियाप्रतिपातिरूपशुक्लध्यानसामर्थ्येन योगाख्यं कर्म्म निरुणद्धि' इति कथनात्, अन्यत्रापि तथैव प्रसिद्धेः, न च केवलानन्तरं तावत्कालं पूर्वकोटिं यावद् ध्यानस्थितिरिति सम्भाव्यं, ध्यानस्यान्तर्मुहूर्त्तमेव स्थितेः, यदुक्तमभियुक्तशिरोमणिभिरुमास्वातिवाचकैः 'उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानमान्तर्मुहूर्त्ता' दिति, जीवसमासान्तरश्लोकेऽपि-'अवितर्कमवीचारं, सूक्ष्मकायावलम्बनम्। सूक्ष्मक्रियं भवेद् ध्यानं, सर्वभावगतं हि तत् ॥ १ ॥ काययोगेऽतिसूक्ष्मे तत्, वर्त्तमानो हि केवली। शुक्लं ध्यायति संरोद्धुं, काययोगं तथाविधम् ॥ २ ॥ अवितर्कमवीचारं, ध्यानं व्युपरतक्रियम्। परं निरुद्धयोगं हि, तच्छैलेश्यामपश्चिमम् ॥३॥ तत्पुना रुद्धयोगः सन्, कुर्वन् कायत्रयासनः। सर्वज्ञः परमं शुक्लं, ध्यायत्यप्रतिपाति तत् ॥ ४ ॥' इति ध्यानप्ररूपणा, शुक्लं ध्यानं द्विविधं-शुक्लं परमशुक्लमिति द्विविधम्, आद्यं पृथक्त्ववितर्कवीचारमेकत्ववितर्कावीचारमिति, परमशुक्लं द्विविधं- सूक्ष्मक्रियाऽप्रतिपाति समुच्छिन्नक्रियाऽनिवृत्ति, तल्लक्षणं द्विविधं- बाह्यमाध्यात्मिकं च, गात्रनेत्रपरिस्पन्दरहितं जम्भजृम्भोद्गारादिवर्जितमनभिव्यक्तप्राणापानप्रचारत्वं उच्छिन्नप्राणापानप्रचारत्वं अपराजितत्वं बाह्यं, तदनुमेयं परेषामात्मनः स्वसंवेद्यमाध्यात्मिकं तदुच्यते भावनासंग्रहेऽपि, एतदेवादिपुराणे-पुनरन्तर्मुहूर्त्तेन, निरुन्धन् योगमाश्रवम्। कृत्वा वाङ्मनसे सूक्ष्मे,

काययोगव्यपाश्रयात् ॥ १ ॥ सूक्ष्मीकृत्य पुनः काययोगं च तदुपाश्रयम् । ध्यायेत् सूक्ष्मक्रियं ध्यानं, प्रतिपातपराङ्मुख ॥ २ ॥-मिति ' एवं च सूक्ष्मक्रियाख्यं तृतीयं शुक्लध्यानमन्तर्मुहूर्त्तमेव, तदपि शैलेश्यकरणप्रारम्भात् प्रागेवानन्तरं, न पुनः केवलोत्पादानन्तरं शाश्वतिकं, तथात्वे विहारोपदेशाद्यभावात्, मोक्षासनस्यैव कैवल्यासनप्रसंगाच्च, न हि ध्यानाद्धस्तपादाद्यवयवाचलने कैवल्यासनान्मोक्षासनं भिद्यते, अत एव योगध्यानस्य भवन्मते कालनियमो दृश्यते सोऽप्युपद्यते, बादरकाययोगस्य योगध्यानेऽपि संभवात् तावत्कालं बादरकाययोगस्य रोधाघटनात्, तर्हि तदर्वाक्काले कुतः काययोगनिरोधशंकाऽपि ?, योगध्यानकालस्त्वेवं द्वाषष्टिस्थानके ' श्रीऋषभस्य मोक्षासनं पर्यंकरूपं, योगध्यानं दिनानि चतुर्दश, अजितस्य मोक्षासनं ऊर्ध्वरूपं, योगध्यानं मासं यावत्, श्रीनेमिपार्श्वयोर्मोक्षासनं पर्यंको, योगध्यानं मासं यावत्, श्रीवीरस्य मोक्षासनं पर्यङ्कः योगध्यानं दिनद्वयं, शेषाणामर्हतामजितवत्', एवं योगत्यागाक्रियापि कियत्कालभाविनी महापुराणे, 'ततः परार्थसम्पत्त्यै, धर्म्ममार्गोपदेशने । कृततीर्थविहारस्य, योगत्यागः परक्रिया ॥ १ ॥' एवं क्रियाकलापे शुभचन्द्रोऽप्याह- 'आद्यश्चतुर्दशदिनैर्विनिवृत्तयोगः, षष्ठेन निष्ठितकृतिर्जिनवर्द्धमानः । शेषा विधूतघनकर्म्मनिबद्धपाशा, मासेन ते यतिवरास्त्वभवन् वियोगाः ॥ १ ॥' अत्रायमभिप्रायः-कालनियमोऽयं योगत्यागस्य विहाराभावरूपो वा धर्म्मोपदेशरूपाभावो वा बादरकाययोगाद्यभावरूपो वा ? नाद्यद्वितीयौ, सर्वदा तत्कारणाभावात् प्रागेव तत्प्रसिद्धेः, न हि केवली सर्वदा विहरति उपदिशति वा, न

१ ऋषभो वासुपूज्यश्च, नेमिः पर्यंकयोगतः । कायोत्सर्गस्थितानां तु, सिद्धिः शेषजिनेशिनाम् ॥ १ ॥ इति निर्वाणभक्तिस्तवे ।

तृतीयोऽपि, तावत्कालं बादरकाययोगाद्यभावस्योत्सूत्रत्वात्, यदुक्तं गोमट्टसारे- 'सेलेसिं संपत्तो निरुद्धनिस्सेसआसवो जीवो । कम्मरयविप्पमुक्को गययोगो केवली होइ ॥ १ ॥' शीलानामष्टादशसहस्रसंख्यानां ऐश्यम्-ईश्वरत्वं स्वामित्वं सम्प्राप्तो निरुद्धनिःशेषाश्रवः- परमसंवरसंपन्न इत्यर्थः, योगस्याश्रवत्वात्, अयोगकेवली सिद्ध एव, तस्यापि व्युपरतक्रियानिवृत्तिकरणचतुर्थशुक्लध्यानसामर्थ्येनानुदयप्राप्तानामपि कर्म्मणां स्वस्थितिक्षयवशात् सविपाकानिर्जरा[2] सम्भवती'ति तद्वृत्तिः, तेन बादरकाययोगाभावादयोगत्वं शैलेशीकरण एव, तथा च चतुर्दशदिनाद्ययोगत्वं कल्पना, सँल्लेखनात्[3]तपस एव तदंगीकारे संलेखनायाः प्राक्तनलाहारप्रसगभयादेव, अत एव- 'मार्गशिरःकृष्णदशमीहस्तोत्तरमध्यमाश्रिते चन्द्रे । षष्ठेन त्वपराह्णेऽभक्तेन जिनः प्रवव्राज॥१॥ ऋजुकूलायास्तीरे सालद्रुमसंश्रिते शिलापट्टे । अपराह्णे षष्ठेन स्थितस्य खलु जृम्भिकाग्रामे ॥ २ ॥ वैशाखसितदशम्यां हस्तोत्तरमृक्षमागते चन्द्रे । क्षपकश्रेण्यारूढस्योत्पन्नं केवलज्ञानम् ॥ ३ ॥' इत्यत्रैव निर्वाणसूत्रेऽपि षष्ठपदं तपसः परिभापकं शुभचन्द्रेणाप्याहतं वीरस्येति, एवं च त्रयोदशगुणस्थानकावधि औदारिकांगोपांगकर्म्मोदयसाचिव्येन बादरयोगसद्भावाद्विहारादिवदुपदेशेऽपि वक्त्रचालनादिना-

---

२ कर्मैकदेशगलनं निर्जरा द्वेधा-उदयोदीरणाभेदात्, तत्र कर्मफलविपाका उदयोद्भवा, परीषहजयादुदीरणोद्भवा, आद्या शुभानुबन्धा, द्वितीया निरनुबन्धा, तपसा मुनीनामिति भावनासंग्रहे ग्रन्थे ।

३ अत एव क्वचित् योगध्यानस्यैव अनशनत्वेन भणनं, अशनपानखाद्यस्वाद्यचतुर्विधाहारनिवृत्तिरनशनं, तद् द्वेधा-अवधृतकालं षष्ठादिषु, अनवधृतकालमादेहोपरमात् इति भावनासंग्रहे ।

हेतो वाक् साक्षरैव श्रद्धेया। यदि च निरक्षरत्वमेव तर्हि समयसारवृत्तौ सूरिसाम्येन वर्णनं कथमुवाचामृतचन्द्रः-'कान्त्यैव स्नपयन्ति ये दश दिशो धाम्ना निरुन्धन्ति ये, धामोद्दाममहस्विनां जनमनो मुष्णन्ति रूपेण ये। दिव्येन ध्वनिना सुखं श्रवणयोः साक्षात् किरन्तोऽमृतं, वन्द्यास्तेऽष्टसहस्रलक्षणधरास्तीर्थेश्वराः सूरयः ॥ १ ॥ जइ जीवो ण सरीरं तित्थयरायरियसंथुयं चेव ।' इति गाथाव्याख्याने; तदाह जिनसेनोऽप्यादिपुराणे चतुर्विंशतिपर्वणि, 'स्फुरद्गिरिगुहोद्भूतप्रतिश्रुध्वनिसन्निभः । अस्पष्टवर्णो निरगात्, ध्वनिः स्वायंभुवान् मुखात् ॥ १ ॥ विवक्षामन्तरेणास्य, विविक्ताऽऽसीत् सरस्वती । महीयसामचिन्त्या हि, योगजाः शक्तिसम्पदः ॥ २ ॥' इति, ततः सिद्धो बादरकाययोगः, तस्माद्वक्त्रसंचालनादिना बादरवाग्योगोऽपि, तेन ध्वस्तोऽनक्षरात्मकवाचः स्वीकार इति, तत एव नाभिप्रयत्नादिक्रियासमुदायवत्केवलिनां विहारक्रियाप्यसंख्यातसामयिकी शास्त्रोक्ता युक्ता, पूर्वं काययोगस्ततः पदोत्क्षेपः ततः कमले पदन्यासस्ततोऽन्यपदोत्क्षेप इति, अथ कथमेतत् ?, अस्मन्नये तत्क्रियायास्तथा रीत्याऽनंगीकारात्, भगवानर्हन् यथास्थितः प्राप्तकेवलस्तथैव यावज्जीवमवतिष्ठते इति, यदुक्तं प्राभृतवृत्तौ 'आहारासणनिद्दाजयं च काऊण जिणवरमएण ।' अस्य व्याख्या- शनैः २ आहारासननिद्राजयेन-सर्वोऽप्याहारस्त्यक्तुं शक्यते, आसनं च सदाऽऽद्रियते, पद्मासन एव वर्षसहस्राणि स्थीयत इति चेत्, न, केवलिनः स्थाननिषद्याविहारधर्म्मोपदेशक्रियाणां एकस्मिन्नर्हति भवन्मतेऽपि सामस्त्येन कथनात्, यदवाचि प्रवचनसारसूत्रवृत्तावमृतचन्द्राचार्येण—'ठाणनिसेज्जविहारा धम्मुवदेसो य णिययओ तेसिं । अरहंताणं काले मायाचारोव्व इत्थीणं ॥ १ ॥ यथा हि महिलानां प्रयत्नमन्तरेणापि तथाविधयोग्यतासद्भावात् स्वभावभूत एव मायोपगुण्ठनागुण्ठितो व्यवहारः तथा केवलिनां प्रयत्नमन्तरेणापि तथाविधयोग्यतासद्भावात् स्थानमासनं विहरणं धर्म्मदेशना च स्वभाव-

भूता एव, अपि च-अविरुद्धमम्भोदहष्टान्ताद्, यथाऽब्दाकारपरिणतानां गमनमवस्थानं गर्जनमम्बुवर्षं च पुरुषप्रयत्नमन्तरेणापि दृश्यन्ते तथा केवलिनां स्थानादयो बुद्धिपूर्वका एव दृश्यन्ते, अतोऽमी स्थानादयो मोहोदयपूर्वकत्वाभावात् क्रियाविशेषा अपि केवलिनां क्रियाफलभूतबन्धसाधनानि न भवन्ती'ति तद्वृत्तिदेशः, अत्र स्थानादिचतुर्णां क्रियाविशेषाणां मोहपूर्वकत्वं निषिद्धं, बुद्धिपूर्वकत्वं साधितं, अत एव आदिपुराणे- 'स्तुत्वेति मघवा देवं, चराचरजगद्गुरुम् । ततस्तीर्थविहारस्य, व्यधात् प्रस्तावनामिमाम् ॥ १ ॥ निर्द्धूय मोहपृतनां, मुक्तिमार्गोपरोधिनीम् । तवोपदेष्टुं सन्मार्गं, कालोऽयं समुपस्थितः ॥ २ ॥ इति प्रबुद्धतत्त्वस्य, स्वयंभर्तुर्जिगीषतः । पुनरुक्ततरा वाचः, प्रादुरासन् शतक्रतोः ॥३॥' 'अथ त्रिभुवनक्षोभी'त्यादिना बुद्धिपूर्वं भगवदुत्थानं, अथैताः क्रियाः प्रत्येकं व्याख्येयाः, तथा च यस्य स्थानं न तस्यासनमिति चेत्, न, प्रत्येकव्याख्याने स्थानवतो विहारानुपपत्तेः, मेघदृष्टान्तेऽपि गमनादीनां चतुर्णां क्रियाविशेषाणां समुदायरूपेणोपलम्भाच्च, यथासम्भवव्याख्याने तु विहारस्यापि पदोत्क्षेपेणैव सम्भवः, तथा चोक्तिरपि श्रीभक्तामरस्तवे-'उन्निद्रहेम०' अत्र पादयोः कर्तृत्वेन स्वतन्त्रत्वप्रतिपादनात् स्पष्टमेव पादोत्क्षेपणम्, अन्यथा कजरचनभक्तेर्देवानां वैयर्थ्यं स्यात्, एतदनूवाच च-जिनसेनो महापुराणे- 'ततोऽयमनुपानत्कः, पादचारी विवाहनः । कृतवान् पद्मगर्भेषु, चरणन्यासमर्हति ॥ १ ॥' तथा 'अथ त्रिभुवनक्षोभितीर्थकृत् पुण्यसारथिः । भव्याब्जानुग्रहं कर्तुमुत्तस्थे जिनभानुमान् ॥ १ ॥ प्रतस्थे भगवानित्थमनुयातः सुरासुरैः । अनिच्छापूर्विकां वृत्तिमास्कन्दन् भानुमानिव ॥२॥ मृदुस्पर्शसुखाम्भोजविन्यस्तपदपंकजः । शालिव्रीह्यादिसम्पन्नवसुधासूचितागमः ॥ ३ ॥" इति २५ पर्वणि, एवं च स्थानं उत्थानं चलनं निषीदनं च एकस्यैव प्रतीयमानं पदोत्क्षेपन्यासादिप्रयत्नं विना न सम्भवति इति सुधिया उन्नेयं, भावप्राभृतवृत्तौ-"तीर्थंकराः कमलोपरि

पादौ न्यस्यन्ती"ति, किंच बोधप्राभृतवृत्तौ कथं गगनगमनातिशयस्तस्यापि दुर्लभत्वात्, तथाहि-त्वया तावदभ्युपगम्यते यत्सप्रश्रेणावेव केवलिनां गतिरन्यथा विद्याधराणामिवोर्द्ध्वाधश्चलने इच्छाप्रसंगात्, तथा च केवलात्पूर्वं गगनगामित्वं नास्ति, पश्चात्कथं वप्रत्रयोपरिस्थसिंहासने भगवान् अवतिष्ठते ?, यतः श्रीऋषभो-'न्यग्रोधपादपस्याधः, शिलापट्टं शुचि पृथुम् । सोऽध्यासीनः समाधानमधात् ध्यानाय शुद्धधी ॥१॥ रित्यादिपुराणे २० पर्वणि, तत्र ज्ञाने समुत्पन्ने 'ईदृक् त्रिमेखलं पीठं, तस्योपरि जिनाधिपः । त्रिलोकशिखरे सिद्धपरमेष्ठीव निर्बभा ॥१॥ विति २२ पर्वणि, 'देवोऽर्हन् प्राङ्मुखो वा नियतिमनुसरन्नुत्तराशामुखो वा, यामध्यास्ते स्म पुण्यां समवसृतिमहीं तां परीत्याध्यवात्सुः। प्रादक्षिण्येन धीन्द्रा १ द्युयुवति २ गणिनी ३ नृस्त्रिय ४ स्त्रिश्च देव्यो, ७ देवाः १० सेन्द्राश्च मर्त्त्याः ११ पशव १२ इति गणा द्वादशामी क्रमेण ॥१॥' तथा 'गत्वा क्षितेर्वियति पंचसहस्रदण्डान्, सोपानविंशतिसहस्रविराजमानान् । रेजे सभा धनदयक्षकृता यदीया, तस्मै नमस्त्रिभुवनप्रभवे जिनाय ॥१॥" न च सशरीरस्य केवलोत्पत्त्येकसमय एव तावद्गमनं सम्भाव्यते, नापि केवलादनु तावदूर्ध्वं गच्छतीति, श्रेणिवैषम्यात्, अथ यथा २ घातिप्रकृतिक्षयस्तथा तथोर्ध्वं गच्छतीति, गमनक्रियाविशिष्टानां तव मते ध्यानानंगीकारात्, छाद्मस्थ्येऽपि तदतिशयप्रसंगाच्च, एकीभावस्तोत्रेऽपि यथा- 'पादन्यासादपि च पुनतो यात्रया ते त्रिलोकीं, हेमाभासो भवति सुरभिः श्रीनिवासश्च पद्मः ।' समयसारवृत्तावपि "एवं मिथ्यादृष्टिरात्मनि रागादीन् कुर्वाणः स्वभावत एव कर्म्मयोग्यपुद्गलबहुले लोके कायवङ्मनःकर्म्म कुर्वाणोऽनेकप्रकारकरणैः सचित्ताचित्तवस्तूनि निघ्नन् कर्म्मरजसा बध्यते, तस्य कतमो बन्धहेतुः ?, न तावत् स्वभावत एव कर्म्मयोग्यपुद्गलबहुलो लोकः; सिद्धानामपि तत्रस्थानां तत्प्रसंगात्, न कायवाङ्मनःकर्म्म यथाख्यातसंयतानामपि तत्प्रसंगात्, नानेकप्रकाराणि करणानि,

केवलिनश्चलनादिक्रिया समुदायः

केवलिनामपि तत्प्रसंगात्, न सचित्ताचित्तवस्तूपघातः, समितितत्पराणामपि तत्प्रसंगादिति," अत्रानेकप्रकारकरणानि हस्तपादाद्यवयवचालनरूपाणि मन्तव्यानि, न पुनः कायवचोमनोयोगलक्षणानि, तेषां प्रागेवोक्तत्वात्,- 'न कर्म्मबहुलं जगत् न चलनात्मकं कर्म्म वा, न नैककरणानि वा न चिदचिद्वधो बन्धकृत् । यदैक्यमुपयोगभूः समुपयाति रागादिभिः, स एव किल केवलं भवति बन्धहेतुर्नृणा ॥ १ ॥ मिति, अन्यथा समयसारवृत्त्युक्तमल्लरूपदृष्टान्तवैषम्यप्रसक्तेः, अन्यत्रापि- 'कायवाक्यमनसां प्रवृत्तयो, नाभवंस्तव मुने ! चिकीर्षया । नासमीक्ष्य भवतः प्रवृत्तयो, धीर! तावकमचिन्त्यमीहित ॥ १॥" मिति, प्राभृतवृत्तावपि 'कायवाङ्मनसां सत्तायामपि भगवतः कर्म्मबन्धो नास्ति, जीवन्मुक्तत्वात्तस्य, एवं तत्त्वसारेऽप्ययमेवाभिप्रायः, तत्र सिद्धस्वरूपकथन एव 'गमणागमणविहीणो फंदणचलणेहिं विरहिओ सिद्धो ।' इत्युक्तं, नत्वर्हद्वर्णने, यदि केवलानन्तरं हस्तपादाद्यवयवचालनं न स्यात् तदा चक्षुषि मेषोन्मेषाभावोऽतिशय इत्येव कथं?, सर्वावयवस्पन्दाभाव एव स्यात्, एकनिषेधे परस्य लाभात्, न च यदि चक्षुश्चालन रूपसूक्ष्मक्रियाया अपि अभावस्तर्हि सुतरां परावयवबादरकर्म्मणामितिवाच्यं, नानाग्रन्थाक्षरैः साधितानां विहारोपदेशादिकर्म्मणामप्यभावापत्तेः, व्युपरतक्रियध्यानस्याल्पकालीनत्वात्, एतेन-'अपरिस्पन्दिताल्वादेरस्पष्टदशनद्युतेः । स्वयंभुवो मुखाम्भोजाज्जाता चित्रं सरस्वती ॥ १ ॥' ति निरस्तं, अत एव विहारादिक्रियां कुर्वतां सूक्ष्मक्रियध्यानस्याप्यनंगीकारोऽस्मन्नये, त्वन्नयेऽपि एकाग्रचिन्तानिरोधरूपध्यानलक्षणाभावात् कर्म्मरजोविधूननफलभावाद् ध्यानोपचारस्वीकारः, स चान्तर्गडुरेव, पूर्वकोटिपर्यंतं ध्यानानवस्थानात्, तत्साध्यस्य योगनिरोधस्यापि तदानीमसद्भावात् इति स्थितं मोहाभावेऽपि क्रियासमुदायो भवत्येव, तत एवादिपुराणे द्वितीयपर्वणि-"विवक्षया विनैवास्य, दिव्यो वाक्प्रसरोऽभवत् । महतां चेष्टितं चित्रं, जगदभ्युज्जिहीर्षता ॥ १ ॥" मिति,

केवलिनश्चलनादिक्रियासमुदायः

नतु अयं क्रियासमुच्चयः प्रयत्नमन्तरा स्वभावभूतः, कवलाहारक्रियायाः समुदायस्तु न तथेति चेत्, न शरीरवाङ्मनोद्वारा विहित-प्रयत्नं विना चेतनस्य क्रियाकारकत्वानुपपत्तेः, स्वभावपक्षे सिद्धानामपि तत्प्रसंगः, अत एव प्रवचनसारवृत्तौ स्वभावपदेन बुद्धि-पूर्वकत्वं व्याख्यातं, किंच समवसरणेऽवस्थानं प्राङ्मुखमुदङ्मुखं वा भवति, विहारग्रामो दक्षिणस्यां पश्चिमायां वा, तदा व्यावर्त्तनं स्यान्न वा?, प्रथमे इच्छाप्रसंगः, परे विहारभंगः, अपि च-चातुर्मुख्ये किं प्राङ्मुखत्वमुदङ्मुखत्वं वा?, सर्वत्र साम्यादिति, यस्त्व-ब्दहृष्टान्तस्तत्रापि गमनावस्थानादौ वायुकृतप्रयत्नस्य स्त्रीदृष्टान्तेऽपि यौवनोन्मुखवेदबहुलाद्युदीर्णात्मप्रयत्नस्य मायाचारे हेतुता, न स्वभावालम्बनं श्रेयो, जैनानां केवलस्वभावस्य हेतुत्वानुचितत्वात्, इतरशब्दे वायोरनपेक्षा स्त्रीणां सर्वासां शिक्षानपेक्षा च स्यात्, अस्ति च स्त्रीणां कर्म्मवैचित्र्यात् मायाचारवैचित्र्यमेव, अस्तु वा तद्, तद्वदेव कवलाहारक्रियाया अपि बुद्धिपूर्वकत्वेन मोहपूर्वकत्वाभावसिद्धेः, यदपि केवली कवलानाहरेत् किमर्थमित्याद्युक्तं तत्र वयं त्वामेवाभिपृच्छामः- कथंकारं नाहरेत्?, महोपसर्गसहनार्थं वा १ आतंकहेतोर्वा २ अंगसंन्यासहेतोर्वा ३ जीवदयाहेतोर्वा ४ तपोऽर्थं वा ५ ब्रह्मचर्यहेतोर्वा ६ आत्मनोऽनन्त-बलत्वख्यापनार्थं वा ७ अतिशयज्ञापनार्थं वा ८ परदृष्टिविषभयाद्वा ९ जुगुप्साहेतोर्वा १० नीहारादिभयाद्वा ११ अन्नस्याशौचाद्वा १२ निगोदादिजीवपीडाऽशुचिद्रव्येक्षाजातानुकम्पाजुगुप्साभ्यां वा १३-१४ सम्यग्ज्ञानदर्शनचारित्रपलायनभयाद्वा १५ अनन्तसुखत्वाद्वा १६?, नाद्यौ, तयोर्भगवति अनंगीकारात्, न तृतीयः, भगवतः कृतकृत्यत्वेनांगसंन्यासस्यानर्थकत्वात्, न तुर्यः, प्रासुकाहारेणापि तद्भावात्, अन्यथा संयतानां तदुपादाने प्राणिघातेनासंयतत्वापातात्, न पंचमोऽनंगीकारात्, इच्छानिरोधलक्षणं तपस्तु स्थानादिक्रिया-वदस्यानिषेधकत्वात्, न षष्ठो, ब्रह्मचर्यस्य अस्माभिरपि अनपेयत्वात्. किं नाम कवलाहारेण वराकेण?, अन्यथा संयतानामपि

ब्रह्मचर्यहेतो कवलाहारो निवार्यः स्यात्, न चैतदस्ति, यदुक्तं वीरनन्दिभट्टारकेण-' क्षुच्छान्त्यावश्यकप्राणरक्षाधर्म्मधमा मुनेः । वैयावृत्यं च षड् भुक्तेः, कारणानीति यन्मतम् ॥१॥" न सप्तमः, अनन्तबलस्य भवन्नये छाद्मस्थ्येऽपि स्वीकारात्, तत्रापि कावलिकाहाराभावानुषङ्गात् , अथ तद्बलं भिन्नम् इदं तु सकलवीर्यान्तरायक्षयजन्यमन्यदेव, क्षायोपशमिकक्षायिकयोर्वैलक्षण्यादिति चेत्, सत्यम्, अस्मन्नयेऽपि मेरुप्रकम्पादिना बलातिशयात्, परं शारीरं बलं क्षायोपशमिकं वीर्यं वा न कवलाहारविरोधकं तर्हि अनन्तानन्तद्रव्यपर्यायपरिच्छेदकत्वलक्षणशक्तिस्वरूपं किं तद्विरुद्धं ?, तदेवार्हति अनन्तवीर्यं मन्तव्यं, नान्यत्, यदुक्तं भावप्राभृतवृत्तौ "केवलज्ञानदर्शनाभ्यां अनन्तानन्तद्रव्यपर्यायस्वरूपपरिच्छेदनत्वलक्षणशक्तिरनन्तवीर्यमुच्यते, न तु कस्यचिद् घातकरणे भगवान् बलं विदधाति, सूक्ष्मगुणभावप्रसक्तेरिति ' बल सोक्खे ' ति गाथाव्याख्यायाम्, एवमनन्तसुखमपि भगवतोऽनन्तगुणसमुद्भवात् परमानन्दोत्पत्तिलक्षणमेव ज्ञेयम्, तथा चोक्तं विमानपङ्क्त्युपाख्यानपर्यन्ते--"शास्त्रं शास्त्राणि वा ज्ञात्वा, तीव्रं तुष्यन्ति साधवः । सर्वतत्त्वार्थविज्ञाना, न सिद्धाः सुखिनः कथम्? ॥ १ ॥" इति, एतेन यदुक्तं-'क्षुधायामनन्तबलमनन्तसुखं वा दुर्लभ' मिति निरस्तं, तयोः कवलाहाराविरोधात्, तेनैवादिपुराणे--सिद्ध्यै संयमयात्रायास्तत्तनुस्थितिमिच्छुभिः । ग्राह्यो निर्दोष आहारो, रसासंगाद्विनर्षिभिः ॥ १ ॥ भगवानिति निश्चिन्वन्, योगं संहृत्य धीरधीः । प्रचचाल महीं कृत्स्नां, चालयन्निव विक्रमैः ॥ २ ॥" इति २० पर्वणि ऋषभगोचरचारो। नाष्टमो मानासम्भवात्, न नवमो भयाभावात्, न दशमः स्वयं जुगुप्साशून्यत्वात्, अन्येषां जुगुप्सा भविष्यतीति मया नाहर्त्तव्यमेवं वार्तागन्धस्य अप्यभावाच्च, अन्यथा नाग्न्ये मम जुगुप्सा भविष्यतीत्याशयेन चेलादानमपि स्यात्, नाप्येकादशो, यतोऽत्रादिशब्देन किं विवक्षितं,? मतिज्ञानप्रसक्ति १ र्ध्यानविघ्नो वा २ परोपकारकरणान्तरायो

वा २ विसूचिकादिव्याधिर्वा ४ इर्यापथो वा५धातूपचयादिना रिरंसा वा६निद्रा वा७१, नाद्यः, पुरो देवादिगाने नृत्यविधाने गन्धोदक पुष्पवृष्टौ चतुःषष्टिचामरोद्भाव्यमानांगस्पर्शिपवने च मतिज्ञानानुषंगात्, तत्परिहारस्याशक्यत्वात्, न च कवलाहारः सुखेन त्यज्यते, परवस्तुदर्शनादि दुस्त्यजमिति वाच्यम्, कवलाहारस्य रसज्ञानकारणवद्रूपज्ञानकारणचक्षुषोरपि मुद्रणादिना सुत्यजत्वात्, अथ तयोर्मेषो नास्तीति चेत्, न, मनुष्यगतौ यावज्जीवं नैरुज्ये तत्सम्भवात्, एतदतिशयस्य प्रतिवाद्यनङ्गीकारोऽपि, न द्वितीयो, ध्यानस्य किंचिदूनपूर्वकोटिं यावदनवस्थानादित्युक्तं प्राक्, अपिच-ध्यानस्य महान् कालो न भवत्येव, यदुक्तं भावप्राभृतवृत्तौ–"मुहूर्त्तमध्ये ध्यानं भवति, न चाधिकः कालो ध्यानस्यास्ति, एतावत्यपि काले प्रलयकालमारुतवत्कर्म्मध्वंसाय ध्यानं भवती" ति, न चैवं लोके दुर्ध्यानस्यापि न महान् कालः सम्भवतीति ज्ञेयं, तत्रापि रौद्रार्त्तयोः परिवर्त्तनेनैव षष्ठसप्तमगुणस्थानादिवत् कालमहत्त्वात्, केवलिनस्तु ध्यानमेव पर्यन्तबादरयोगरोधादर्वाग् न सम्भवति, ध्येयाभावात्, अत एव त्वन्मयेऽपि आदिपुराणे २१ पर्वणि "छद्मस्थेषु भवेदेतल्लक्षणं विश्वदृश्वनाम्। योगाश्रवस्य संरोधे, ध्यानत्वमुपचर्यते ॥ १ ॥" इत्युपचारो, न वस्तुगतिः, न तृतीयः, परोपचिकीर्षाया अभावात्, यश्च धर्म्मोपदेशः स स्वभावत एवेति तवांगीकारात्, अस्मन्मते तु तृतीययाम एव भगवद्भुक्तेः शेषमशेषकालमुपकारकरणात्, न तुर्यः, परिज्ञाय हितमिताभ्यवहारात्, न पंचमः, गमनादावपीर्यापथवृत्त्या विहाराभावानुषंगात्, गगनगमनेऽपि बादरकाययोगानपायात्, न षष्ठसप्तमौ, रिरंसानिद्रयोर्मोहदर्शनावरणकार्यत्वात्, तदभावादेव अवशिष्टो नीहारः स तावदस्मन्मतेऽस्त्येव, परं चादृश्यत्वान्न दोषाय, तथापि तव नैतत् पर्यनुयोज्यं, यतो हि त्वया मन्यते छाद्मस्थ्येऽपि भगवतः कवलाहारे सत्यपि नीहारो नास्तीति ॥ नापि द्वादशः अतीतानागतयोः पर्याययोर्विनष्टानुत्पन्नत्वेनाकिंचित्करत्वाद्, अन्यथा कथं

सिंहासनमध्यास्ते ? कमलेषु पादौ न्यस्यति?, अनन्तशस्तेषामपि तथाभूतत्वात्, यद्यपि 'विष्टरं तदलंचक्रे, भगवानादितीर्थकृत् । चतुर्भिरंगुलैः स्वेन, महिम्नाऽस्पृष्टतत्तलः ॥ १ ॥ इत्यादिपुराणोक्त्या तदस्पर्शस्तथापि विचालस्थपुद्गलानामपि तथाभावात्, कथं वा उच्छ्वासयोग्यभाषायोग्यनोकर्म्माहारयोग्यपुद्गलानुपादत्ते ?, तेषामपि तथाभूतत्वात्, न चैतेषां स्वभावादागतिरुच्छ्वासादिपर्याप्तीनां वैयर्थ्यापत्तेः, स्वभावस्य प्रागेव तिरस्कृतत्वाच्च, अथ ते तु पूर्वं तथापरिणता इदं तु ध्यानादि कुत्सितभूमौ उत्पन्नं कुत्सितवस्तुसम्पर्कजं निन्द्यपुरुषैः स्पृष्टमस्मिन्नेव पर्याये इति चेत्, न, छाद्मस्थ्येऽपि तज्ज्ञानसम्भवेन कवलाहारनिषेधापत्तेः, नापि त्रयोदशः, अनुकम्पाकारकत्वेऽपि अस्मदादिवन्न तत्राशयसिद्धिः, माऽस्तु वाऽनुकम्पा, तेषां जीवानां स्वकृतकर्म्मफलभोक्तृत्वाद्, अन्यथा केवलज्ञानं महादुःखसाधनं स्यात्, येन तत्पुरा स्वदुःखेन दुःखितः स्यात् तदुत्पत्तौ तु समकालं जगद्दुःखदुःखीति, आस्तां केवलित्वे वीतरागत्वं छाद्मस्थ्ये वीतरागत्वमेव वरं येनैतद् दुःखं न स्यात्, किंच तदनुकम्पया स्वयं दुःखार्त्तो वा भवति जुगुप्सावान् वा रागार्द्रचेता वा भयवान् वा ?, नाद्यः, अनन्तसुखे जलाञ्जलिदानात् असातवेदनीयोत्कर्षाच्च, शेषपक्षाणां प्रागेव निरासः, नापि चतुर्दशः, अनन्तरमेवोत्तरदानात्, नापि पञ्चदशः, तेषामप्रतिपातित्वात्, नापि षोडशः, तस्य वेदनीयद्वयसत्तायामभावात्, यत्परमानन्दहेतुः अनन्तवस्तुपरिच्छेदनरूपमनन्तसुखं भगवति तन्न कवलाहारप्रतिबन्धकमित्युक्तं प्रागेव, अन्यथा भवस्थसिद्धयोः क्षुधाद्यभावेन न किमप्यन्तरं स्यात्, एवं सातोदयोऽपि न तद्बाधकोऽन्तर्मुहुर्त्तेन तस्य परिवर्त्तनात्, योऽपि विपच्यमानतीर्थकरनाम्नो देवस्य च्यवनकाले षण्मासीं यावदत्यन्तसातोदयः सोऽपि परेषां देवानां च्यवनकाले 'श्रीह्रीनाशो वाससां चोपराग' इत्यादिलक्षणानामभावव्यञ्जक एव, न पुनरसातोदयनिषेधकः, सशरीरस्य यावद्भवं तदुभयसद्भावात्, देवानां नारकाणां च सातासातान्यतर-

निश्चये प्राधान्याप्राधान्यस्यैव नियामकत्वात्, "ओसन्नं सुरमणुए सायमसायं च तिरियनरएसु" इत्यत्र प्रायोभणितेः, यदागमः, 'नेरइयाणं भंते! किं सायं वेदंति असायं वेदंति सायासायं वेदंति?, गोयमा! तिविहंपि वेदणं वेदेंति, एवं सव्वजीवा जाव वेमाणिया" इति प्रज्ञापनासूत्रे ३५ पदे, अस्तु वा भगवति बहुतरसद्वेद्योदयजन्यं सातं, परं तस्य नानन्त्यं, कारणसद्भाव एव भावात्, तथा च भूयान् सातोदयोऽल्पस्त्वसातोदय इति स्थितं, परं न किमपि केनाचिद् बाध्यते, तदुदयाभावप्रसंगात्, अन्यथा द्वादशमगुणस्थान एव मोहाभावात् सकलघातिकर्म्मणां नैर्बल्येन केवलोदयः स्यात्, तेन मोहस्य दशमगुणस्थाने विशिष्टविशुद्ध्या क्षपणीयत्वात्, वेदनीयस्य यावद्भवस्थितत्वेनानन्तगुणविशुद्ध्याऽपि अजेयत्वेन बलवत्त्वात्, अत एव 'इह नाणदंसणावरणवेयमोहाउ' इति घातिकर्म्मपंक्तौ सूत्रे तस्योद्देशः, यत्र तु कुत्रचिन्मोहस्याधिक्यं तन्मिथ्यापेक्षयैव ध्येयम्, अन्यथा सर्वेषां कर्म्मणां स्वस्वकार्यविषये बलीयस्त्वात्, विपक्षे कर्म्मसंकरात् कर्म्मैक्यानुषंगः, एतेन भास्वत्प्रभामण्डले प्रदीपवदित्यादि प्रत्यादिष्टं, तत्तद्भावानां तदुपमर्दकत्वेनात्र तदभावाद् दृष्टान्तवैषम्यात्, योऽप्याश्चर्यत्वेन स्वीकारः तत्रापि षण्मासीं यावदसातोदयेन रोगनैरन्तर्यासम्भवात् तीर्थंकराणामेव, परेषां केवलिनां तथात्वेऽनाश्चर्यत्वात, गजसुकमालाद्यन्तकृत्केवलिवत्, यथापूर्वबन्धं तदुदयनैयत्यं, तेन 'निंबरसलवुव्व पए' इत्यत्र सातस्य पौद्गलिकस्याध्यात्मिकस्यैकत्वेन विवक्षया प्रवर्द्धमानत्वं परस्यासातस्य क्रमतोऽनुपचीयमानत्वमेव व्यक्तम्, यदपि मोहसहकारिकल्पनं तदपि न यौक्तिकं, गत्यादीनां पंचाशीतिप्रकृतीनां तत्साहचर्येणोपनिबद्धानां सर्वासां स्वस्वविषये सम्बद्धानां स्वीकारे केवलमसातस्यैवाकिंचित्करत्वे पक्षपातप्राकट्यात्, यद्यसाताद्यकिंचित्करं कर्मजालं तर्हि तत्समीकरणार्थं कथं केवलसमुद्घातः स्याद्भिरूयातः, अथाशुभप्रकृतय एव तस्य साहाय्यक्रमपेक्षन्ते नान्या गत्यादयस्तेन सातं स्पष्टमसातं न किंचिदिति

चेत्, न, नियामकाभावात्, व्याप्तिग्रहस्तु यथाऽस्मदादिषु शुभानां तथाऽशुभानामपि मोहसाहचर्ये इति न किंचिदेतत् । किंच- मोहाभावेऽपि क्षीणकषायभावे गुणस्थाने गमनाक्रियाभाव एव ध्यानासननियमात् स्वीक्रियते तर्हि कथं सयोगिनि प्रशस्तविहायो- गत्युदयः स्वीक्रियते ?, अस्मदादिषु तस्या मोहेनान्वयात् क्षीणकषाये व्यतिरेकाच्च, अस्माकं तु नायं दोषः, गच्छतां भुंजानानां क्षपकश्रेणेरंगीकरणात्, अपिच- मोहाभावादेवासाताकिंचित्करता तर्हि कवलाहाराभावोऽतिशयः किमभ्युपेयते ?, मोहरूपसहकारि- जनितज्ञानावरणीयादिजन्याज्ञानाद्यभाववत्, आतिशयस्तु स एव यत्कारणं सदपि कार्यजननाय नोच्छ्वसति, अग्न्यादिसमवधाने दाहाभावजनकमण्याद्यतिशयवत् वेदनीये सत्यपि उपसर्गाभावरूपातिशयवद्वा, अन्यथा मतिज्ञानाभावादीनामपि आतिशये परिग- गणना स्यात्, अस्मन्मते तु नायमपि दोषः, रुजाद्येकादशातिशयानां लोकेषु तत्कारणे कर्म्मणि सत्यपि कार्यानुदयरूपत्वात्, अपि चअयमतिशयोऽर्हत एव तर्हीतरकेवलिनां कवलाहारप्रसंगः, न चैतेऽतिशयाः सार्वत्रिकाः, क्षीरगौररुधिरत्वादेर्धर्म्मचक्रादेरसम्भवात्, एतेन मोहस्य सहकारित्वं ध्वस्तं । यच्चार्हतः कृतकृत्यत्वं तदपि नैकान्तेन, सयोगिकेवलिनश्चतुर्गतिभ्रमाभावात् संसारान्तप्राप्त्य- भावाच्च, ईषत् संसारो नोसंसार इति भावसंग्रहे भणनात्, तस्य भवोपग्राहिकर्म्मणां सद्भावात्तीर्थकरनाम्नः प्रकृतेर्द्धर्मोपदेशा- दिनैव संवेदनात्, यदुक्तं चावश्यकनिर्युक्तौ- 'तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं ।' आदिशब्दाद्विहारादिग्रहः, तत एव त्वदुक्तिरपि-ततः परार्थसम्पत्त्यै, धर्म्ममार्गोपदेशने' इति, तथा-परार्थं स कृतार्थोऽपि, यदैहिष्ट जगद्गुरुः । तन्नूनं महतां चेष्टा, परार्थैव निसर्गतः ॥ १ ॥ इत्यादिपुराणे । एवं जरद्वस्त्रप्राया इत्यत्रापि वर्त्तमाने शतुरानयनेन नूतनोपचयो नासद्वेद्यस्येत्येव पर- मार्थः, व्याख्यायां तु क्तप्रत्ययो वर्त्तमाने भूतोपचारादेव, उत्पाद्यमाने घटे घटत्वप्रतीतिवत्. अन्यथा सातावेद्यायुःप्रभृतयः सर्व-

प्रकृतयोऽकिंचित्कराः स्युः, तच्च तवाप्यनभीष्टमेवेति, अत एव पाण्डवानां भवदागमेऽपि दुष्टकृतोपसर्गे सातोदयो महीयान् श्रूयते, ततः स्थितमेतत्-मोहाभावे सद्वेद्यं नाकिंचित्करमिति। ननु आहारविषयाकांक्षा एव क्षुद् आकांक्षा चाहारपरिग्रहबुद्धिः, सा तु मोहविकृतिरेवेति कथं क्षुधं जिने श्रद्दध्म इति चेत्, न, अस्मत्प्राचामाचार्याणामेव तत्समाधानात्, यदुक्तं सूत्रकृद्वृत्तौ विशुद्धशीललीलालीलावतीलालनानलसैः श्रीशीलांकाचार्यधुर्यैः- यतो मोहविपाका क्षुन्न भवति, तद्विपाकस्य प्रतिपक्षभावनया प्रतिसंख्यानेनानिवर्त्यमानत्वात्, तथाहि- कषायाः प्रतिकूलभावनया निवर्त्यन्ते, तथा चोक्तम्-उवसमेण हणे कोहं, माणं मद्दवया जिणे। मायं चऽज्जवभावेण, लोहं संतुट्ठिए जिणे ॥ १ ॥' मिथ्यात्वसम्यक्त्वयोश्च परस्परनिवृत्तिर्भावनाकृता प्रतीतैव, वेदोदयोऽपि विपरीतभावनया निवर्त्तते, तदुक्तम्- 'काम! जानामि ते मूलं, संकल्पात् किल जायसे। ततस्तं न करिष्यामि, ततो मे न भविष्यसि ॥१॥ हास्यादिषट्कमपि चेतोविकारतया प्रतिसंख्यानेन निवर्त्तते, क्षुद्वेदनीयं तु रोगशीतोष्णवज्जीवपुद्गलविपाकितया न प्रतीपवास-

१ संज्ञा आगमसिद्धा वांछा संज्ञा अभिलाष इतियावत् इति गोमट्टसारे गुणजीवा पज्जत्तीति गाथावृत्तौ, तेन आहारप्राप्तिचिन्तनाभावात् निर्ग्रन्थादीनां यथाख्यातसंयमे आहारसंज्ञैव नास्ति, ततः कथं केवलिन्याहार इत्यपि न, संज्ञानं संज्ञा भूतभवद्भविष्यदर्थपर्यालोचनं बुद्धिरिति कर्म्मग्रन्थवृत्तौ संज्ञानं संज्ञा आभोगो यद्वा संज्ञायते अनया जीव इति संज्ञा आत्मपरिणामविशेष इति प्रज्ञापनावृत्तौ दिक्पटमते पंचसंग्रहे सिक्खाकिरिउवदेसा इत्यादिगाथावृत्तौ बोधनं वा संज्ञा सा विद्यते यस्य स संज्ञीति संज्ञाशब्देन बुद्धिव्याख्यानात्, न चेत्केवलिनोऽसंज्ञित्वापत्तिरिति ।

नामात्रेण निवर्त्तते, अतो न मोहविपाकस्वभावा क्षुदि"ति, अथैतस्या अपि सन्तुष्टिभावेन जीयमानत्वात् कथं न मोहविपाकता ?, दृश्यन्ते च लोके स्तोकेऽपि आहारे सन्तोषं कुर्वाणाः संयतादयः क्षुन्निरासकृतः, अन्यथा ऊनोदरतातपो निवार्यं स्यात्, स्वाध्याया-दिविघातकारित्वप्रसक्तेः, न चैतस्या जीवपुद्गलविपाकित्वं मोहविपाकाभावं भावयति, वेदनीयस्यापि केवलजीवविपाकित्वात्तस्या-प्यभावप्रसक्तेः, यदुक्तं गोमट्टसारे कर्म्मकाण्डे-'वेदनीयद्वयं गोत्रद्वयं घातिसप्तचत्वारिंशन्नामसप्तविंशतिश्चेत्यष्टासप्ततिर्जीवविपाकिन्यो भवन्तीति' वृत्तौ, क्रोधादेर्मोहविपाकस्यापि भ्रूभंगत्रिवलीतरंगितालकफलकक्षरत्स्वेदजलकणनेत्राघाताम्रत्वपरुषवचनवेपथुप्रभृति-शारीरविपाककारित्वादिति चेत्, न, एवं सति परिग्रहसंज्ञायामेव तस्या अन्तर्भावः स्यात्, आहारसंज्ञायाः पृथग्बीजस्यानुपपत्तेः, तथा च गोमट्टसारे- 'आहारदंसणेण य तस्सुवओगेण ओमकोट्ठाए। सादीदरुदीरणाए हवइ हु आहारसण्णा हु ॥ १३० ॥' विशिष्टान्नादिचतुर्विधाहारदर्शनेन तत्स्मरणकथाश्रवणाद्युपयोगेन रिक्तकोष्ठतया चेति बाह्यकारणैः असातवेदनीयोदीरणातीव्रोदया-भ्यामन्तरंगकारणाभ्यां चाहारसंज्ञा भवति-जायते, आहारे-विशिष्टान्नादौ संज्ञा इति तद्वृत्तिः। तथा क्षुधादिवेदनानां तीव्रोदय इति द्रव्यसं-ग्रहवृत्तौ। वेदनीयजन्याश्चैकादश परीषहा इतितत्त्वार्थसूत्रे प्रोक्तं कथं सम्पनीपद्यते?, यत्तु 'मायालोहे रदिपुव्वाहार'मिति गोमट्टसारसूत्रं

२ अनशनाध्वरोगतपःस्वाध्यायवेलातिक्रमावमौदर्यासद्वेद्योदयादिभ्यो नानाहारेन्धनोपरमे जठरानुदाहिनी मारुतांदोलिताग्निशिखेव समन्ता-च्छरीरेन्द्रियसंक्षोभकरी क्षुद्वेदनोत्पद्यते इति भावनासंग्रहे 'उवयरणदंसणेण य तस्सुवओगेण मुच्छिदाए य। लोहस्सुदीरणाए परिग्गहे जायदे सण्णा ॥ १ ॥' इति गोमट्टसारे परिग्रहसंज्ञायाः पृथग् बीजकथनम्।

तदपि रतिपूर्विकाया आहारसंज्ञाया अस्मदादेरेव लोभान्तर्भूतत्वसाधकं,परं न आहारसंज्ञाया रतिकर्मपूर्वकनियमसाधकं,नोकर्म्माहारिणि भगवत्येव त्वन्नये व्यभिचारात्,अत एव विशिष्टायास्तस्या मायालोभौ बीजं, न केवलाया इति, तत एव स्थानांगे-'तओ नियंठा णोसण्णोवउत्ता पं०, तं० पुलाए णियंठे १ सिह्वे २ सिणाए ३' अत्र पूर्वानुभूतस्मरणानागतचिन्ताद्वारेणोपयुक्ता इतीदृशाहारसंज्ञाया विशिष्टाया निषेधः, ततः संज्ञानं संज्ञा-आभोगः, सा द्विधा-क्षायोपशमिकी औदयिकी चेत्यादि प्रवचनसारोद्धारवृत्तौ प्रज्ञापनावृत्तौ च, तेनाहारसंज्ञाबीजं वेदनीयं पृथगेव, नन्वेवमाहारसंज्ञा अर्हति सिध्यतीति चेत्, सत्यं, संज्ञानं संज्ञा बुद्धिरित्यर्थश्चेन्न विरोधः, स्थानविहारादीनां बुद्धिपूर्वकत्ववत्, यथा चैतत्तथा साधितं प्राक, यदि संज्ञा वांछा इत्यर्थः तदा मोहरूपत्वाद्विरोध एवेति, न चास्या आवश्यकत्वं, ध्यानादिक्रियाणामिच्छां विनाऽपि केवलिनामिष्टत्वात्, समुद्घातकरणवत्, अपिच-यदि मोहविपाक एव क्षुत् स्यात् तर्हि मिथ्यादृष्टेर्बहुमोहसद्भावाद् बहुक्षुधा, सम्यग्दृष्टेरल्पा, न चैतदननुभवात्, अथ मोहमन्दता तत्र कारणमिति चेत्, न, मन्दताऽपेक्षया क्षयस्याधिक्यात्, यस्तु सन्तोषेण क्षुधाजयस्तत्र जठरस्य पवनेनापूर्यमाणत्वाद्वेदनीयोपशान्तेरेव, न चेत्तपःकृतं कार्श्यं न स्यात्, ननु अप्रमत्तादारभ्य वेदनीयस्योदीरणा नास्ति ततो न प्रभूतपुद्गलोदयोऽपि, तेन केवलिनो वेदनीयस्य दग्धरज्जुसमानत्वात् तत्कृता क्षुत् कथं प्रभवति ?, तस्या बुभुक्षा भोक्तुमिच्छेत्यभिधेयत्वादिति, तदपि मन्दम्, अविरतसम्यग्दृष्ट्यादिष्वेकादशगुणस्थानेषु वेदनीयस्य गुणश्रेणीसद्भावात् प्रचुरप्रचुरपुद्गलोदयेन विपर्ययस्यापि सम्भवेन क्षुदतिशयात्, अथ प्रदेशतः प्राचुर्येऽपि न रसाधिक्यमिति चेत् सातोदयस्यापि तादृूप्याद्वैरस्यसम्भवः, ततो नोदीरणाभावात् क्षुदभावः साधीयान्, "क्षुत्पिपासाशीतोष्णदंशमशकचर्य्याशय्यावधरोगतृणस्पर्शमलाख्या वेदनीयोदयजन्याः परीषहा" इत्यागमात्, तदनु-

पाति सूत्रमपि, तदुक्तं श्रीउमास्वातिवाचकैस्तत्त्वार्थे–'सूक्ष्मसम्पराय (च्छद्मस्थ) वीतरागयोश्चतुर्दश, एकादश जिने' इति, मिथ्यात्वादिसप्तगुणेषु सर्वे परीषहाः, अदर्शनपरीषहं विना एकविंशतिरपूर्वकरणे, अरतिं विना सवेदानिवृत्तौ विंशतिः, अवेदानिवृत्तौ स्त्रीपरीषहं विनैकोनविंशतिः, तस्यैव मानाभावे नाग्न्यनिषद्याक्रोशयाचनासत्कारैर्विना तदग्रेऽनिवृत्तिसूक्ष्मोपशान्तक्षीणगुणेषु चतुर्दश, प्रज्ञाऽज्ञानालाभैर्विना सयोगे एकादश, वेदनीये क्षुत्पिपासाशीतोष्णदंशमशकचर्य्याशय्यावधरोगतृणस्पर्शमला इति भावनासंग्रहे, एतेन क्षुधो मोहकार्यत्वं परास्तं, मोहाभावेऽपि क्षुद्भावात्, न चैतच्छून्यगृहे निमन्त्रणमात्रं, वेदनीयसद्भावात्, न तु फलवदिति वाच्यं, उपसर्गेतरासिद्धस्वीकारवैयर्थ्यात्, यदि तावती उपसर्गहेतुर्वेदना फलवती प्रतीयते तर्हि वराक्याः क्षुधः पराकरणे वाङ्मात्रमेव, एतेन "ते दोसा पुण सव्वे छुहाइया नत्थि केवलिणो" इति भावसंग्रहादिअर्वाचीनग्रन्थसन्दर्भः प्रत्याख्यातः, यदपि 'सामग्री जनिका नैकं कारण' मिति तत् सत्यं, परं मोहस्य तत्सामग्रीरूपत्वमेव नास्ति, सामग्री तु प्रक्षेपाहारमात्रस्य पर्याप्तत्वं त्रसत्वं नरतिर्यक्त्वं वेदनीयोदयस्तैजसं शरीरमाहारपाक्तिनिमित्तं योनिनिर्गमादि दीर्घायुष्कत्वं चेति, सा च सम्पूर्णैव, तथा च प्रयोगः-अस्ति केवलिनो भुक्तिः, समग्रसामग्रीकत्वात्, पूर्वभुक्तिवत्, तथाहि—तैजसशरीरेण मृदुकृतस्याहृतद्रव्यस्य स्वपर्याप्त्या परिणामितस्य उत्तरोत्तरपरिणमनेन प्रकारेण क्षुदुद्भवो भवति, इत्येवं समवहिता सामग्री कार्यमर्जयति, योऽपि सैन्यनायकदृष्टान्तः

१ अत्र दिक्पटो यथा विषं मन्त्रादिना विफलं मूलं विना पुष्पं विफलं यथोपेक्षावतोरनिवृत्तिसूक्ष्मसम्पराययोर्मैथुनसंज्ञा परिग्रहसंज्ञा चाफला यथा केवलिनि एकाग्रचिन्तानिरोधाभावेऽपि कर्म्मरजोविधूननफलसम्भवाद् ध्यानोपचारस्तथा क्षुधाद्युपचार इति

सोऽपि न किंचित्, तदभावेऽपि त्वन्नये अघातिवर्ग्गस्य चारित्रमालिन्यजननकथनात्, यदि च मोहक्षयजनितचारित्रेऽपि मलजननं तर्हि स्वकार्यजननसामर्थ्ये किं प्रष्टव्यं ?, यदुक्तं द्रव्यसंग्रहवृत्तौ "ननु केवलज्ञाने प्राप्तेऽपि किं विशुद्धिविशिष्टं गुणस्थानद्वयमिति चेत्, सयोगिकेवलिनो यथाख्यातं चारित्रं, नतु परमयथाख्यातं, चौराभावेऽपि चौरसंसर्गिवत् मोहोदयाभावेऽपि योगत्रयव्यापारः चारित्रमलं जनयती" ति, ततः केवलिप्रकृतीनां दग्धरज्जुकल्पत्वमिति मिथ्या प्राकृतलोकोक्तिः, अर्हत्सु मुक्तत्वं तदुपचारादेव, न तत्त्वतः, क्रियाकलापवृत्तौ—"नष्टाष्टकर्म्मसमये अयोगिचरमसमये शिवमरिष्ठनेमिरुज्जयन्ताद्रौ प्राप्तवानि" ति व्याख्यानात्, शयनादिप्रसङ्गस्तु निद्रानिषेधादेव प्रत्युक्तः, भगवतो नीहारस्यादृश्यत्वादितरकेवलिनां तु विविक्तदेशे करणान्न दोषः, कवलग्रहणधारणयोस्त्वात्मप्रयत्नजन्यत्वेन वीर्यान्तरायाभावकार्यत्वं, इच्छापूर्वकग्रहणधारणयोरेव मोहकार्यत्वात्, अन्यथा संयतानामपि ग्रहणधारणे न स्यातां, इच्छया तद्ग्रहणे महाव्रतस्यैवाभावप्रसङ्गात्, यदुक्तं समयसारवृत्तौ—"अपरिग्गहो अणिच्छो भणियो णाणी य णेच्छए असणं । अपरिग्गहो हु असणस्स जाणगो तेण सो होइ ॥१॥" इच्छा-परिग्रहः, तस्य परिग्रहो नास्ति यस्येच्छा नास्ति, इच्छा त्वज्ञानमयो भावः, स तु ज्ञानिनो नास्ति, ज्ञानिनो ज्ञानमयभावोऽस्ति, ततो ज्ञानी अज्ञानमयस्य भावस्य इच्छाया अभावादशनं नेच्छाति, तेन ज्ञानिनोऽशनपरिग्रहो नास्ति, ज्ञानमयस्यैकस्य ज्ञायकभावस्य भावाद् अशनस्य केवलं ज्ञायक एवायं स्या" दिति तद्वृत्तिः, एवं प्रवचनसारवृत्तौ "एककालाहार एव युक्ताहारो, नानेककालः, तस्य शरीरानुरागसेव्यत्वेन प्रसह्य हिंसाऽऽयतनीक्रियमाणत्वात्," एतेन कवलाहारो रतिपूर्वक एवेति निरस्तं, न च द्रव्यादिग्रहणप्रसंगोऽनर्थकत्वाच्चारित्रविरोधात्,

१ "पव्वज्जा- अत्थगहणेणे" ति वचनात्

न चैतत् कवलाहारेऽस्ति, संयतानामपि चारित्रविरोधात्, नेष्टापत्तिः, सूक्ष्मसाम्परायिकयथाख्यातचारित्रद्वयेन कवलाहारस्य विरोधे प्रमत्तसंयतचारित्रस्यापि विरोधापत्तेः, न ह्यर्कविरुद्धं[२] तमो न दीपविरुद्धमिति प्रसिद्धम्, एवमस्मदादिज्ञानेन कवलाहाराविरोधे सर्वज्ञज्ञानस्याप्यविरोधो मन्तव्यः, निर्दयत्वं यदारोपितं तच्च कृतोत्तरमेव, न हि श्रुतकेवलिनः श्रुतबलेन सर्वमध्यक्षमिव पश्यतो भुञ्जानस्य निर्दयत्वं श्रद्धीयते, यदपि जटिलादीनामकवलाहारत्वं तन्मिथ्यारूपं, छाद्मस्थ्ये यदि तीर्थकरैरपि कवलैराहृतं तर्हि किं नामैभिर्वराकैर्जटिलैः कर्त्तव्यं?, न च योगमाहात्म्योपयोगिनस्तीर्थकरा भवेयुः, लब्ध्युपजीवने प्रमत्ततानुषंगात्, यदुक्तं महापुराणे—"सत्योऽपि लब्धयः शेषास्त्वयि नार्थक्रियाकृतः। कृतकृत्ये बहिर्द्रव्यसम्बन्धो हि निरर्थकः ॥ १ ॥" इति २४ पर्वणि, एवं भूताविष्टेऽपि वाच्यं, यदपि परमौदारिकं स्वीक्रियते तेनापि नाकवलाहारित्वं, तथाहि—यदि सप्तधातुमध्येऽन्यतमवर्जितं शरीरं स्यात्तदा तत्र कार्मणतैजसयोर्न स्थितिः स्यात्, तेनैव रुधिराभावे चिकित्सकैः कालप्राप्तिरुच्यते, किंच--तच्छरीरं पूर्वस्माद्देहाद्भिन्नमभिन्नं वा ?, भिन्नं चेद्भवान्तरप्रसंगो द्रढीयानेव, न चावस्थाविशेषवत् सर्वथा न भेद इत्याशङ्क्यं, तेजोमयत्वाद्धातुवर्जितत्वात् स्फटिकरूपत्वाद् बहुधा भेदाद् अन्यथा पूर्वं कवलाहाराधीनस्थितिकं परमौदारिकं नोकर्म्माहाराधीनस्थितिकमिति न प्रतिपत्तव्यं, तेन स्वीकुरु भवान्तरं त्यज वा सर्वथा वैरूप्यम्, अथ भवान्तरे तत्पूर्वशरीरत्याग एव, अस्मिंस्तु परिणतिभेद एव, न पुनस्तत्त्याग इति चेत् कश्चात्र प्रतिषेद्धा ?, अस्मन्मतावेशात्, तीर्थकृच्छरीरं हि शेषजनेभ्योऽतिशायि स्यात्, यदाहुः

२ क्षायिकज्ञानस्य विरुद्धमज्ञानं, मतिज्ञानस्यापि विरुद्धं, क्षायिकसम्यक्त्वस्य विरुद्धं मिथ्यात्वं, तदौपशमिकादेरपीति ।

श्रीमानतुंगगुरवः—"यैः शान्तरागरुचिभिः परमाणुभिस्त्वं, निर्मापितस्त्रिभुवनैकललामभूत! । तावन्त एव खलु तेऽप्यणवः पृथिव्यां, यत्ते समानमपरं न हि रूपमस्ति ॥ १ ॥" अत एवानुत्तरसुरेभ्योऽप्यनन्तगुणं रूपं भगवत इति वयमप्यंगीकुर्म्मः, त्वन्नयेऽप्यादिपुराणे चतुर्दशपर्वणि ऋषभच्छाद्मस्थ्ये "तदस्य रुरुचे गात्रं, परमौदारिकाह्वयम् । महाभ्युदयनिःश्रेयसार्थानां मूलकारण- ॥ १ ॥ मिति, परं जन्मत एवेदृशं, न पुनः केवलेऽन्यद्रूपमिति विप्रतिपत्तिः, अथ सर्वथा भेदो जैनैर्नांगीकार्यः, परं वस्त्वन्तरमेव तादिति चेज्जातमेव भवान्तरं, न च तत्र सर्वथा भेद एव, मनुष्यस्य पुनर्मानुष्ये औदारिकत्वेनैक्यात् अवस्थाविशेषेऽपि सर्वथाऽनैक्याच्च, किंच-सप्तधातुवर्जितत्वे वज्रर्षभनाराचसंहननं न घटते, वज्राकारोभयास्थिसन्धिमध्ये वलयबन्धनं सनाराचं वज्रर्षभनाराचसंहननमिति त्वन्नये तल्लक्षणात्, तथा नामकर्म्मप्रकृत्यन्तरमापद्यते, तेजोमयत्वे हस्तपादाद्याकारोऽपि दुर्लभः, परवस्तुनः प्रतिघातोऽपि नोपपद्यते, अथ रत्नवत्तेजोमयत्वं चेत् कथं नखकेशयोः सत्ता?, तदभावे निर्वाणकल्याणकरणं दुर्घटं, दिवाकरसहस्रभासुरत्वे जनताचक्षुःप्रतिघाताद् दुर्दर्शता, कथं वा चतुस्त्रिंशदतिशयसाहित्यमेकत्र?, क्षीरगौररुधिरमांसत्त्वधातुवर्जितत्वयोरन्योन्यविरहात्, न चैकस्यामवस्थायां साहित्यं नास्त्येवेति वाच्यं "चउसट्ठिचमर सहिओ चउतीसहिं अइसएहिं संजुत्तो । " इति, तथा "दस पाणा पज्जत्ती अट्ठ सहस्सा य लक्खणा भणिया । गोखीरसंखधवलं मंसं रुहिरं च सव्वंगे ॥ १ ॥" इति दर्शनप्राभृतसूत्रे भावार्हद्वर्णनात्, भानुवत्तेजस्वितायां भगवति तदन्यकेवलिनां निवहे च विहरमाणे रात्रिंदिवव्यवस्था दुरास्थेया, तेजोरूपत्वे केवले ध्वनेरुद्भवः श्रद्धामात्रमेव, न तत्त्वं, तत एवापसिद्धांतः,-यदुक्तं बोधप्राभृते कुन्दकुन्देन-"एरिसगुणेहिं सहियं अइसयवंतं सुपरिमलामोयं । ओरालियं च कायं णायव्वं अरुहपुरिसस्स ॥ १ ॥" न चैतच्छाद्मस्थिकदेहवर्णनमिति, वृत्तिकृता तत्र परमौ-

दारिकः काय इति व्याख्याततत्वात्, "तेरहमे गुणठाणे सजोगि केवलिय होइ अरिहंतो। चउतीस अइसयगुणा हुंति हु तस्सऽट्ठ पडिहारा ॥ १ ॥ आहारो[1] य सरीरो तह इंदिय आणपाण भास मणे। पज्जत्ति गुणविसुद्धो उत्तमदेवो हवइ अरुहो ॥ २ ॥ मणुयभवे पंचिंदिय जीवट्ठाणेसु होइ चउदहमे। एए गुणगणजुत्तो[2] गुणमारूढो हवइ अरुहो ॥ ३ ॥ जरवाहिदुक्खरहियं आहारणीहारवज्जियं विमलं। सिंहाण[3]वण्णसेओ णत्थि दुगुंछाय देसो य ॥ ४ ॥ दस पाणा पज्जत्ती' इत्यादिना सूत्रकृताऽपि तद्वर्णनात्, ननु नामकर्म्मण औदारिकप्रकृतेरेव तथापरिणामादुपादानता निमित्तं तु घातिकर्म्मक्षय इति चेत् न, उपादानादुपादेयस्य भेदाभावात्, तथा च किं परमौदारिकदेहान्तरस्वीकारेण?, पूर्वस्माद‌भेदे कवलाहाराविरोधात्, अस्तु वा तेजोऽन्धकारयोरिव वैरूप्यं, तथापि हस्तपादाद्यवयवयोगितया वर्णेन तद्रूपतया प्रसिद्धेन भेदस्तवाशयसाधकः, यथा हि गणभृतां चक्रिणां वा शरीरं शेषजनेभ्यो विशिष्टमपि न परमौदारिकं तथाऽत्रापि वैशिष्ट्यमेव, न प्रकृत्यन्तरं तत्, अथातिशयवशाद्वैशिष्ट्यमेव भेदकं, तथा च केवली परमौदारिकवान् गगनगमनात् अप्राणिवधात् चातुर्मुख्यात् अच्छायत्वान्नेत्रनिमेषाभावात् कवलाहारं विना देशोनपूर्वकोटिस्थानयोग्यत्वात्, न यदेवं न तदेवं, यथाऽस्मदादिरित्यनुमानं तत्साधकमिति चेत्, न, आद्यस्य विद्याधरदेवपक्षिभिर्व्यभिचारित्वात्, द्वितीयस्य सिद्धैः, शेषाणां देवैः, अथ तत्र तत्तद्व्यतिरेको विशेषणमिति चेत्, न, व्यभिचाराभावेऽपि असिद्धेस्तादवस्थ्यात्, नखकेशवृध्द्यभावस्तु सिद्धोऽपि न परमौदारिकस्यौदारिकाद्भेदको, नखकेशसद्भावेन प्रतिपाक्षितत्वात्, 'नखकेशमिताऽवस्था, तवाऽऽविष्कुरुते विभो!। रसा-

१ शरीरेण प्रतिसमयं निरुपमपरमाणुग्रहणरूप आहारः। २ षट्चत्वारिंशद्गुणसंयुक्तः। ३ नासामलानिष्टवर्णप्रस्वेदा न।

दिविलयं देहे, विशुद्धस्फटिकामले ॥ १ ॥' इत्यादिपुराणे २५ पर्वणि, यदि च परमौदारिकं पूर्वदेहादभिन्नमेव तर्हि किमौदा-
रिकनिरूपणीया योगाः ?, तस्मादौदारिकविशेष एव परमौदारिकमिति न तच्छरीरकरणात् कवलाहारनिषेधः सुकरः, आदि-
पुराणे १४ पर्वणि 'तदस्य रुरुचे गात्रं, परमौदारिकाह्वयम् । महाऽभ्युदयनिःश्रेयसार्थानां मूलकारण ॥ १ ॥ मिति ऋषभप्रभोर्यौ-
वने राज्ये तत्कथनात्, योऽपि नोकम्माहारस्तत्रापि नौदारिकस्य तेन स्थितिर्युक्ता, वर्गणाकर्षणरूपस्याहारस्य केवलात् प्रागपि
सद्भावात्, न चापसिद्धान्तः, गोमट्टसारवृत्तौ तदुक्तेः, तथाहि-सूक्ष्मसम्परायगुणस्थाने गु.१ सूक्ष्म० जी१ प. ६ प्रा० १० सं. १
प ग० म इं १ पं. काय १ त्र यो ९ वे० क १ ज्ञा ४ सं० १ सूक्ष्म० द ३ ले ६ भा० १ स २ उ क्षा० सं० १ आ० १ उपयोग
७। उपशान्तगुणस्थाने गु १ उप जी १ प ६ प्रा १० सं० ग १ म इं १ पं का १ त्र यो ९ वे० क० ज्ञा ४ सं १ यथा द ३ ले६
भा· १ भ १ स २ उ० क्षा० सं· १ आ० १ उ ७ । क्षीणे गु १ जी १ प ६ प्रा १० सं० ग० १ म इं १ पं० का० १ त्र यो ९
वे० क० ज्ञा. ४ सं० १ यथा० द ३ ले ६ भा १ भ० १ स १ क्षा० सं० १ आ० १ उ० ७ इत्यादि· यद्यत्र वर्गणाकर्षणरूपो
नोकर्म्माहारो न भवेत्तदा कतरोऽयमाहारो?, न चास्मन्नयवत् कवलाहारं कुर्वतां क्षपकश्रेणिस्त्वन्नयेऽभ्युपेयते येन तदाहारसम्भवोऽपि,
न चान्यः कश्चिदाहारो लोमाहाररूपस्त्वया स्वीक्रियते, त्वन्मते ह्याहारस्य षट्प्रकारकत्वनियमात्, षण्णां भेदानामपि 'णोकम्मं
तित्थयरे' इत्यादि स्वामिनैयत्याच्च, किंच-यद्वर्गणाकर्षणं तत् किं सकारणमकारणं वा ?, कारणमपि घातिकर्म्मक्षयः परमौदारिकं
वा शक्तिविशेषो वा?, नाद्यः केवलज्ञानादिवन्नैयत्यप्रसंगात्, न द्वितीयः, प्राक् परास्तत्वात्, तृतीयश्चेन्न विवादः तत्र, अस्माभिरपि
तत्र शक्तिविशेषकारणिकलोमाहारस्यांगीकार्यत्वात्, यदवोचुः श्रीशीलांकाचार्याः- "कावलिकव्यतिरेकेण प्रतिसमयमाहारकः,

कावलिकेन तु कादाचित्क" इति, संग्रहण्यामपि लोमाहार उक्त एव केवलिष्विति, परं नासौ शरीरस्थितिहेतुस्तत्सत्त्वेऽपि कावलिकं विना क्षुधया शरीरापचयस्याध्यक्षत्वात्, अकारणिकं चेत् सिद्धानामपि तदाश्रवप्रसंगः, तथाऽर्हतां नोकर्म्माहारश्चेत् स्वीक्रियते तर्हि नोकर्म्मनीहारोऽपि कथं न सम्मतः ?, पुद्गलानां प्रतिक्षणं परिशाटात् इतरथा प्रतिक्षणं वर्गणाकर्षणे किंचिदूनपूर्वकोट्या शरीरस्थौल्यात्, अस्याहारस्य छाद्मस्थ्येऽपि सम्भवात् शरीरस्थितौ कवलाहारानुपपत्तिरपि, शरीरस्थित्यर्थं ज्ञात्वैव केवलिनो, वर्गणाकर्षणे अनन्तबलत्वानन्तसुखत्वे अपि स्वीकृत्य कवलाहारपरिहारप्रयत्नः सोऽपि विफलीस्यात्, तथा च 'कृतश्च शीलविध्वंसो, न चानंगः शर्म गत' इति न्यायः सम्पन्नः, न च शरीरस्थितये इत्यधिकं, स्वभावादेव नोकर्म्माहार इति वाच्यं, पूर्वपक्षे शास्त्राक्षरैः तत्समर्थनात्, अपि च- भवतां भावसंग्रहे नोकर्म्माहारोऽप्युपचारेण न वस्तुत इति 'णोकम्मकम्महारो उवयारेण तस्स आगमे भणिओ । ण हु णिच्छएण सोऽवि हु स वीयराओ परो जम्मा ॥ १ ॥' इति, किंच-नोकर्म्माहारो वर्गणाकर्षणरूपः केवलिनः, स तु प्रदेशचलनाद् भवति, तथा च प्रदेशचलनं यावत् सयोगमस्ति, तेनाहारेणाहारकत्वं चेत् कथं सयोगालापे गोमट्टसारवृत्तौ आहारानाहारमिति द्वयमुक्तं तदुपपद्यते ?, संसारान्तावाप्त्यभावाच्च देहपरिस्पन्दाभावेऽपि देहिनः सततं प्रदेशचलनमस्ति, ततः सदा संसार एव, सिद्धानामयोगिकेवलिनां च नास्ति प्रदेशचलनं, तद्योग्यकर्म्मसामग्र्यभावात् इति भावनासंग्रहे प्रोक्तं, तेन केवलिसमुद्घातेऽप्यनाहारकत्वं न युज्यते, प्रदेशचलनाद्वर्गणाकृष्टेरिति, यदपि समन्तभद्रवचः तत्रापि न भद्रं, पर्याप्तसंज्ञिमनुष्येषु

१ लोमाहारेण शरीरस्थितौ छद्मस्थभावे कवलाहाराभ्युपगमः कथम् ? ।

चतुर्दशगुणस्थाननियमागमवचनात् , यच्चाष्टादशदोषराहित्यं चतुस्त्रिंशदतिशयसाहित्यं तत्रैव विप्रतिपत्तेर्न किंचिदेतत् , एतेन रत्नाकरावतारिकावचोऽपि तत्प्रतिपक्षनिराकरणात् समाहितं, यत्तु ध्यानासनस्थस्यैव श्रेणेरारोहणं तत्रापि ध्यानस्यैव नियमो, न त्वासनस्य, यदुक्तं- 'तो देसकालचेट्ठा नियमो झाणस्स नत्थि समयम्मि । जोगाण समाहाणं जह होइ तह पयइयव्वं ॥ १ ॥' इति श्रीआवश्यकवृत्तौ; तत एव 'प्राणायामक्रमप्रौढिरत्र रूढ्यैव दर्शिता' इति गुणस्थानक्रमारोहवचनं सूपपादम्, अन्यथा विहायोगतिनिद्राद्विकचक्षुर्दर्शनादित्रिकप्रमुखसप्तपंचाशत्प्रकृतीनां क्षीणमोहे, परिग्रहसंज्ञया लोभस्य सूक्ष्मसम्पराये, अनिवृत्तौ वेदत्रयबादरकषायाणां, अपूर्वकरणे हास्यादिषट्कस्यानुदय एव स्यात्, न चात्र गुणश्रेणीसद्भावात् प्रादेशिक एवोदय इति वाच्यं, एतत्प्रकृतीनामुदीरणाया अपि सद्भावात्, एवं सुस्वरदुःस्वरप्रकृतेरपि तत्रोदयाज्जल्पतोऽपि श्रेणिः प्रतिपत्तव्या,-बाहुल्यापेक्षया तस्मादवस्थाद्वयसंगरः । सक्तानां तूपसर्गाद्यैस्तद्वैचित्र्यं न दुष्यति ॥ १ ॥ देहावस्था पुनर्यैव, न साध्या नोपरोधिनी । तदवस्थो मुनिर्ध्यायेत्, स्थित्वाऽऽसित्वाऽधिशय्य वा ॥ २ ॥' इत्यादिपुराणे २१ पर्वणि, अत एव चर्यापरीषहोऽपि तद्गुणेषु प्रतीतः; अन्यथा तत्तद्गुणस्थानकेषु बन्धोदयोदीरणासत्तादिकथनमात्रमेव स्यात्, तथा च तत्तद्ग्रन्थानामप्रामाण्ये गौरवं, तेन नासननियमस्तत्रापि, द्रव्यसंग्रहवृत्तौ 'पंचमुष्टिभिरुत्पाट्य, उत्तमांगस्थितान् कचान् । लोचानन्तरमेवापद्राजन् ! श्रेणिक केवलम् ॥१॥' इति लोचकरणसमय एव श्रेणिप्रतिपत्तिरिति। घत्ताबंधहरिवंशपुराणेऽपि-'जा चिहुरुप्पालण खिवइ हत्थु, ता केवलुप्पन्नो पसत्थु' इति, आदिपुराणेऽपि- 'देशादिनियमोऽप्येवं, प्रायोवृत्तिव्यपाश्रयः । कृतात्मनां तु सर्वोऽपि, देशादिर्ध्यानसिद्धये ॥ १ ॥ यद्देशकालचेष्टासु, सर्वास्वेव समाहिताः । सिद्धाः सिध्यन्ति सेत्स्यन्ति, नात्र तन्नियमोऽस्त्यतः ॥ २ ॥' पर्वणि एकविंशे, यदि ध्याने

आसनस्यैव नियमस्तर्हि विहरतां भुंजानानां धर्म्मोपदेशं कुर्वतां मुनीनां धर्म्मध्यानमपि न स्यात्, लोकेऽपि रात्रौ प्रसुप्तानां आर्त्तरौद्रध्यानोदयो न स्यात्, न चैतद्युक्तं, दृष्टेष्टविरोधात्, तत्रापि योनिस्त्रीविदवेदने क्षपकश्रेणेरुक्तत्वाच्च, तेन गच्छतां भुंजानानामपि श्रेणौ न किंचिद् बाधकं येन यथाख्यातचारित्रविरोधः सिध्यतीति, बाह्यकरणस्याप्यविरोधः कवलाहारेण, केवलिनां छद्मस्थानीताहारव्यवहारात्, यदुक्तमोघनिर्युक्तौ- 'ओहे सुयउवउत्तो जं किंचिवि गिण्हई अह असुद्धं। तं केवलीवि भुंजइ अपमाण सुयं भवे इहरा ॥ १ ॥ अथ कस्यचिदेकाकिनो ध्यानमाहात्म्याल्लब्धकेवलस्य का गतिरिति चेत् परेषां तद्वैयावृत्त्यकारिणां तत्रागमनमावश्यकमन्तकृत्केवलिनं व्यतिरिच्येति गृहाण, तवाप्येकाकिकैवल्ये ध्वनिबोधकजनावश्यकत्ववत्, तथा "नानासनेन वृक्षमूलाभ्रावकाशातपनयोगवीरासनकुर्कटासनपर्यङ्कार्धपर्यंकगोदोहनमकरमुखहस्तिशुण्डासृतकशयनैकपार्श्वदण्डधनुःशय्यादिभिः कायक्लेशस्तपः" इति भावनासंग्रहे भणनात्, तथा च पर्यङ्ककायोत्सर्गद्वयावश्यकत्ववद्वा, किञ्च-तवापि समुदायस्थस्य कैवल्ये का गतिः?, परेषु भुंजानेषु स्वयमनशन एवावतिष्ठते, उपवासिसाधुवदिति चेद्, अन्यस्यापि केवलोत्पत्तौ धर्मोपदेशः कथं?, न चैवं केवलिसमुदायो नेष्ट इति वाच्यम्, एकस्मिन् केवलिनि परेषां केवलप्रतिबन्धापत्तेः, 'क्रमाद्वाणारसीबाह्ये, समागत्य स्वलीलया। शुभ्रध्यानेन घातीनि, हत्वा केवलिनोऽभवन् ॥ १ ॥ इन्द्रादिभिः समर्च्यास्ते, त्रयोऽपि जिनपुंगवाः। भव्यान् सम्बोधयन्तश्च, प्राप्ता राजगृहे बहिः॥२॥ शुद्धे शुद्धशिलापीठे, विस्तीर्णे तत्र निश्चले। जरामरणनिर्मुक्ताः, सम्प्रापुः पदमव्ययम् ॥ ३ ॥' इतिश्रीहरिवंशे तृतीयाधिकारे, गुरुः १ राजा मेघरथः २ श्रेष्ठी धनदत्त ३ एषां त्रयाणां कैवल्ये १ विहारे २ निर्वाणसमये ३ च साहचर्योक्तेश्च, 'न संस्तुतो न प्रणतः सभायां, यः सेवितोऽन्तर्गणपूरणाय। पदाच्युतैः केवलिभिर्जिनेशो, देवाधिदेवं प्रणमाम्यरं तम् ॥१॥ इति लघु-

स्वयंभूस्तवे, ततो वैयावृत्त्यकारकं विना केवलिनोऽनवस्थितौ लाघवात्, गृहस्थगृहे गमनेन स्थविरकल्पिकानामप्यशनमनुचितं तर्हि केवलिनां का वार्त्ता ?, पात्रादीनामपरिग्रहत्वं तु प्रागुक्तमेव, नीहारादिकार्यविरोधोऽपि निरस्तः, अनुमानत्रयं तु कवलाहारवत्त्वस्थाने स्थानासनविहारकर्तृत्वं निक्षिप्य प्रत्यादेश्यं, तुर्ये तु सिद्धसाधनं, न चानिष्टप्रसंगः, शयनहेतुत्वे सिद्धेऽपि शयनमुत्पादयत्येवेति नियमाभावात्, न हि घटहेतुर्मृद् घटमुत्पादयत्येवेति नियमः, अन्यसहकारिसन्निधेरभावान्न तदुत्पाद इति चेदत्रापि दर्शनावरणस्य निद्रामुख्यहेतोरभावात्, यदि अप्रमत्तादिगुणेषु न कवलाहारस्तत् कथं सयोगिनीत्यपि नाशंक्यं, त्वन्मयेऽप्रमत्तादिषु ध्वनेरभावात् सयोगेऽपि तदभावानुषंगात्, अस्मन्नयेऽप्रमत्तादिष्वपि कवलाहाराविरोधात्, विप्रतिपन्नः केवली कवलाहारकृद्गर्भनिष्क्रान्तपर्याप्तसंज्ञिमनुष्यत्वादस्मदादिवत्, अस्ति केवलिनां भुक्तियोग्यता बहुकालिकगुणस्थायियतित्वात् इत्यादिप्रयोगा अपि तत्साधका बोध्याः ।

वर्षन् पार्षदहर्षदायि भगवद्व्याहारयुक्ते रसं कुर्वन् सर्वदिगंवरेभनिकरक्षोभं गवां गर्जितैः । मेघो यत्र विशारदः समुदयं प्राप्तः फलं मौक्तिकं, निर्माता किमु तत्र याति विसरं मन्दप्रभेन्दुप्रभा ॥१॥ मुक्तिर्भुक्तियुता जगत्त्रयमहासाम्राज्यलक्ष्मीभुजो, ध्यानाऽऽध्यान[1]विधानतो भगवतः प्राप्याभिधानादपि । योगे भोगविरुद्धतापि विगता सर्वाङ्गिमैत्र्यादिव, यस्यावश्यनिषेवणेन दधतो जीवाद्विमुक्तिस्थितिम् ॥ २ ॥ योगी जिनेन्दुः सुतरां सयोगी, वप्रासनच्छत्रविभूतिभोगी । स्याद्वादिनस्तस्य भवेत् प्रशस्यं, भुक्तिस्तदुक्ति-

1 आध्यानं स्मरणम्,

द्वयमप्यवश्यम् ॥ ३ ॥ शब्दादेव हि केवलं न कवलैर्दूरीकृतं कुत्रचिद्, दृष्टं यत् स्वरतोऽधिकं प्रकटयद्भिस्त्वस्य मार्गोदयम्। तद्ये तद्वति तन्निषेधनिपुणास्त्यक्त्वा गुणं प्राकृतं, शैलेश्याचरितं भजन्तु सततं मौनाज्जिनस्यात्मनि ॥ ४ ॥ छद्मस्थभावे तपसां प्रवृत्तिर्निरन्तरा तीर्थकृतस्तदीया। स्यात् केवले केवलपारणैव, यावन्न संलेखनिका निकामम् ॥ ५ ॥

इति श्रीयुक्तिप्रबोधनाटकस्वोपज्ञव्याख्यायां महोपाध्यायश्रीमेघविजयगणिकृतायां केवलिकवलाहारविवेकः ॥

अथ गृहिअन्यलिंगिनोऽपि खलु सिद्धिर्नास्तीति विव्रियते, तत्र तावत्तेषामभिप्रायः आरम्भरसिकत्वाद्भावचारित्रानुपपत्तेर्द्रव्यलिंगं विना केवलभावस्याप्रयोजकत्वान्न गृहस्थवेषेण सिद्धिः, आरम्भस्तु प्रतिपदं प्रतीत एव, यदुक्तम्-"खण्डनी पेषणी चुल्ली, उदकुम्भः प्रमार्जनी। पंच सूना गृहस्थस्य, तेन मोक्षं न गच्छती ॥१॥" ति, एवमन्यलिंगिनः सम्यग्ज्ञानापरिणामादेव न मुक्तिः, यतत्संसर्गात् सम्यक्त्ववतोऽपि सम्यक्त्वस्य मालिन्यं तर्हि साक्षात् स्वयं तस्य मोक्षं कः प्राप्तरूपः श्रद्धीत ?, यत्तु कुत्रचिदन्यलिंगिनोऽपि मन्दकषायत्वान्मार्गानुसारि रागपरिणामः प्रेक्ष्यते श्रूयतेऽपि न तावन्मात्रेण मोक्ष इति, मोक्षकारणानां ज्ञानादीनां द्रव्यतो भावतो वा द्वैरूप्येणैव कार्यसिद्धेः, केवलभावस्यैव कारणत्वे स्वप्नज्ञानविषयीभूतान्मोदकादेरपि तृप्तिः स्यादिति। अत्राप्यभिधीयते-आरम्भरसिकत्वस्य हेतोर्भागासिद्धेर्न मोक्षं प्रति बाधकता, न हि सर्वे गृहस्थास्तथाभूताः, वैराग्यभाजनजनस्यापि प्रत्यक्षत्वात्, अथ स वैराग्यभाग् भवत्येव न, प्रत्यहमारम्भमग्नत्वात्, तप्तायोगोलकल्पस्य तस्य कदाप्यारम्भानुपरमादिति चेत्, न, कस्यचित् कथंचिद्दीक्षाग्रहणोन्मुखस्य तदुपरमे प्रत्यक्षात्, यदुक्तं भावप्राभृते—"दिक्खाकालाईयं भावहिय वियारदंसणविसुद्ध"मिति, व्याख्या-यथा दीक्षाकाले दारिद्र्यकाले रोगादिकाले च ये भावास्त्वया भाविता धर्म्माश्रयणपरिणामाः तान् भावान् भावय हे

मुनेः। भावेण होइ नग्गो मिच्छत्ताई य दोस चइऊण। पच्छा दव्वेण मुणी पयडइ लिंगं जिणाणाए॥१॥" अस्या अप्यर्थः—'भावेन' परमधर्म्मानुरागलक्षणजिनसम्यक्त्वेन 'नग्नः' वस्त्रादिपरिग्रहरहितो मिथ्यात्वादिआश्रवद्वाराणि त्यक्त्वा पश्चाद् द्रव्येण 'लिंगं' जिनमुद्रां प्रकटयति जिनस्याज्ञया, अत्र केचिद्बीजांकुरन्यायं भावाद् द्रव्यं द्रव्याद्भाव इत्येवमुपदिशन्ति, तदसम्यक्, द्रव्यलिंगे सति भावलिंगं भवति न भवति वेति समयसारवृत्तिवचनात्, 'भावपूर्वकत्वादेव सर्वस्ये' ति न्यायाद्भावलिंगपूर्वकमेव द्रव्यलिंगमिति नियमाच्च, द्रव्यलिंगं तु बाह्यं नान्तरस्य भावलिंगस्य निश्चयाज्जनकम्, अभव्यानां तथात्वात्, यत्तु उपदेशमालायाम्—"धम्मं रक्खइ वेसो" इत्युक्तं तद्व्यावहारिकं भावलिंगजन्यस्य द्रव्यलिंगस्य स्थैर्यसाधनप्रतिपादकं, मातुरुत्पन्नपुत्रस्य मातृप्रतिपालनवत्, नैतावता मातृपुत्रयोरन्योऽन्याभिमुख्येन कार्यकारणभावः, केवलं मातृव्यवस्थानवत् केवलस्यापि भावस्य व्यवस्थानात्, अत एव— "भावो य पढमलिंगं ण दव्वलिंगं च जाण परमत्थं। भावो कारणभूओ गुणदोसाणं जिणा विंति ॥ १ ॥" इति भावप्राभृते, अस्तु वा बीजांकुरन्यायस्तथापि यस्माद् द्रव्यलिंगाद्भावलिंगोत्पत्तिः तद् द्रव्यलिंगमध्यात्मकृतं सम्यक्त्वादिप्रतिबन्धकापगमरूपमेव, यदुक्तमिन्द्रनन्दिना समयभूषणे—'द्रव्यलिंगमिदं ज्ञेयं, भावलिंगस्य कारणम्। तदध्यात्मकृतं स्पष्टं, न नेत्रविषयं यतः ॥ १ ॥" यद्वा जन्मान्तरीयद्रव्यलिंगमेव तत्तदावरणकर्म्मक्षयोपशमकरणेन भावलिंगस्य कारणं भवतीति, तेन गृहस्थानामपि प्राग्भवे क्षिप्तबहुकर्म्मणां मोक्षे न किञ्चिद्बाधकं पश्यामः, तत्रापि समये तथाऽङ्गीकारात्, यदुक्तं द्रव्यसंग्रहवृत्तौ— "येऽपि भरतसगररामपाण्डवादयो मोक्षं गताः तेऽपि पूर्वभवे भेदाभेदरत्नत्रयभावनया संसारस्थितिं स्तोकां कृत्वा पश्चान्मोक्षं गता" इति, अस्मन्मते पञ्चवस्तुकवृत्तौ चायमेवार्थः— तेसिंपि य भावचरणं तहाविहं दव्वचरणपुव्वं तु। अन्नभवा-

विक्खाए विन्नेयं उत्तमत्तेणं ॥ ९२२ ॥ गाहा, व्याख्या--तेषामपि-सोमादीनां भावचरणं तथाविधं-झटित्येवान्तकृत्केवलित्व-फलप्रदं द्रव्यचरणपूर्वकमेव-उपस्थापनादिद्रव्यचारित्रपूर्वमेव, अन्त्यभवापेक्षया जन्मान्तरांगीकरणेन विज्ञेयमुत्तमत्वेन हेतुना, उत्तमत्वं न यथाकथंचित् प्राप्यत इति, एतेन स्याद्भावेन मोक्षो द्रव्यलिंगापेक्षत्वात्, स्याद् द्रव्यलिंगेन मोक्षो भावलिंगापेक्षत्वात्, स्यादुभयं क्रमार्पितोभयत्वात्, स्यादवाच्यं युगपदुभयार्पणेन वक्तुमशक्यत्वात् .स्यात् भावलिंगं चावक्तव्यं च स्याद् द्रव्यलिंगं चावक्तव्यं च स्यादुभयं चावक्तव्यं चेति सप्तभंगी सुकरैव, योऽपि तुषतन्दुलदृष्टान्तः कुत्रापि लिखितः तुषाभावे तन्दुलस्यापुनर्भवः तथा द्रव्यलिंगे सत्येवात्मनोऽपुनर्भव इत्याशयपूर्वकः, तत्रापि नैकान्तः, नालिकेरादौ गजभुक्तकपित्थादौ पुटपाकादिजन्यरसनिष्पत्त्यादौ बाह्यतत्तत्परिणामाभावेऽपि कार्यसिद्धिदर्शनात्, एतेन भावचारित्रानुपपत्तिर्निरस्ता, गृहे वसतोऽपि विरागत्वात्, यदुक्तं भावप्राभृतवृत्तौ—"वनेऽपि दोषाः प्रभवन्ति रागिणां, गृहेऽपि पंचेन्द्रियनिग्रहस्तपः। अकुत्सिते वर्त्मनि यः प्रवर्त्तते, विमुक्तरागस्य गृहं तपोवनम् ॥ १ ॥' अत एव सम्बोधसप्तत्याम्'सेयंबरो य आसंबरो य बुद्धो य अहव अन्नो वा। समभावभावियप्पा लहेइ मुक्खं न संदेहो ॥ १ ॥' सांख्या अप्याचख्युः- "पंचविंशतितत्त्वज्ञो, यत्र तत्राश्रमे रतः। जटी मुण्डी शिखी वापि, मुच्यते नात्र संशयः ॥ १ ॥" नैयायिका अपि द्रव्यकिरणावल्यां गृहस्थमोक्षं प्रपन्नाः, अथ द्रव्यलिंगराहित्यान्न मोक्ष इत्यपि न युक्तं, द्रव्यलिंगराहित्येऽपि भरतचक्रिणः कैवल्योत्पत्तेः, तच्च तवापि सम्मतं, यदुक्तं द्रव्यसंग्रहवृहद्वृत्तौ- 'योऽपि घटिकाद्वयेन मोक्षं गतो भरतचक्री सोऽपि जिनदीक्षां गृहीत्वा विषयकषायनिवृत्तिरूपलक्षणमात्रं व्रतपरिणामं कृत्वा पश्चाद् शुद्धोपयोगरूपरत्नत्रयात्मके निश्चयव्रताभिधाने वीतरागसामायिकसंज्ञे निर्विकल्पसमाधौ स्थित्वा केवलज्ञानं लब्धवानिति, परं तस्य स्तोककालत्वाल्लोका व्रत-

परिणामं न जानन्तीति," तदेव भरतस्य दीक्षाभिधानं कथ्यते, हे भगवान् ! भरतचक्रिणः कियति काले केवलज्ञानं जातमिति श्रीवीरवर्द्धमानस्वामितीर्थंकरपरमदेवसमवसरणमध्ये श्रेणिकमहाराजेन पृष्टे सति गौतमस्वामी प्राह- पंचमुष्टिभिरुत्पाट्य, स्वानुबन्धस्थितान् कचान् । लोचानन्तरमेवापद्राजन्! श्रेणिक! केवल ॥१॥' मिति, अत्र यदि द्रव्यलिंगं भरतेन गृहीतं भवति तर्हि लोका व्रतपरिणामं न जानन्तीत्यविचारितोक्तं स्यात्, तादृशमहाराजस्य तद्ग्रहणे लोकस्यावश्यं परिज्ञानात्, अथ लोचकरणरूपं द्रव्यलिंगं जातमेवेति चेत्, न, पिच्छिकाकमण्डलुरूपस्यैव द्रव्यलिंगत्वात्, अस्तु वा तत्तथापि द्रव्यलिंगं कदा यातं ? कदा प्रमत्तादिगुणारोहः संजज्ञे ?, लोचकरणसमय एव केवलं प्राप्तं, जघन्यतोऽप्येकान्तर्मुहूर्त्तावश्यंभावेन तद्वक्तव्ययोगात्, द्रव्यतो गृहादिपरिग्रहत्यागाभावाच्च, एवं 'पासंडी लिंगे'ति 'ण दु होइ'त्ति गाथाद्वये व्याख्याकारोऽप्याह समयसारवृत्तौ-केचिद् द्रव्यलिंगमज्ञानेन मोक्षमार्गं मन्यमःनाः सन्तो मोहेन द्रव्यलिंगमेवोपाददते तदनुपपन्नं, सर्वेषामेव भगवतामर्हद्देवानां शुद्धज्ञानमयत्वे सति द्रव्यलिंगाश्रयभूतशरीरममकारत्यागात्तदाश्रितद्रव्यलिंगत्यागेन दर्शनज्ञानचारित्राणां मोक्षमार्गत्वेनोपासनस्य दर्शनाद्, अत्रेदं चिंत्यं- किमत्र द्रव्यलिंगं पिच्छिकाद्युपधिर्जातरूपता वा ?, नाद्यः, तीर्थंकराणां तदभावात् तदत्यागात्, न द्वितीयः, वस्त्रपरिधानमन्तरा त्यागानुपपत्तेः, तत्त्वे चानिष्टापत्तिः, अथ जातरूपोऽहमितिममकारत्यागात्तत्त्याग इति चेत्, न, तथा सति तीर्थंकराणामिवेति दृष्टान्तकरणानुपपत्तेः, सर्वेषां ममकारत्यागादेव मोक्षात् द्रव्यलिंगस्येत्येतदपि न संघटते, सर्वस्याप्यनात्मद्रव्यस्य त्यागात्, एवं ब्रह्मदेवकृतसमयसारवृत्तौ हे भगवान् ! भावलिंगे सति द्रव्यलिंगानियमो नास्ति, 'साहारणासाहरणे' त्यादिवचनादिति, परिहारमाह- कोऽपि तपोधनो ध्यानाधिरूढस्तिष्ठति, तस्य केनापि दुष्टभावेन वस्त्रवेष्टनं कृतं, आभरणादिकं वा कृतं, तथाऽप्यसौ निर्ग्रन्थ एव,

बुद्धिपूर्वकममत्वाभावात् पाण्डवादिवत्, 'तृणपूलवहत्पुञ्जे, संक्षोभ्योपरि पातिते । वायुभिः शिवभूतिः स्वं, ध्यात्वाऽभूदाशु केवली ॥ १०२ ॥ न्यस्य भूषाधियांगेषु, सन्तप्ता लोहशृंखलाः । द्विट्पक्षैः कीलितपदाः, सिद्धा ध्यानेन पाण्डवाः ॥ १०३ ॥ इत्याशाधरश्रावकाचारे, येऽपि घटिकाद्वयेन मोक्षं गताः भरतचक्रवर्त्यादयस्तेऽपि निर्ग्रन्थरूपेणैव, परं किंतु तेषां परिग्रहत्यागं लोका न जानन्ति, स्तोककालत्वादि"ति; अत्रापि न केवलं जातरूपता एव निर्ग्रन्थरूपं, तथा सति सर्वेऽपि गृहस्था रात्रौ विजने वा नग्नाः सम्भाव्यन्त एव, न तावता निर्ग्रन्थाः, अथ तेषां ताद्रूप्येऽपि ममत्वान्न नैर्ग्रन्थ्यमिति चेद् भरतादेः कथं ?, शुद्धज्ञानोदयेनेति चेत् आयातोऽसि स्वयमेव मार्गं, भावलिंगत्वात्तस्य, अथ द्रव्यतोऽपि ममत्वाश्रयवस्तुत्यागाद् द्रव्यलिंगमपि जातमेवेति चेत्, न, गृहादिपरिग्रहत्यागस्य भावादेवोपपन्नत्वात्, न द्रव्यतः, अन्यथा लोकज्ञाततया अवश्यंभावात्, अत एव द्रव्यलिंगं न मोक्षमार्गः शरीराश्रितत्वे सति परद्रव्यत्वादित्यपि तत्रैवोक्तं युक्तिमज्जायते, इदं सर्वं नैश्चयिकं. पारमार्थिकमेतदेवेति सिद्धं द्रव्यलिंगराहित्येऽपि भरतादेः केवलम्, एवं न बहिर्व्रतशीलनियमतपःप्रभृतिशुभकर्म्मराहित्यमपि गृहस्थस्य मोक्षबाधकं, यदुक्तं **समयसारवृत्तौ** 'स्वयं ज्ञानभूतानां ज्ञानिनां बहिर्व्रतनियमशीलतपःप्रभृतिशुभकर्म्मासद्भावेऽपि मोक्षसद्भावात्. न चैतत् केवलिव्याख्यानमिति वाच्यं, तस्यापि बहिर्व्रतनियमशीलसद्भावात्, न हि केवली व्रतीति न पठ्यते, यथाख्यातचारित्रपावित्र्यात्, अस्मन्मते संल्लेखनातपोऽङ्गीकारात्, स्वमयेऽप्यासनादिनियमाच्च, अथैतन्निश्चयवचनं न व्यवहारवाक्यं, स्याद्वादिनां नयद्वयापेक्षत्वाद्,व्यवहारेण न गृहस्थमोक्ष इति चेत्, न, व्यवहारेणापि तस्य मोक्षात्, मोक्षसाधनं व्यवहारतो लिंगं, तच्च यथा यतेस्तथा श्रावकस्यापि तुल्यतया कथितं समयसारवृत्तिवचसा- 'ववहारिओ' इत्यादिगाथया, न चात्र यतिलिंगस्य साक्षान्मोक्षमार्गत्वं गृहस्थलिंगस्य परंपरयेति वाच्यं,

निश्चयाद् द्वयोरपि अतन्मार्गत्वेन व्यवहारात् द्वयोरपि मार्गत्वेन भणनादेताद्विकल्पानवकाशात्, ब्रह्मदेवोऽप्याह समयसारवृत्तौ-"निर्विकारविशुद्धात्मसंवित्तिलक्षणभावलिंगसहितं निर्ग्रन्थयतिलिंगं कोपीनकारणादिबहुभेदसहितं गृहिलिंगं चेति द्वयमपि मोक्षमार्गे इति व्यवहारनयः,' मोक्षप्राभृतेऽप्येवम्- 'एवं जिणेहिं कहियं समणाणं सावयाण पुण मुणसु । संसारविणासयरं सिद्धयरं कारणं परमं ॥ १ ॥' अत्र श्रावका दीक्षायोग्यध्यानाधिकारिणो देशव्रताः सन्त आत्मभावनापराः संसाराद्विरक्तचित्ता आरक्षकगृहीतचौरवत् गृहपरिहारमनस' इति वृत्तिः, अयमेव भावार्थो दर्शनप्राभृते—'दंसणभट्ठा' इत्यादिप्रागुक्तगाथायां, 'चरणभट्ठा' इत्यस्य द्रव्यचारित्ररहिता इति व्याख्यानात् सुलभो, भावचारित्राराहित्ये सिद्धेरभावात्, अत्र श्रेणिकं दृष्टान्तीकृत्य सिद्धेभविष्यत्तां व्याख्यान्ति तन्न युक्तं, तथा सति सम्यक्त्वभ्रष्टस्यापि आगामिभवान्तरगुर्वादिसामग्र्या पुनस्तल्लब्धौ सिद्धेरविरोधात्, भविष्यत्ताया अप्रयोगाच्च। किञ्च-श्रेणिकस्तु चारित्रभ्रष्ट एव नास्ति, सूत्रे तु चारित्रभ्रष्टास्तत् कथं श्रेणिकदृष्टान्तः सूपपादः ?, अथ शुद्धोपयोगस्यैव श्रावकाणामसम्भवात् न तल्लिंगं मुक्तिरिति तदप्यसारं, दीक्षायोग्यध्यानाधिकारिण आत्मभावनापरा इति प्रागेव शुद्धोपयोगकथनात्, न चैवं व्यवस्थापने द्रव्यचारित्राचरणलोपापत्तिः, कस्यचित् कर्म्मलाघवेन मोक्षावाप्तौ न सार्वत्रिकन्यायः प्रयोक्तव्यः, द्रव्यचारित्राचारस्य प्रागेव प्राधान्यकथनात्, यदपि गृहस्थानां वस्त्राभरणावश्यंभावान्न ताद्रूप्ये मोक्षगम इत्यपि श्रद्धानं तदपि न किञ्चित्, नग्नस्यैव मोक्षस्थापनाऽभिप्रायेण स्त्रीमुक्तिनिषेधवत् केवलिभुक्तिनिषेधवत् श्वेताम्बरधर्म्मद्वेषाशयेन तथा व्यवस्थापनात्, न चेत्कथं शिवकुमारादेर्भावश्रमणत्ववचनं यौक्तिकं स्यात्, यदुक्तं-"भावसमणो य धीरो जुवइयणवेढिओ विसुद्धमई । णामेण सिवकुमारो परित्तसंसारिओ जाओ ॥ १ ॥ एवं-भावेण होइ णग्गो बाहिरलिंगेण किंच नग्गेण ?। कम्म-

पयडीण नियरं णासइ भावे ण दव्वेण ॥ २ ॥ अस्यार्थः-कर्म्मप्रकृतीनां निकरं भावे सति नाशयेत्, न तु द्रव्येण इति, न पुनर्भावेन द्रव्येण कर्म्मप्रकृतिनिकरं नाशयतीत्ययमर्थः, भावप्राभृते भावस्यैव प्राधान्योपदेशस्य सौष्ठवात्, न तु द्रव्यभावयोस्तौल्येन, 'भाव' इत्यत्र सत्सप्तमीव्याख्यानं, यद्वा तृतीयार्थे सप्तमी, प्राभृते विभक्तिव्यत्ययस्योक्तत्वात्, तत एव पूर्वापरार्द्धयोः सान्वयता, अन्यथा वैषम्यादिति सिद्धा गृहस्थलिंगे सिद्धिः, अनयैव नयदिशाऽन्यालिंगेऽपि, उक्तंच-"अनाद्यमिथ्यादृगपि, श्रित्वाऽर्हद्रूपतां पुमान् । साम्यं प्रपन्नः स्वं ध्यायन्, मुच्यतेऽन्तर्मुहूर्त्ततः ॥१॥ आराध्य चरणमनुपममनादिमिथ्यादृशोऽपि यत् क्षणतः । दृष्टा विमुक्तिभाजस्ततोऽपि चारित्रमत्रैष्ट ॥२॥" न केवलं सादिमिथ्यादृष्टिरविरतिसम्यग्दृष्टिः श्रावको वा इत्यपिशब्दार्थः, द्रव्यतः पुंल्लिंग एव निर्ग्रन्थलिंगमाश्रित्य माध्यस्थ्यं प्राप्तः आत्मानं समादधानः किंचिदूननाडिद्वयमात्रतो द्रव्यभावकर्म्मभिः स्वयमेव विश्लिष्यते इति आशाधरश्रावकाचारसूत्रवृत्तौ, न चार्हद्रूपकथनात् द्रव्यचारित्रमागतमिति नाग्न्यस्यैव द्रव्यलिंगत्वात्, भरतादेरिव तस्य मिथ्यादृशामविरोधात्, यस्तु संसर्गनिषेधः स तु नयानुवादजन्यो न प्रमाणपथपान्थः, प्रतिबोधादौ प्रश्नोत्तरादौ संसर्गेऽपि धर्मदार्ढ्यवतां नैश्चल्यात्, स्वप्नज्ञानविपर्यीकृतमोदकदृष्टान्ते तु स्वप्नज्ञानजन्यकर्म्मबन्धेनैवोत्तरं, लोकेऽपि स्वप्नजन्यभयस्य पूत्कारादिना प्राकट्येन प्रवृत्तिर्दृश्यत एवेति सर्वं सुस्थमिति गाथार्थः ॥ २१ ॥अथ नाटकान्ते नान्दीनिर्घोषः—

आयारंगप्पमुहं सुयणाणं किमवि नो पमाणेइ । सेयंबराण सासणसद्धाइ तयंतरं बहुलं ॥ २२ ॥

आचाराङ्गप्रमुखं श्रुतज्ञानं न किमपि प्रमाणयति । श्वेताम्बराणां शासनश्रद्धायास्तदंतरं बहुलम् ॥२२॥

आचारांगादि श्रुतज्ञानं सम्प्रति समयानुभावाद् व्यवच्छिद्यमानमपि किंचिदवशिष्टं तन्न प्रमाणं कुरुते, तत्प्रामाण्ये स्वमतोच्छेदात्, ज्ञाताधर्म्मकथाङ्गे मल्लिनाथस्य स्त्रीत्वेऽपि तीर्थकरत्वाद्, भगवत्यङ्गे श्रीवीरजिनस्याहारोपलाम्भाद् देवानन्दाया मोक्षगमनादिसिद्धान्तात्, यो यादृशं मतं स्थापयति स तत्प्रतिपक्षाक्षरव्यञ्जकं सूत्रं न प्रमाणयत्येव, तथा च आचाराङ्गादिसूत्राणि गोमट्टसारादिस्वशास्त्रे प्रतिपादितानि पूजापाठादिषु पूजाविषयीक्रियमाणान्यपि सम्प्रति तानि व्यवच्छिन्नानि, श्वेताम्बरमते साम्प्रतं वाच्यमानानि सर्वाणि परिकल्पितानीति मनुते, तेन श्वेताम्वराणां शासने या श्रद्धा तस्या दिगम्बरान्तरं बहुलं, तत्र मुनीनां वस्त्रधारणं १ जिनप्रतिमायाः परिधापनिकाद्यङ्गपूजा २ स्त्रीमुक्तिः ३ केवलिभुक्तिः ४ गृहस्थवेषे सिद्धिः ५ अन्यलिङ्गिवेषे सिद्धिः ६ एते जल्पाः सविस्तरं समाहिताः॥ द्वादश देवलोकस्थानानि कल्पोपपन्नसुराणां ७ नीचकुलोत्पन्नस्यापि सिद्धिः ८ सामान्यकेवलिनो रोगः ९ तदुपसर्गश्च १० श्रीवीरस्य स्कन्धे देवदूष्यस्थापने तदर्द्धविप्रदानं ११ गच्छतां भुञ्जानानां केवलज्ञानप्राप्तिः १२ समवसरणे जिननाग्न्यादर्शनं १३ स्त्रीणां महाव्रतानि १४ चतुःषष्टिरिन्द्राः १५ एते जल्पाः प्रासङ्गिकनीत्या साधिताः, तदवशिष्टाः श्रीवीरस्य लेखशालाकरणं १६ तीर्थङ्कराणां वार्षिकदानं १७ श्रीवृषभदेवस्य सहजातसुमङ्गलाभोगः १८ तस्यैव धृतरूपसुनन्दास्त्रीभोगः १९ दशाश्चर्याणि २० श्रीनेमिमल्लिजिनौ द्वावेव कुमारौ २१ बाहुबलिना केवलित्वे जिनप्रदक्षिणाविनयः कृतः २२ श्रीवीरेण छिक्का कृता २३ श्रीगौतमस्वामिना स्कन्दपरिव्राजकसत्कारः कृतः २४ समयपर्यायस्य कालद्रव्यता, न कालाणुयावल्लोकव्याप्तिः २५ श्रीमुनिसुव्रतप्रभोर्गणधरोऽश्वः २६ साधोर्मांसग्रहणं २७ साधूनां प्रतिगृहं भ्रान्त्वा भिक्षाग्रहणं स्वाश्रयवसतौ समानीय तदशनं २८ धर्म्मद्वेषिणो मारणेऽपि न पापं विष्णुकुमारवत् २९ भरतस्य ब्राह्मी भगिनी बाहुबलिनः

सुन्दरी, सापि स्त्रीबुध्द्या कियत्कालं रक्षिता, दीक्षाविलम्बः ३० भरतस्य गार्हस्थ्ये केवलं ३१ द्रौपद्याः पञ्चभर्तृकत्वं ३२ चण्डरुद्राचार्यः शिष्येण स्कन्धे समुत्पाटितः, शिष्यस्य तेन केवलं जातं ३३ श्रीवीरस्य जमाली जामाता ३४ कपिलकेवलिनो नृत्यं ३५ वसुदेवस्य द्वासप्ततिसहस्राः स्त्रियः ३६ बाहुबलिनो देहोच्चत्वं पञ्चधनुःशतानि ३७ शूद्राणां गृहे मुनीनामशनग्रहणे न दोषः ३८ देवमानुष्ययोरन्योऽन्यभोगः ३९ सुलसाया युगपद् द्वात्रिंशत् सुताः ४० त्रिपृष्ठस्य प्रथमहरेर्भगिनी माता च ४१ वीरस्यानार्यदेशे विहारः ४२ तुर्यारके म्लेच्छा आर्यभूमौ ४३ चतुःशतक्रोशा देवैकक्रोशस्य ४४ प्राणान्तकष्टे व्रतभंगेऽपि न पापं ४५ उपवासे औषधभक्षणं ४६ चाक्रिणश्चतुःषष्टिसहस्रस्त्रीणां नित्यं वैक्रियदेहेन भोगः ४७ यतीनां दण्डकरक्षणं ४८ यतीनां कर्मबुद्धिः ४९ मरुदेव्या हस्तिस्थिताया अपि मुक्तिः ५० मुनीनां द्विवारं भोजनं ५१ साभरणवसनानां मुक्तिः ५२ अष्टादश दोषा अन्यथैव ५३ चतुस्त्रिंशदतिशया अप्यन्यथैव ५४ यौगलिकानां शरीरं न मरणसमये कर्पूरवदुड्डीयते ५५ केवलिनः शरीरमपि तद्वदेव ५६ केवलिशरीराज्जीववधः ५७ स्वर्गमध्ये तीर्थकरदंष्ट्रापूजा ५८ श्रीवीरेण मेरुश्चालितः ५९ तीर्थकरमातुश्चतुर्दशस्वप्नदर्शनं ६० गंगादेव्या भरतेन भोगः ६१ षण्णवतिभोगभूमयो न ६२ चर्मजलपाने दोषो न ६३ घृतपक्वं पर्युषितं न स्यात् ६४ अक्षतफलभोगः ६५ ऋषभस्वामिनो न नीलयशोनृत्यदर्शनाद्वैराग्यं ६६ श्रीवीरस्य मातापित्रोर्जीवतोर्न दीक्षाग्रहणमित्यभिग्रहः ६७ बाहुबली यवनः ६८ द्वीन्द्रियकलेवरस्थापनाऽर्चा ६९, नाभिमरुदेव्योर्यौगलिकत्वं, ताभ्यां जिनजन्म ७० यौगलिकानां नीहारः ७१ शलाकापुरुषाणां नीहारः ७२ यादवजैनमांसभक्षणं ७३ मानुषोत्तरपर्वतात्परतो मनुष्यगतिर्मन्यते ७४ चतुर्विंशतिः कामदेवा न मन्यन्ते ७५, नवनवोत्तरविमाना न मन्यन्ते ७६ कामाभिलाषे मुनेः स्त्रीदानेनापि श्राद्धस्य स्थिरीकरणं योग्यं ७७ भरतैरावतक्षेत्रदशकं

विहायान्यत्र षष्ट्युत्तरशतक्षेत्रेषु लघुसमुद्रो न मन्यते ७८ सितपटैरिति नव्याशाम्बरा बाणारसीयाः श्वेताम्बरगीतार्थेभ्यो व्याख्यानं शृण्वन्तोऽन्यजनस्य तच्छासनश्रद्धाविभंगाय चतुरशीतिं जल्पान् चर्चाशयविषयीचक्रुः, तन्निबन्धोऽपि कवित्वरीत्या हेमराजपण्डितेन निबद्धः, तत्र वीरस्य प्रथमव्याख्यानं विफलं १ त्रिशलाया असतीत्वं २ गर्भापहारः ३ स्त्रीतीर्थं ४ हरिवर्षक्षेत्राद्यौगलिकानयनं ५ सूर्यचन्द्रमसोर्मूलमण्डलेनावतरणं ६ सौधर्म्मदेवलोके चमरोत्पातः ७ एते जल्पा आश्चर्यजल्प एवान्तर्भाव्याः, केवलिनीहारस्तु आहाराक्षेप एव समाहितः, एवं च गच्छतां भुञ्जानानां केवलं १ परलिंगसिद्धिश्चे २ त्येतद्द्वयजल्पक्षेपेण षडशीतिजल्पानामन्तरं, प्राचीनाशाम्बरैस्तु महदन्तरमस्तीति गाथार्थः ॥ १२२ ॥ अथ नाटकान्ते दानप्रमोदः—

अह गीयत्थजणेहिं आगमजुत्तीहिं बोहिओ अहियं । तहवि तहेव य रुच्चइ बाणारसिओ(ए)मए तिसिओ ॥२३॥

अथ गीतार्थजनैरागमयुक्तिभिर्बोधितोऽधिकम् । तथाऽपि तथैव रोचयते बाणारसियो(सीये) मते तृषितः ॥ २३ ॥

एवं नाटकप्रकटनेन व्यामोह्यमानान् प्राणिनो दृष्ट्वा गीतं- सूत्रं अर्थः- तस्यैव निर्युक्त्यादयस्तज्ज्ञानिभिर्बोधितोऽपि 'आगमः' सिद्धान्तस्तं चानुगताभिर्युक्तिभिः-न्यायैः सम्यक्त्वं प्रापितोऽपि तथैव सिताम्बरशासनाद् विरुद्धमेव दिगम्बरेभ्योऽपि क्वचिद् भेदरूपं स्वाभिप्रायमेव 'रोचयते' अभिलषति-प्रामाण्येन मनुते बाणारसीयः स्वमते तृषितो, मदीयं मतं विस्तरतीत्याशापाशानुबद्ध इति सूत्रार्थः ॥ व्यासार्थः पुनरयं- रोगोपसर्गयोर्निषेधः सामान्यकेवलिनां तीर्थकराणां वा ?, नाद्यः, उपसर्गेतरासिद्धानां सामित्यात्; रोगपरीषहस्यापि जिने भणनाच्च, अत एव ब्रह्मदेवकृतसमयसारवृत्त्याद्युक्तेन समर्थितं प्राक्, न च सामा-

न्यमुनीनां तपःसामर्थ्यान्न रोगोपद्रवस्तर्हि कथमयं केवलिष्विति वाच्यं,-मरणोपसर्गरोगादिष्टवियोगादनिष्टसंयोगात्। न भयं यत्र प्रविशति, साधुसमाधिः स विज्ञेयः ॥ ९ ॥ ओं ह्रीं साधुसमाधये नमः। 'कुष्ठोदरव्यथाशूलवातपित्तशिरोऽर्त्तिभिः। कासश्वासज्वररोगैः, पीडिता ये मुनीश्वराः ॥ १ ॥ तेषां भैषज्यमाहारे, शुश्रूषा पथ्यमादरात्। यत्रैतानि प्रवर्त्तन्ते, वैयावृत्त्यं तदुच्यते ॥ २ ॥ ओं ह्रीं वैयावत्यकरणांगाय नमः ॥' इत्यादि पूजापाठे, तथा- 'तवबालवुड्ढसुय आयरांह, दुब्बलतणुरोय दुहायरांह। ओसह पयपच्छाय जोगु जासु, दह विहु विज्जावच्चंगु तासु। कीरंतो णंदिओ मुणिंदु, हुओ णंदिमित्तु नाम जियणिंदु ॥१॥' इति घत्ताबन्धहरिवंशपुराणे सामान्यमुनीनां रोगादिकथनात्, अत एव कस्यचिन्मुनेर्गमनागमनाशक्तस्याहारानयनं पात्राविनाभावि क्षुधाऽऽर्त्तस्य मनो विनाऽनशनकारणे कर्त्तुः कारयितुश्च विराधकत्वात् इत्याद्युक्तं प्राक्, अथ तीर्थकरस्य वीरस्य भगवत्यां भवदागमे प्रोक्तौ रोगोपसर्गौ न घटेते इति द्वितीयः पक्ष इति चेत् सत्यं, तीर्थकराणां तीर्थनामकर्म्मोदये सातप्राबल्यात्तेदृशो भूयानसातोदयः क्षुधादेरल्पस्यैवासातस्य तत्रोदयः, तेनैव तस्याश्चर्येऽन्तर्भावः साधुः, ननु किमाश्चर्यं ? 'नासतो जायते भावः, सतश्चापि विनाशन'मिति वचनाद् दुरभिनिवेशोऽयं मिथ्यात्वबीजमिति चेत्, न, तवापि पंचाश्चर्याणां स्वीकारात् इत्यग्रे वक्ष्यते, तेनोपसर्गरूपमाश्चर्यं स्वीक्रियते, तत् किंरूपं?, श्रीपार्श्वस्य कमठनिमित्तोपसर्गरूपमिति चेत्, न, छाद्मस्थ्येऽपि तदाश्चर्यरूपत्वे उपसर्गाभावरूपातिशयस्याजन्मसहजातिशयौचित्यात्, न पुनर्घातिकर्म्मक्षयजोऽयं स्यात्, किंच-एवं पादचारित्वे कण्टकादिसम्मर्दोऽप्याश्चर्यं स्यात्, न च तन्न भवत्येवेति, अनुपानत्कभूचारित्वे तदावश्यकत्वात्, न चैतदवस्थायां तदभावातिशयोऽस्ति, येन तन्निषेद्धुं शक्यते, अपि च-एवं निर्भयत्वपरीक्षार्थं संगमदेवकृतापायोऽप्याश्चर्यं स्यात्,(कृताः)तेनोपसर्गाः, आश्चर्यमेतदेव, तीर्थकृतस्तदयोग्य-

त्वात्, परेषां केवलिनां रोगोपसर्गः स्यात्तथापि न बाध इति १॥ श्रीवीरस्य देवदूष्यस्य स्थापनं तद्दानं तत्पतने पश्चादवलोकनं च प्रागेव समर्थितं, छाद्मस्थ्ये लोभस्य संज्वलनस्य सम्भवात्,! सर्वथाऽर्हतां दीक्षानन्तरं निष्कषायत्वे तत्कालं क्षपकश्रेणिप्रसंगः, तथा च छाद्मस्थ्यकाल एव मिथ्या स्यात्, ननु यतेरसंयताय दानमेव निषिद्धं कथं घटते इति?, तत्र, भगवत्प्रवृत्तेर्लोकोत्तरत्वात्, सामान्यमुनेरनौपम्यात्, अन्यथा कथमसौ शिष्यान्न करोति, छाद्मस्थ्ये धर्म्मोपदेशं च, कैवल्ये तदुपदेशने छत्रचामरादिविभूतिमान्, किंच-दीक्षानन्तरं निष्कषायश्चेदर्हन् तदा निष्क्रान्तिक्रियातो योगसम्महः क्रियान्तरं न स्यात्, तथा चापसिद्धान्तः, यदुक्तं महापुराणे जिनसेनेन- "भगवानभिनिष्क्रान्तः, पुण्ये कस्मिंश्चिदाश्रमे । स्थितः शिलातले स्वस्मिंश्चेतसीवातिसंस्कृते ॥ १ ॥ निर्वाणदीक्षयाऽऽत्मानं, योजयन्नद्भुतोदयः । सुराधिपैः कृतानन्दमार्चितः परयेज्यया ॥ २ ॥' इति निष्क्रान्तिः 'परिनिष्क्रान्तिरेषा स्यात्, क्रिया निर्वाणदायिनी । अतः परं भवेदस्य, मुमुक्षोर्योगसम्महः ॥ ३ ॥ यदाऽयं त्यक्तबाह्यान्तःसंगो नैःसंग्यमाचरेत् । सुदुर्द्धरं तपोयोगं, जिनकल्पमनुत्तरम् ॥ ४ ॥' एतेन जिनस्यापि जिनकल्पः कालान्तर एवेति सिद्धं, गमनादिक्रियावतां कैवल्यमपि प्रागेवोक्तं, कायवाङ्मनःकर्म्मालंकर्म्मीणानां समयसारवृत्त्यादौ यथाख्यातचारित्रभणनात् मनोयोगचतुष्टयवाग्योगचतुष्टयौदारिककाययोगरूपयोगनवकस्य क्षीणमोहेऽपि सम्भवाच्च, तथा च यद्यसत्यादिमनोवाग्व्यापारे प्रवर्त्तमानानां श्रेण्यारोहः तर्हि काययोगः कथं तत्प्रतिबन्धको?, भरतस्य प्रागुक्तानुरोधेन कचोत्खननक्रियाविशिष्टस्यैव तदारोहात्, अत एव तवापि शास्त्रे 'एकतरयोगवता'मिति सामान्यं वचो, न चायं सूक्ष्म एव कश्चिदित्याशंक्यं, बादरकाययोगस्य यावत् सयोगं निर्बाधं साम्राज्यात्, किंच- 'सूक्ष्मसम्परायच्छद्मस्थवीतरागयोश्चतुर्दशे'ति तत्त्वार्थसूत्रं वृत्तिश्च-क्षुत्पिपासाशीतोष्णदंशमशकचर्य्याशय्यावधरोगतृण-

स्पर्शमलप्रज्ञाज्ञानानीति तथैवोपपद्यते, चर्यायाः साक्षादुक्तेरिति, स्पष्टं त्वादिपुराणे-'यदा यत्र यथाऽवस्थो, योगी ध्यानमवाप्नुयात् । स कालः स च देशः स्याद्, ध्यानेऽवस्था च सा मता ॥१॥' इत्येकविंशपर्वणि आसनानियमात् ॥ एवं जल्पत्रयं प्रागुक्तमेवेति पंचदश ॥ श्रीवीरस्य लेखशालाकरणे किं चर्च्यं ? महेन्द्रागमो वा मातापित्रोरनवबोधो वा भगवतस्तथाप्रवृत्तिर्वा ?, नाद्यः, सुरेन्द्रस्यागमे चर्चानौचित्यात्, न द्वितीयः, बालस्योत्सवलालसतायां मातापित्रोर्व्यामोहस्यावश्यंभावात्, न हि बाल्ये धात्र्यादिना उपचरणं भगवतो देहनैर्मल्येऽपि मातापितरौ न कारयतः, तारुण्ये वा विवाहोत्सवाचरणानि च, स्नानवसनभूषाचन्दनार्चादिलौकिकव्यवहाराचरणस्य गार्हस्थ्ये उभयनयेऽप्यविरोधात्, अन्यथा धर्म्मशर्म्माभ्युदयकाव्ये- 'भृशं गुणानर्जय सद्गुणो जनैः, क्रियासु कोदण्ड इव प्रशस्यते । गुणच्युतो बाण इवातिभीषणः, प्रयाति वैलक्ष्यमिह क्षणादपि ॥ १ ॥' इत्यादिपितृशिक्षा धर्म्मनाथभगवन्तमुद्दिश्य कृता न संगच्छते, न तृतीयः, ज्ञानत्रयोपेतस्यापि गाम्भीर्यगुणेन स्वयं पंडितोऽस्मीति कथनासम्भवात्, नेमिनः परिणयनार्थमुपस्थितिवत् ॥ तीर्थकराणां वार्षिकदानेऽपि वैराग्ये सर्वपरद्रव्यत्यागस्यौचित्यान्नानुपपत्तिः काचित्, यदुक्तमादिपुराणे— 'दीयतेऽद्य महादानं, भरतेन महात्मना । विभोराज्ञां समासाद्य, जगदाशाप्रपूरणम् ॥ १ ॥ वितीर्णेनामुना भूयाद् भूतिश्चामी करेणवः । दीयन्तेऽश्वाः सह युग्यैरितश्चामीकरेणवः ॥ २ ॥' इति श्रीऋषभस्य दीक्षासमये दानम्, अथ दानं किमर्थमिति चेत्, कैवल्ये धर्म्मोपदेशः किमर्थं ?, परोपकारार्थं चेदत्रापि स किं काकेन भक्षितः ?, स्व-

१ पूजायां गोमयपिण्डकावतारणवत् ।

भावत एवेति चेत् न, परोपकारस्यादिपुराणोक्त्या प्रागेव कथनात्, तत्प्रवृत्तौ तथास्वभावत्वेऽत्रापि तत्साधनाच्च, किञ्च-राज्ये स्थिता अर्हन्तः किमपि दानं कुर्वन्ति न वा ?, अकरणे कार्पण्यकलङ्कः, करणे तथाप्रवर्त्तनं दीक्षासमये विशिष्यैव सम्भवतीति किं जलविलोडनेन? ॥ श्रीऋषभजल्पद्वयेऽपि यौगलिकधर्म्मस्य भगवतैव निवारणाद्, बाल्ये स्त्रिया सह जन्मावश्यकत्वात् कोऽसम्भवः?, तया सह भोग एवासम्भाव्य इति चेत्, तदानींतनव्यवहारेण साम्प्रतीनव्यवहारविरोधात्, अथान्यस्त्रीभोग एव कथं न स्यादिति चेत् सत्यं, परेषां यौगलिकानां स्वस्वसाहचर्येण जातानां स्त्रीणां परिभोगेन परस्त्रीत्वात् अगम्यतैव अवशिष्टा सुनन्दा तत्सहजातस्य पुंसः कालवैषम्यान्मरणेन, सा तु परिणीतैव, न चास्या अपि परस्त्रीत्वं येन धृताङ्गनादोषः स्यात्, परेणापरिभुक्तत्वात्, तव नयेऽपि कच्छमहाकच्छभगिन्योर्यशस्वतीसुनन्दयोः परिणयनमाद्यार्हतः प्रोक्तं, तत्रापि कच्छमहाकच्छयुगलजातयोस्तयोस्तदानीं यौगलिकव्यवस्थासद्भावात् परस्त्रीपरिभोगदोष एव, न च यौगलिकत्वं नास्त्येवेति वाच्यं, पुत्रस्य भरतस्यापि ब्राह्मी०, तथा "सुनन्दा सुन्दरीं पुत्रीं, पुत्रं बाहुबलीशिनम् । लब्ध्वा रुचिं परां लेभे, प्राचीवार्कं सह त्विषा ॥ १ ॥" इति १६ पर्वणि बाहुबलिसुन्दर्योर्युगलजाततयाऽऽदिपुराणे भणनात्, अथान्यैवास्तु किं सहजातस्त्रीभोगेनेति चेत्, तदा तद्व्यवहाराविरोधेन तारुण्ये तस्यास्त्यागानर्हत्वाद्दोषः, तीर्थकरा हि तत्तत्सामयिकव्यवहारविरुद्धं नाचरन्ति, न पुनर्देशान्तरीयकालान्तरीयव्यवहारविरुद्धा-

१ एतेन यत् कुत्रापि ऐरवतक्षेत्रजार्हत्पितुः सहजा मरुदेवी देवेन अपहृत्य नाभेः परिणायिता, नाभेः सहजा तु ऐरवतक्षेत्रार्हत्पित्रा परिणायितेत्यत्रापि दोषो भाव्यः ।

चरणे कश्चिद् दोषः, श्रीनेमिवत्, न च यौगालिकव्यवहारः श्रीऋषभात् प्राग् निषिद्धः, तव शास्त्रेऽपि तथैव भणनात्, यदुक्त-मादिपुराणे—"कर्म्मभूरद्यजातेयं, व्यतीतौ कल्पभूरुहाम्। ततोऽत्र कर्म्मभिः षड्भिः, प्रजानां जीविकोचिता ॥ १ ॥" इति षोडशपर्वणि, तेन विंशतिं लक्षपूर्वाणि यावद्यौगलिकस्थितः सद्भावस्तत एव तत्प्रागुत्पन्नभरतबाहुबलिनोरपि युगलजातत्वमेव, तत्त्वं त्वन्नये, भगवद्दीक्षासमयं यावन्नाभिमरुदेव्योः सत्त्वं न्याय्यमिति, एवं च "कृष्यादिकर्म्मषट्कं च, स्रष्टा प्रागेव सृष्टवान्। कर्म्मभूमिरियं तस्मात्तदासीत् तद्व्यवस्थया ॥ १ ॥" इति १६ पर्वणि, राज्याऽनन्तरं क्षत्रियादिव्यवस्थाकथनं, तथा—"प्रयुक्ता-नुनयं भूयो, मनुमन्त्यं स धीरयन्। न्यवृतन्न स्वसंकल्पादहो स्थैर्यं मनस्विनाम् ॥ १ ॥ इति२६ पर्वणि, भरतस्यान्त्यमनूक्तिः १९। अथाश्चर्याणि, तेषूपसर्गः प्रागेव समर्थितः, गर्भापहारेऽपि किमसम्भाव्यम्?, अथ गर्भापहारे इन्द्राधीनैव गतिः स्यात् न कर्म्माधीना १ श्रीवीरस्य द्विपितृकत्वं २ मातुस्त्रिशलाया असतीत्वं ३ अन्यस्या नाडीसम्बन्धाद् अन्यत्र सन्धाने गर्भावृद्धिरिति ४ दोषचतुष्टयं स्पष्टमेवेति चेत्, न, दोषद्वयस्य भवन्नयेऽप्यापातात्, यदुक्तं भावप्राभृतवृत्तौ— "तान् देवकीपुत्रान् ज्ञानवान् शक्रश्चरमांगान् ज्ञात्वा नैगमर्षं देवं प्रोवाच-एतान् त्वं रक्ष, स च भद्दिलपुरे अलकाया वणिकपुत्र्या अग्रे तान् निचिक्षेप, तत्पुत्रांस्तदा तदा भूतान् गृहीत्वा मृतान [ यमान् ] देवक्यग्रे निचिक्षेप" इति, न च चरमांगानां द्विपितृकत्वं वर्ण्यमानं संगच्छते, तृतीयो दोषस्त्वसम्भवी, वीर्याभावाद् द्व्यशीतिं दिनानि यावद्देवानन्दाकुक्षाववस्थानेन गर्भस्य पेश्याद्याकार एव, न च भूतपूर्वन्यायेन ऋषभदत्तवीर्यमेव तदिति वाच्यं, पितुर्वीर्यपुद्गलानां भूतपूर्वन्यायेन सर्वस्त्रीणां सद्भावेन पित्रापि व्यभिचारानुषंगात्, निजपुत्रस्य वा पर्याप्तांगोपांगस्य सप्तधातुमयत्वेन तच्छुक्रस्यापि गर्भवत्याः कुक्षौ सद्भावात्तेनापि व्यभिचारघटनाच्च, अथ त एव निजभर्तृशुक्र-

पुद्गलास्तथा परिणता इति नायं दोष इति चेत् न, तथा सति पश्चादपि तेन भोगे क्रियमाणे मातुर्नासतीत्वप्रतिपत्तिरिति, किञ्च-देवादिना अनाभोगेन तथा सम्पादने न सतीत्वभंगः, 'मनोवाक्कायैरन्यपुरुषानुसंगानभिलाषिणी सती' ति तल्लक्षणात्, अन्यथा त्वन्नयेऽपि ज्येष्ठाया महासत्या अपि सत्यकिना सतीत्वभंगः स्यात्, तुर्येऽपि विचित्रत्वाद्भावानां नासम्भवः, न वनस्पतयो ह्येते, न च देवैराधिष्ठिताः । केवलं पृथिवीसारस्तन्मयत्वमुपागतः ॥१॥ अनादिनिधनाश्चैते, निसर्गात् फलदायिनः। न हि भावस्वभावानामुपालम्भः सुसंगतः ॥२॥ " इत्यादिपुराणे ९ पर्वणि, तेन केषांचिदेकाकिनां जन्म केषांचिद् द्वितयतया जन्म केषांचित्पुरतः पादाभ्यां जन्म केषांचिच्छिरसा केषांचिदवयवाधिक्यं तन्न्यूनत्वं वा, अत एव सगरचक्रिणः सुता एकया स्त्रिया प्रसूताः षष्टिसहस्रा इति त्वन्नयेऽपि प्रतीताः, श्रूयन्ते चास्मन्नयेऽपि मतान्तरेण. किंच-मातुर्नाड्याः पुत्रनाड्याः स्पर्श एव, न तु तस्या एव ऐक्यं, येन छेदप्रसंगः, स्पर्शेनैव तत्तदाहारपरिणामात्, लोमाहार एव न कावलिकाहार इति, भगवत्याम्— "माउरसहरणी पुत्तजीवरस-हरणी माउजीवपडिबद्धा पुत्तजीवफुडा" तथा "अवराविय णं पुत्तजीवपडिबद्धा माउजीवफुडा" इति वचनात्, तेन मातुः पुत्रस्य नाड्योः स्पर्शेनैक्यं प्रतिभासमानमपि न वस्तुतः, योऽपि वल्लीफलदृष्टान्तस्तत्रापि नागवल्लीदलानां लतातः छेदेऽपि परस्परपुद्गल-धारया यावद्वल्लीछेदं सञ्जीवनप्रसिद्धेः, फलानामपि केषांचिद्बहुकालं सञ्जीवनप्रत्यक्षाच्च नासम्भवः, अन्यथावा समवायांगसूत्रे भवान्तरस्यैवोक्तत्वान्न दोषो, न च तेनैव शरीरेण कथं भवान्तरं स्यादिति, भगवत्यां गर्भे चतुर्विंशतिवर्षकायस्थितौ तथादर्शनात् इति दिक् । स्त्रीतीर्थेऽपि प्राग्भवे तथाविधमायाबाहुल्यजन्यस्त्रीवेदवशात्तद्भावे को विरोध इति चेन्महाव्रतिनस्तपस्यतस्तद्बन्ध एव विरुद्धो गुणस्थानद्वय एतद्बन्धादिति चेत्, न, द्रव्यतः पुंल्लिङ्गस्य भावतः स्त्रीवेदं वेदयतः क्षपकश्रेण्याऽऽरोहस्य त्वन्नये प्रामाण्यात्, न

तादृश्या मायाबहुलताया असम्भवो, बन्धस्तु अप्रमत्ताच्च्यवने द्वितीयप्रथमगुणस्थानागमन एव, यदुक्तं ज्ञाताधर्म्मकथांगवृत्तौ- "इत्थीनामगोअं" ति, स्त्रीनाम-स्त्रीपरिणामः स्त्रीत्वं यदुदयाद्भवति तत् स्त्रीनाम इति गोत्रम्-अभिधानं यस्य तत् स्त्रीनामगोत्रं, अथवा स्त्रीप्रायोग्यं नामकर्म्म गोत्रं च तत् स्त्रीनामगोत्रं निर्वर्त्तितवान्, तत्काले मिथ्यात्वं सास्वादनं वाऽनुभूतवान्, स्त्रीनामकर्म्मणो मिथ्यात्वानुबन्धिप्रत्ययत्वात्, अथैवं बन्धे साधितेऽपि तदुदयस्तृतीयभवे न योग्यः, बाधाकालस्य तावतोऽभावादिति चेत्, न, उदयस्य कर्म्मनिषेकरीत्या द्वितीयभवे तद्भवेऽपि सम्भवात्, योनिरूपांगोपांगनामकर्म्मप्रकृतिस्तु देवभवे विरतिगुणस्थानेऽपि बध्यत इति द्रव्यतो योनिमत्त्वं मल्लिभवे उदियाय बन्धः तृतीयभवे प्राक्कृतः सः, भावरूपमोहनीयप्रकृतिस्त्रीवेदरूपेणैव तदुदयो देवभवादौ न दुर्लभ इति, अथानुत्तरविमानेऽप्रवीचारतया कथं तदुदय इति चेत् सत्यम्, अप्रवीचारता तेषामधस्तनदेवापेक्षया संख्यातगुणहान्यैव, न चेत्पुंवेदस्याप्यनुपपत्तिः, न चेष्टापत्तिः, विमानोल्लोचस्थितमौक्तिकास्फालनजन्यरागध्वनिजनितानन्दलक्षणरतिसंवेदनवत् पुंवेदेऽबाधकत्वात्, नञः स्वल्पार्थत्वेऽप्यबलादिवद्भावात्, अथ यदि स्त्रीतीर्थकरः स्यात्तदा स्तनावयवदर्शनेऽशोभनत्वं, द्रष्टॄणां कामोल्लासहेतुत्वं स्यादित्यपि न, सुभगतातिशयेन तदुत्तरकरणाद्, अन्यथा पुरुषे तीर्थकरेऽपि द्वयं स्यात्, न चास्माकमिव भवतां मते नाग्न्यादर्शनं स्वीक्रियते, यदि च नाग्न्यादर्शनं पुंलिंगतीर्थकराणां तदाऽत्रापि स्तनादर्शनेनैव सन्तोष्टव्यं भवता, अत एव मल्लेस्तदन्येषां प्रतिमा लोकोत्तराकारेणैव शाश्वतप्रतिमानुसारिणी पूज्यते, तीर्थकराणामपि तथै व दर्शनात्, यदुक्तमावश्यकनिर्युक्तौ-नय नाम



१ सुस्वरसुभगादि न पुनर्योन्यङ्गोपाङ्गादि । २ त्वङ्गे तेजोमयत्वेन भासुरपरमौदारिकस्वीकारात् ।

अन्नलिंगे नो गिहिलिंगे य समणलिंगे य।' तेन न पुरुषाकारो न स्त्र्याकारो न क्लीबाकारः प्रतिमासु, लोकोत्तरलिंगत्वादर्हत इति, अथ स्तनाभावात् पुरुषाकार इति चेद् बाल्य एव मल्लेश्चारित्रस्य छाद्मस्थ्येऽहोरात्रेण कैवल्यस्य प्राप्तेः स्तनयोर्यौवनविकारजन्यत्वात् अत्राप्यदोषात्, न च यदीयं बाल्य एव चारित्रं प्रत्यपद्यत ततः कथं षड्नृपास्तां परिणेतुमागच्छन् इति वाच्यं, राज्ञां साम्प्रतमपि बाल्ये कन्याविवाहादिदर्शनात्, तत्प्रतिबोधकता तु बाल्येऽपि भगवतो ज्ञानत्रयसद्भावात् सुकरैव। अभावितपुरुषत्वं तु अक्षरान्तरैस्त्वयाऽपि प्रतिपन्नमेव, यदुक्तं प्राभृतवृत्तौ-'भगवतो वीरस्य केवले उत्पन्नेऽपि यदा ध्वनिर्न निःसरति तदा ज्ञानवान् शक्रस्तद् ज्ञात्वा वृद्ध-विप्ररूपं विधायावधिज्ञानं प्रयुज्य यज्ञं कुर्वाणान् गौतमाग्निभूत्यादीन् दुर्घटपृच्छाद्वारेण प्रत्यबूबुधत्, ते च गौतमादयो मानस्तं-भावलोकनाद्गतमिथ्यात्वा जयति भगवानिति नमस्कारं कृत्वा जिनदीक्षां गृहीत्वा लोचानन्तरमेव चतुर्ज्ञानसप्तर्द्धिसम्पन्नास्त्रयोऽपि गणधरदेवाः संजाता' इति,' अत्रेदं रहस्यं- ध्वनेर्निष्क्रमणे कारणं किंचिदस्ति न वा ?, आद्ये गणधराः सामान्ययतयो वा ?, नाद्यः, अन्योऽन्याश्रयात्, गणधरदेवे श्रोतरि ध्वनेरुद्भवः, ध्वनेरुद्भवे च गणधरत्वमिति, अथ दीक्षाग्रहणानन्तरमेव तेषां गणधरत्वापत्तेर्न दोष इति चेद्दीक्षायाः स्वयमेव ग्रहणात्, 'प्रत्येकबुद्ध एव गणधेरश्चाद्य' इति नियमापादनात्, बुद्धबो-धितत्वं तु न स्यादेवेत्यत्र किं नियामकं ?, किं च-एवमनन्यगत्या स्वीकारेऽपि व्यक्ताक्षरानुपलम्भात् युक्तरभावाच्च कथं श्रद्धेयं ? तीर्थकरोपदेशं विना स्वयंजातगणधरत्वस्य गुरुशिष्यसम्बन्धोऽप्येवं कथं स्यात्, तथा स्यादेवागुरुत्वमपि, अपि च- एवं वीरस्य ध्वनेरुत्पत्त्यर्थं शक्रप्रयासेऽपि परेषामर्हतां कथं गणधरोत्पत्तिः?, सर्वत्र शक्रप्रयोजकत्वे एकस्मादाश्चर्यात्प-लायमानस्य भवतोऽनैकाश्चर्यसम्पात इति महती विदग्धता, लाघवात् ध्वनेरनुत्पत्तिरूपेणाभावितपुरुषत्वमेव किं नांगीक्रियते ?,

आश्चर्य-
समाधानं

तथा ध्वनेरुद्भवे गणधरस्यैव कारणत्वे कस्यचिद्वनान्तरे तपस्तप्यतः शुक्लध्यानवशात् कैवल्ये न ध्वनेरुद्भवः स्यात्, तथा च स्थितं पारतन्त्र्यमयेन केवलबोधेन, अथ तत्राप्याचार्यादिस्तत्करणमिष्यत इति चेत्, न, तस्यैवोपदेशं विनाऽसम्भवात्, अन्यस्यापि करणत्वे सामान्ययतीनां पार्श्वसन्तानिनां सद्भावात् शक्रस्य तावत्प्रयासकरणे वैयर्थ्याच्च, अथ तीर्थंकराणां गणधरा एव करणं, परेषां केवलिनां परेऽप्याचार्यादय इति चेत्, न, अननुगमात् इत्यादि प्रागेवाभिहितं ॥ हरेरपरकंकागमने भूचारस्वीकारे लवणसमुद्रजलविश्लेषेऽपि न काप्यघटमानता, दिगम्बरनयेऽपि भावप्राभृतवृत्तौ- 'यमुना भविष्यच्चक्रिप्रभावेन द्विधा भूत्वा मार्गं ददाविति, अथ तच्छाश्वतं जलं कथमितस्ततः स्यादिति चेत्, न, शाश्वतत्वस्य सदाऽवस्थानरूपत्वात्, नेतस्तत आवीचिगमनापेक्षया, न हि लवणजलं प्रस्तरवद्विद्यते, वस्तूनामखण्डतानुषंगात्, यदाह समयसारवृत्तिकृत्-'यथा च वारिधेर्वृद्धिहानिपर्यायेणानुभूयमानतायामनियतत्वं भूतार्थमपि नित्यव्यवस्थितवारिधिस्वभावमुपेत्यानुभूयमानतायामभूतार्थ'मिति, एवं हरिवंशपुराणे द्वारिकानिवासे समुद्रजलापसरणं प्रोक्तं तत् संघटते, अन्यच्च- अचिन्तनीयो हि सुरानुभाव इति वाग्भट्टालंकारवचनात् सर्वं सुकरमेव । सूर्याचन्द्रमसोर्मूलविमानस्यावतारे किमसम्भाव्यं १, रात्रिदिवाव्यवस्थेति चेद्, वैक्रियविमानेन तदौचित्यात्, अभूतपूर्वतया लोकस्य भयोत्पात इति चेत् न, वैक्रियेण प्रत्यहं वन्दनागमनवत् विश्वस्ततया तदसम्भवात्, तारकविमानानां संकीर्णतया नीचैरागतिरसंगतेति चेत्, नन्दीश्वरादिषु सौधर्म्मदेवविमानागतेरप्येवमसम्भाव्यत्वं, तत्रापि तारकाणां तथैव संकीर्णत्वात्, अथ तत्रान्तरालस्या-

१ मणीतां; नित्यालोकतया समवसरणे रात्रिदिवव्यवस्था त्वया सदा नांगीक्रियते तदा एकदिनस्य का वार्त्ता ।

'तिहिं ठाणेहिं तारारूवे चलेज्जा तं०- विकुव्वमाणे वा परियारे-
ध्विक्याज्जम्बूद्वीपे तथारूपान्तरालाभावात् कथमिदमिति चेत्, न,
माणे वा ठाणातो ठाणं कममाणे वा' इति स्थानांगे देवादौ वैक्रियादि कुर्वति सति तन्मार्गदानार्थमितस्ततश्चलेदित्यागमाद्,
यद्वा निषधपर्वतव्याघातेऽष्टयोजनान्तराले समागमेऽत्रापि निर्बाधत्वादिति ॥ यौगलिकानयने युगलानां संख्यातत्वेनानन्तोत्सर्पि-
ण्यवसर्पिणीगमने तदानयने कालस्यानन्त्ये मूलोच्छेदः १ आयुषोऽपवर्त्तनं २ नरकगमनं ३ तत्सम्बन्धिकल्पद्रुमवैयर्थ्यं ४ चेति दोष-
चतुष्टयं प्रसज्यते, तत्राद्यं न किंचित्, न हि वयं तदेवाश्चर्यं भवतीति वच्मः, किन्तु भिन्नानि भिन्नरीत्यैवेति, तथा च यथेदं द्वेष-
वशात् मिथुनकमत्रानीतं तथा अत्रत्यं तत्तदायुर्देहमानादिसामान्येन तत्तदारकपरावृत्तौ तदा तदा दुःखोद्भवमाशंक्य केनचिद्देवेन
मिथुनकं प्रेमवशात्तत्र नीयत इति वृद्धसम्प्रदायात्, आयुषोऽपवर्त्तनं तु तवापि सम्मतं, भावप्राभृते- 'विसवेयणरत्तक्खयभयसत्थ-
ग्गहणसंकिलेसाणं। आहारुस्सासाणं निरोहणा खिज्जए आऊ ॥ १ ॥ हिमसलिलजलणगुरुयरपव्वयतरुरुहणपडणभंगेहिं। रस-
विज्जजोयधारणअणयपसंगेहिं विविहेहिं ॥ २ ॥' इति वचनात्, जीवहिंसारूपान्यायकरणेन युक्तमेवायुस्तुटनं, यद्वाऽनेन भवित-
व्यतावशादायुस्तथैव बद्धमिति न कश्चिद्दोषः, अन्यथा तवापि चक्रवर्त्तिमानभंगाश्चर्यस्य काऽन्या गतिः ?, तत्रापि बाहुबलिनः
प्राग्भवे तथैव दोर्बलप्रायोग्यवीर्यान्तरायक्षयोपशमसाहाय्येनांगोपांगनामकर्म्मसमुपार्जनात्, तत एव नरकगमनमपि न दोषाय,
भवितव्यताऽनुरोधेनैव देहिनां कर्म्मबन्धस्य गमकत्वात्, चक्रितीर्थकरादीनां द्वादशादिसंख्ययैव भवितव्यतानुरोधात् तत्तत्कर्म्म-
बन्धवत्, इदमेवाश्चर्यबीजम्, आश्चर्यं हि बाहुल्येनासम्भाव्यमानवस्तुपरिणामः, नतु सर्वथाऽसम्भाव्यमानवस्तुपरिणामः, वन्ध्या-
स्तनन्धयादिवत्, तत एव भवत्रयेऽपि चक्रवर्त्तिमानभंगः १ उपसर्गः २ त्रिषष्टिशलाकापुरुषेषु एकोनषष्टिजीवत्वं ३ असंयतपूजा ४

हरेरपरकंकागतिः ५, इत्येवं पंचाश्चर्येषु भवितव्यतैव गतिः, 'एगसए अडयाला गम्मइ चउवीसि हुंति हुंडकखा । तित्तीस हुंड गम्मइ विरहकालस्स हुंडंतो ॥ १ ॥ हुंडाइ सप्पिणीए सिलायपुरिसूण १ पंच पासंडा २ । चक्कहरे मयभंगो ३ उवसग्गो जिणवरिंदाणं ४ ॥ २ ॥' न च सम्भवानुसारिणी एव भवितव्यता, त्रिषष्टिशलाकापुरुषाणां भगवत्पितॄणां च कवलाहारे सत्यपि नीहाराभावो दिगम्बरनयेऽपि स्वीकार्यः कथमन्यथा संजाघटीति, देहमानं तु तदानयनकाले यावान् देहः तावत्प्रमाणे जात एवानयनात् न दुष्टं, अवृद्धिस्तु तथाकारणभूतकल्पद्रुमदत्ताहाराभावादेव, तुर्येऽपि कल्पद्रुमा भोक्तरि सत्येव भोग्याः,सति बालके स्तन्यप्रसववत् भोगभूमिस्वभावत्वेन तेषां सर्वसाधारणोपकारकरणात्, इदानींतनवृक्षपर्वतादिजनितफलानेकरत्नोपकारवत्, किंच- त्वयाऽपि हरिवंशोत्पत्तिः कथमुच्यते ?, सुमुखश्रेष्ठी वीरदत्तस्त्रीवनमालाहरो भरते हरिवर्षदेशोत्पन्नः सपत्नीको वीरदत्तेन प्राग्वैरिणाऽपहृत्य चम्पायां नीतस्तत्पुत्रो हरिस्ततो हरिवंशः, एवमिति चेत् न, सिंहकेतोः प्राग्दत्तमुनिभोजनफलं भुञ्जानस्य तारुण्ये आनेतुमयोग्यत्वात्, तथात्वेऽपि भरते एव ज्ञात्वा पुनस्तत्र गमनमेव युज्यते, तरुणस्य देशान्तराद् व्यावृत्य स्वदेशगमनाद्, गन्तुमशक्त इति चेत् न, रघुराजजीवसूर्यप्रभदेवस्य स्वस्थाने मुक्तावेवानुकम्पाफलत्वाद्, अन्यथाऽनुपपत्तेः, "हरिश्च हरिकान्ताख्यं, दधानस्तदनुज्ञया । हरिवंशमलंचक्रे, श्रीमान् हरिपराक्रमः ॥ १ ॥" इत्यादिपुराणे हरिवंश ऋषभस्वामिना स्थापित इत्युक्तेः, तथा भरते हरिवर्षदेशस्याप्यप्रसिद्धेर्मुनिदाने भोगभूमिसमुत्पातफलस्यैवोक्तेर्न किञ्चिदेतत् ॥ "सौधर्म सुरपति जीतने कुं चमर वंतरपति गयो" इति हेमराजकृतप्राकृतचतुरशीतिजल्पनिबन्धे, तत्र तावद् व्यन्तरपतिरिति मतापरिज्ञानमेव, चमरस्य भवनपतित्वात्, तदूर्ध्वगमने सुराणां तावान् गतिविषयस्तु सिद्धान्तसिद्ध एव, गमने हेतुर्देवासुरयोर्वैरमपि लोकप्रतीतं, भगवच्छरणे तत्सुखावस्थानमपि न चित्राय,

किन्तु बाहुल्येन न कश्चिद्गच्छतीति तत्र भवितव्यतायां वैचित्र्यमेवेति दिक् ॥ एवमष्टोत्तरशतसिद्धावपि अवगाहनागुरूणां गमनिका भाव्या । असंयतपूजा तूभयनयप्रसिद्धा इति, "शृणु देवि ! प्रवक्ष्येऽहं, शीतलाख्यजिनेशिनः । तीर्थान्ते श्रीजिनेन्द्राणां, धर्म्मो नाशं प्रयातवान् ॥१॥" इति हरिवंशे १४ अधिकारे; दिङ्मात्रमेतत्, वस्तुतस्तु न किमपि समाधानमाश्चर्याणां घटते, आश्चर्यत्व-लक्षणस्वरूपव्याघातात्, किन्तु वक्रे दारुणि वक्रवेधन्यायेन तदंगीकृतपदार्थचर्चैव प्रतिवचः, तथाहि—त्वन्मये चक्रवर्त्तिमानभङ्ग आश्चर्यं, तन्न विचारसहं, अजातचक्रित्वाभिषेकस्य चक्रिणोऽपि बाल्यादौ पलायनाद्युपद्रव्यस्य ब्रह्मदत्तचक्रिकृष्णहर्यादिवददोषात् । द्वितीयं प्रागेवाकिञ्चित्करं ज्ञापितम् । श्रीमल्लिनेमिनोर्द्वयोरेव कुमारत्वमपरिणयनापेक्षया स्वातन्त्र्यराज्यभोगापेक्षया वा?, आद्ये । द्वयेऽपि न तत्र कश्चिद्विरोधो, दृश्येत च साम्प्रतमपि परिणीतानां राजपुत्राणां पितरि जीवति कुमारव्यवहारः, आपेक्षिकं चैतत्, निर्ग्रन्थत्ववत्, यथा गृहादिपरित्यागापेक्षया निर्ग्रन्थत्वं षष्ठगुणस्थाने, मिथ्यात्ववेदाद्यन्तरंगक्षेत्रादिबहिरंगग्रन्थपरित्यागापेक्षया निर्ग्रन्थत्वं क्षीणकषाये, यदुक्तं गोमट्टसारवृत्तौ—"क्षीणकषायः परमार्थतो निर्ग्रन्थो, ग्रन्थाः-परिग्रहा मिथ्यात्ववेदादयोऽन्तरंगा-श्चतुर्दश, बाहिरंगाश्च क्षेत्रादयो दश, तेभ्यो निष्क्रान्तः-सर्वात्मना निवृत्तो निर्ग्रन्थ" इति मुख्यनिर्ग्रन्थलक्षणसद्भावात्, न चैवं प्रमत्तोऽनिर्ग्रन्थः, यतस्तत्रैवोक्तम्—"संजलणणोकसायाणुदयाओ संजमो हवे जम्हा । मलजणणपमादोवि य तम्हा हु पमत्तविरओ सो ॥ ३२ ॥" यस्मात् कारणात् सञ्ज्वलनानां क्रोधमानमायालोभानां नोकषायाणां च हास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुं-सकानां वेदानां तीव्रोदयात् यस्य संयमः-सकलचारित्रं मलजननप्रमादोऽपि भवेत्, स प्रमादसंयमवान् जीवः खलु—स्फुटं प्रमत्तविरतो भवति । वत्तावत्तपमाए जो वसइ पमत्तसंजओ होइ । सयसगुणसीलकलिओ महव्वई चित्तलायरणो ॥ ३३ ॥

' व्यक्तः ' स्थूलः ' अव्यक्तः ' सूक्ष्मो द्विविधः प्रमादकलितः गुणैः-सम्यक्त्वज्ञानादिभिः 'शीलैश्च' व्रतरक्षणधर्म्मैः कलितो महाव्रती 'चित्रलः' सारङ्गस्तादिव पमादमलचित्रितं आचरणं-चारित्रं यस्यासौ" इति तद्वृत्तिः, एतेन यत्र कुत्रचिदभिप्रायान्तरेण ग्रन्थेषु मतान्तराणि दृश्यन्ते तानि सर्वाणि अनया दिशा समाधेयानि, न पुनर्धर्म्मे संशयः कर्त्तव्यः, वस्तुतः सर्वेषां मतानां नयात्मकानां मोक्षाभिमुखमेव प्रवर्त्तनात्, तेन श्वेताम्बरनये मतान्तरबाहुल्यात् संशयबाहुल्ये सांशयिकमिथ्यादृशोऽमीति दिगम्बराभिप्रायो न सम्यग्, तन्नयेऽपि मतान्तराणां तादवस्थ्यात्, यदुक्तं गोमट्टसारवृत्तौ—"णारयतिरिणरसुरगईसु उप्पण्णपढमकालम्मि । कोहो माणो माया लोहुदयो अनियमो वापि ॥ २८६ ॥ नारकादिचतुर्गतिपूत्पन्नजीवस्य तद्भवप्रथमकाले यथासङ्ख्यं क्रोधमानमायालोभकषायाणामुदयः स्यादिति नियमवचनं, कषायप्राभृतद्वयसिद्धान्तव्याख्याकर्त्तुर्यतिवृषभाचार्यस्याभिप्रायमाश्रित्योक्तं, अथवा महाकर्म्मप्रकृतिप्राभृतप्रथमसिद्धान्तकृद्भूतबल्याचार्यस्याभिप्रायेणानियमो ज्ञातव्यः,प्रागुक्तनियमं विना यथासंभवं कषायोदयोऽस्तीत्यर्थः, अपिशब्दः समुच्चयार्थः, ततः कारणादुभययतिसम्प्रदायोऽप्यस्माकं संशयाधिरूढ एवास्ती" ति । पुनस्तत्रैव—"तिसयं भणंति केई चतुरुत्तरमहव पंचयं केई । उवसामगपरिणामं खवगाणं जाण तद्दुगुणं ॥ ६१४ ॥ केचिदुपशामकप्रमाणं त्रिशतं भणंति, केचिच्चतुरुत्तरं त्रिशतं, केचित्पुनः पञ्चोनं चतुरुत्तरत्रिशतं भणन्ति, एकोनत्रिंशतमित्यर्थः, क्षपकप्रमाणं ततो द्विगुणं जानीहि इति ॥ बाहुबलिनः श्रीवृषभदेवाय नमस्करणं हेमराजेन स्वनिबन्धे-"कहइं बाहुबलि केवली नया ऋषभके पाय इति गदितं, तन्मतापरिज्ञयैव, नमस्कारानङ्गीकारात्, प्रदक्षिणारूपः प्रतिरूपोऽन्योऽप्रतिरूपविनयस्तु केवलिना क्रियते, तीर्थकृतां धर्म्मादिकरत्वेन पूज्यत्वख्यापनाय तथा व्यवहारात्, व्यवहारस्तु केवलिनाऽप्यमोच्यः, अन्यथा दिनवद्रात्रौ विहारः स्यात्, अथ केव-

लिसमुदायो नेष्यते तर्हि किं व्यवहारकार्यमिति चेत्, न, तथा सति सम्यग्ज्ञानदर्शनक्रियाग्रियाणां शुक्लध्यानं ध्यायतामपि केवलिपार्श्वस्थानां मुनीनां केवलं नोत्पद्यत इति तस्य तत्प्रतिबन्धकता स्पष्टैव, किञ्च-केवलिनां विहारस्त्वया क्षेत्रस्पर्शनया मन्यते, न पुनरस्मन्मत इवास्माद् ग्रामादमुकग्रामे मया विहर्त्तव्यमिति विमर्शनया, तेन स्पर्शनाबलाद् द्वयोः केवलिनोर्मेलने का गतिः?, भवतां कथमिति चेत्, धर्म्मोपदेशो यथापर्यायं, स्थितिस्तु केवलिपर्षदीति सम्प्रदायात्, "अप्पडिरूवो विणओ णायव्वो केवलीण" मिति पुष्पमालावचनात्, न चैवं मेलनं न स्यादेवेति वाच्यं, नियामकाभावात्, अत एवादिपुराणे--"इत्थं स विश्वविद्विश्वं, प्रीणयन् स्ववचोऽमृतैः । कैलासमचलं प्राप, पूतं सन्निधिना गुरो ॥ १ ॥ रिति, कैवल्येऽपि भगवत्समीपे गतिरुक्ता, तथा हरिवंशे-"क्रमाद्वाणारसीबाह्ये, समागत्य स्वलीलया । शुभध्यानेन घातीनि, हत्वा केवलिनोऽभवन् ॥ १ ॥ इन्द्रादिभिः समर्च्यास्ते, त्रयोऽपि जिनपुङ्गवाः । भव्यान् सम्बोधयन्तश्च, प्राप्ता राजगृहे बहिः ॥ २ ॥ शुद्धे शुद्धशिलापीठे, विस्तीर्णे तत्र निश्चले । जरामरणनिर्मुक्ते, सम्प्रापुर्मोक्षमव्यय ॥ ३ ॥ मिति, एतेन केवले उत्पन्नेऽपि व्यवहाराचरणं न विरुद्धमिति साधितं, तेन उत्पन्नकेवलाया अरण्यकाचार्यसाध्व्याः पुष्पचूलाया आहारानयनं चण्डरुद्राचार्यशिष्यस्य कैवल्येऽपि गुरुभक्तिः मृगावत्याः कैवल्येऽपि सर्पनिवेदनं परस्परक्षमणया द्वयोश्चन्दनामृगावत्योः कैवल्ये सहावस्थितिरित्यादि चर्चयन्ति तत्प्रत्युक्तं, प्रतिपत्तव्येन यावता केवलित्वं न ज्ञातं तावता छद्मस्थस्यापि यथासम्भवं व्यवहाराचरणे दोषाभावात्, ज्ञाते पुनर्यथार्हमेव प्रवर्त्तनीयमिति, यत उक्तं पञ्चवस्तुकसूत्रवृत्तौ व्यवहारोऽपि बलवान् वर्त्तते, यत् छद्मस्थमपि सन्तं चिरप्रव्रजितं वन्दते अर्हन्-केवली यावद्भवत्यनभिज्ञः स चिरप्रव्रजितो जानानो धर्म्मतामेनां व्यवहारगोचरामिति व्यवहारगाथाव्याख्यायाम् ॥ श्रीवीरेण छिका कृता तत्र किं बाधकं ?,

वातकफात्मकरोगव्याप्तिरिति चेत् न, श्वासोच्छ्वासप्राणजन्यनाडीप्रयोगसम्पाद्यतैजसशरीरपरमाणुचलाचलतासमुज्जृम्भमाण-द्रव्यमनःकमलपत्रोदीर्यमाणवायुसम्मूर्च्छनं तस्य मुखेन निर्गमे जृम्भा नासानिर्गमे छिका, सा त्वौदारिकदेहवतां निरामयत्वे सम्भव-त्येव, न च कश्चित्तत्र रोगः, यौगलिकानां नीरोगत्वेऽपि छिकाजृम्भावत्, सप्तधातुविवर्जितस्य कथमेतदिति चेत्,न, तस्य प्राग्नि-रासात् ॥ श्रीगौतमेन स्कन्दकस्य सत्कारः सोऽपि भगवति सार्वज्ञ्यनिश्चयश्रद्धया प्रश्नोत्तरावगमनायाभ्याजिगमिषोः सम्यक्त्ववतो व्यवहारोऽतो परिव्राजकवेषस्य कृतः, तत्र भूयसां सम्यक्त्वप्राप्तिनैर्मल्यहेतुकतया यथालाभमागमव्यवहारिणः प्रवृत्तेर्न कश्चिद्बाधः, अन्यथा श्रीनेमिना बलभद्रेण पृष्टे सति द्वारिकाविनाशनिमित्तमूचे, श्रीवृषभेण भरतस्वप्नफलान्यादिष्टानि, ज्ञानिनां नैमित्तिकवत् कथनमेतन्न संगच्छते, मुनीनां निमित्तकथननिषेधात्, परं परमज्ञानिनाममूढगूढलक्ष्यत्वात् सर्वं सूपपादं, भवन्मते द्वयमप्येतत्प्रतीतम् ॥

अथ अद्धास्वरूपम्- अद्धा-कालः स द्वेधा-पर्यायरूपो द्रव्यरूपश्च, आद्यस्तु पंचास्तिकायानां वर्त्तनारूपः परिणाम एव, न पुनर्व-स्त्वन्तरं, यदुक्तमुत्तराध्ययनवृत्तौ- 'जं वट्टणादिरूवो कालो दव्वाण चेव परिणामो ।' इति, न च पर्यायस्यान्यद्रव्यवर्त्तिनः काल-कथने द्रव्यलोपः स्यादिति वाच्यं[1], कार्ये कारणोपचारात्, गोमट्टसारवृत्तावपि तथैव कथनात्, "कालमाश्रित्य जघन्यावधिज्ञानं

१ यथोक्तं पंचास्तिकाये कालो परिणामभवो परिणामो दव्वकालसंभूओ । दोण्हं एस सहावो कालो खणभंगुरो णियतो ॥ १ ॥ कालोत्तिय ववएसो सब्भावपरूवगो हवइ णिच्चो । उप्पण्णप्पद्धंसी अवरो दीहंतरट्ठाई ॥ २ ॥ एए कालागासे धम्माधम्मो य पुग्गला जीवा । लब्भंति दव्वसण्हं कालस्स दु णत्थि कायत्वं ॥ ३ ॥ २ कार्ये वर्त्तनारूपे कारणस्य निमित्तस्य कालस्य व्यवहारात् ।

अतीतानागतमालम्ब्य संख्यातैकभागमात्रं, पूर्वोत्तरान् जानातीत्यर्थः, कालशब्देन पर्यायग्रहणं कुतः ?, व्यवहारकालस्य द्रव्यवर्त्तिपर्यायस्वरूपं विहायान्यस्वरूपाभावात्" इति वासुपूज्यनमस्काराधिकारे, द्वितीयः कालस्तु अर्द्धतृतीयद्वीपद्विसमुद्रवर्त्ती अनन्तसमयरूपः, सूर्यक्रियाव्यंग्यो वर्त्तनाद्यन्यद्रव्यपरिणतिनिरपेक्षश्च, यदुक्तमुत्तराध्ययनवृत्तौ "सूरकिरियाविसिट्ठो गोदोहाइकिरियासु निरवेक्खो। अद्धा कालो भन्नइ समयक्खित्तम्मि समय ॥ १ ॥' त्ति,' अयमेवार्थः पुनर्गोमट्टसारसूत्रवृत्तौ- 'ववहारो पुण कालो मणुस्सखित्तम्मि जाण दव्वो हु। जोइसियाणं चारे ववहारा खलु समाणोत्ति ॥ ५६४ ॥' वर्त्तमानकालः खल्वेकसमयः सर्वजीवराशितः सर्वपुद्गलराशितोऽनन्तगुणः काल इति व्यपदेशो मुख्यकालस्य सद्भावप्ररूपकः, स मुख्यो नित्यः कालः, अपरो व्यवहारकालः उत्पन्नप्रध्वंसीति, एतेन द्रव्यकालो मनुष्यक्षेत्र एव, व्यवह्रियते इति व्यवहारस्तद्धेतुत्वात् व्यवहारोऽत्र, ज्योतिष्काणां चारे खलुर्निश्चये समानः घटिकादिमानयुक्त इति श्वेताम्बरनयव्यवस्थाप्यः[3] कालो द्रढीयानित्यावेदितम्, एतदेवानूवाच वाचकस्तत्त्वार्थे

---

१ 'अद्धे'ति चन्द्रसूर्यादिक्रियाविशिष्टोऽर्द्धतृतीयद्वीपद्विसमुद्रान्तर्वर्त्ती अद्धाकालः समयादिलक्षणः इत्यावश्यकवृत्तौ ।

२ 'ववहारो य वियप्पो भेदो तह पज्जओत्ति एयट्ठो ॥ ववहारावट्ठाणा ठिई उ ववहारकालो उ ॥ ५५९ ॥ गोमट्टसारे ।

३ यदुक्तमावश्यकनिर्युक्तौ- चेयणमचेयणस्स व दव्वस्स ठिई उ जा चउवियप्पा । सो होइ दव्वकालो अहवा दवियं तु तं चेव ॥ १ ॥ व्याख्या- चेतनाचेतनस्य देवस्कन्धादेर्द्रव्यस्य स्थानं स्थितिर्या सादिसान्तादिचतुर्विकल्पा सा स्थितिर्द्रव्यक्षेत्रस्य कालो द्रव्यकालः, तस्य तत्पर्यायत्वात्; अथवा द्रव्यं तदेव कालः द्रव्यकाल इति, द्विविधः कालः ।

गुणपर्ययवद् द्रव्यं ३८, कालश्च ३९, सोऽनन्तसमयः ४०,' इति सूत्रत्रयीं पंचमाध्याये, मेरुप्रदक्षिणा नित्यगतयो नृलोके, तत्कृतः कालविभाग' इति सूत्रद्वयीं च चतुर्थाध्याये, अत एव परस्परापेक्षया समय इत्यभिधानं सूपपादं, भरतक्षेत्रभरतचक्रिणोरिव क्षेत्रकालयोर्द्वयोरपि, न च कालद्रव्यस्य समय इति परिभाषा न युक्ता, समयस्य पर्यायत्वादिति वाच्यं, श्वेताशाम्बरनयद्वयेऽपि सांमत्यात्, यदुक्तं तत्त्वदीपिकायां प्रवचनसारवृत्तौ श्रीअमृतचन्द्रैः- 'अनुत्पन्नाविध्वस्तो द्रव्यसमयः, उत्पन्नप्रध्वंसी पर्यायसमयः, ननु 'लोगागासपदेसे एक्केक्के जे ठिया हु एकेका। रयणाणं रासी इव ते कालाणू मुणेयव्वा ॥ ५७६ ॥ गाथा, एगो दुपदेसो खलु कालाणूणं धुवो होइ ॥ ५७२ ॥' गाथायामपि गोमट्टसारसूत्रे उक्ताः कालाणवस्ते द्रव्यतया कथं नोक्ता इति चेत्, सत्यं, कालाणुशब्देनापि द्रव्यसमयस्यैव भणनात्, कालपरमाणुः समय इति भगवतीवृत्तौ २० शतके पंचमोद्देशे, यत्तु कालाणूनामसंख्याततवं मतान्तरीयैः प्रपन्नं तदनुपपन्नं, द्रव्यत्वव्याहतेः, यद्यद् द्रव्यं तदेकमनन्तं वा, यदुक्तमुत्तराध्ययनसूत्रे-'धम्मो अहम्मो आगासं, दव्वं एक्केकमाहियं। अणंताणि य दव्वाणि, कालो पोग्गलजंतुणो ॥ १ ॥' प्रत्याकाशप्रदेशं तन्मते कालाणुस्वीकारे शेषद्रव्याणामिवैतदीयस्तिर्यक्प्रचयोऽपि स्यात्, स चानिष्टः, यतो गोमट्टसारवृत्तौ सूत्रे च-दव्वच्छक्कमकालं पंचत्थिकायसण्णियं होइ। काले पदेसए चउ जम्मा णत्थित्ति णिद्दिट्ठं ॥ ६०७ ॥' कालद्रव्ये प्रदेशप्रचयो नास्तीत्यर्थः, न चाप्रदेशत्वान्न तिर्यक्प्रचय इति

वाच्यं, पुद्गलस्यापि तदभावप्रसंगात्, प्रदेशमात्रत्वं अप्रदेशमिति तल्लक्षणस्य तत्रापि विद्यमानत्वात्, अथ पुद्गलस्यास्ति अप्रदेशत्वं द्रव्येण परं पर्यायेण तु अनेकप्रदेशत्वमप्यस्ति, कालस्य तु नैतदिति चेत्, न, अनेनापि प्रसंगापराकरणात्, न हि निर्धूमत्वेन पर्वतेऽनग्निमत्त्वे प्रसज्यमाने यत्किंचिद्धर्माभावे तदभावः प्रतीयते इति स्थितं तिर्यक्प्रचयप्रसंगेन, न चैतत् समयद्रव्याणामानन्त्येऽपि तुल्यं, तदानन्त्यस्य अतीतानागतापेक्षया स्वीकारात्, यदुक्तमुत्तराध्ययने- 'एमेव संतइं पप्प' इति, तद्वृत्तौ वादिवेतालापरनामधेयाः श्रीशान्तिसूरयोऽप्याहुः—कालस्यानन्त्यमतीतानागतापेक्षये'ति, श्रीभगवतीवृत्तौ श्रीअभयदेवसू-

२ कालो द्विविधः परमार्थव्यवहारभेदेन, तत्राद्यः कालाणवः परस्परं प्रत्यबन्धाः एकैकस्मिन्नाकाशप्रदेशे एकैकवृत्त्या लोकव्यापिनो मुख्योपचारप्रदेशकल्पनाभावान्निरवयवाः, तत्र मुख्यप्रदेशकल्पना धर्म्मादिद्रव्यचतुष्टये पुद्गलस्कन्धेषु च, उपचारप्रदेशकल्पना परमाणुषु प्रचयशक्तियोगात्, कालाणुषु द्वयं न, तथा विनाशहेत्वभावान्नित्याः परिणामषड्द्रव्यपर्यायवर्त्तनाहेतुत्वादनित्याः, रूपाद्यभावादमूर्त्ताः, जीवप्रदेशवत्, प्रदेशान्तरसंक्रमणाभावात् निष्क्रियाः, त एव परमार्थकाल इति भावनासंग्रहे। कालवर्त्तनया मुख्यकालेन लब्धः कालव्यपदेशः, परिणामादिलक्षणः कुतश्चित् परिच्छिन्नः अपरिच्छिन्नस्य मुख्यकालस्य परिच्छेदहेतुभूतो वर्त्तमानो भविष्यन्नीति त्रिविधो व्यवहारकालः, परस्परापेक्षत्वात्, यथा वृक्षपंक्तिमनुसरतो देवदत्तस्य एकैकतरुं प्रति प्राप्तः प्राप्नुवन् प्राप्स्यन् व्यपदेशः, तथा कालाणूननुसरतां द्रव्याणां वर्त्तमानपर्यायमनुभवतां भूतादिव्यवहार इति भावनासंग्रहे। अत्र यद्यपि पुद्गलपरमाणुः प्रदेशमात्रत्वेनाप्रदेशस्तथापि मेलनशक्त्याऽनेकप्रदेशत्वं, कालस्यान्योऽन्यमेलनशक्तेरभावादप्रदेशत्वमेव, न पुनः पुद्गलवदौपचारिकमपि सप्रदेशत्वम् ॥

रयोऽपि- एको धर्मास्तिकायप्रदेशोऽद्धासमयैः स्पृष्टश्चेन्नियमादनन्तैः अनादित्वादद्धासमयाना'मिति, अत्रेयं भावना-यदयं मन्दगत्या आकाशप्रदेशात् प्रदेशान्तरं गच्छतः परमाणोस्तदतिक्रमणपरिमाणेन[3] समो यः कालविशेषः स कालपदार्थसूक्ष्मवृत्तिरूपः समय इति भण्यते, स च पर्याय एव, उत्पन्नध्वस्तत्वात्, तत्र नायं धर्म्माधर्म्माकाशपुद्गलजीवानां पर्यायस्तद्विलक्षणत्वात्, परिशेषाद् यस्य चायं पर्यायः सोऽन्वयी कालो द्रव्यसमयश्चोच्यते, निरन्तरमपरापरसमयपर्यायोत्पत्तिरूपश्च, न पुनः पुद्गलद्रव्यवदानंत्यमिष्यते येन तिर्यक्प्रचयः स्यात्, एवं समयविशिष्टवृत्तिप्रचयरूप ऊर्ध्वप्रचयप्रसंगोऽपि बोध्यः, समयवैशिष्ट्यापत्तेः, न चेष्टापत्तिः, शेषद्रव्याणामेव तन्निश्चयात्, यदुक्तं प्रवचनसारवृत्तौ- 'अशेषशेषद्रव्याणां प्रतिपर्यायं समयवृत्तिहेतुत्वं, कारणान्तरसाध्यत्वात्, समयविशिष्टाया वृत्तेः स्वतस्तेषामसम्भवात् कालमधिगमयति इति कालस्य कालाणुद्रव्यस्वीकारे समयवैशिष्ट्यं प्रसज्यत एव, शेषद्रव्यवत् प्रतिसमयं समयपर्यायधारित्वात्, अस्मन्नये तु नायमपि दोषः, समयप्रचयरूपस्यैव कालस्योर्ध्वप्रचयत्वात्, शेषाकाशादिद्रव्याणां समयादर्थान्तरभूतत्वात् समयविशिष्टवृत्तिप्रचयरूपः ऊर्ध्वप्रचयः स्यात्, कालस्य स्वयं समयमयत्वात् समयवैशिष्ट्यं न सम्भवति, दीपस्य प्रकाशकत्वे परप्रकाशवैशिष्ट्यवत्, अन्यथा अनवस्थानात्, ऊर्ध्वप्रचयस्तु त्रिकोटिस्पर्शित्वेन सांशत्वाद् द्रव्यवृत्तेः सर्वद्रव्याणामनिवारित इत्यस्यापि प्रवाहरूपतयाऽतीतानागतवर्त्तमानत्रिकोटिविषयत्वान्नित्यात्मलाभलक्षणः ऊर्ध्वप्रचयः सम्भवन् केन वार्यते?,

---

३ यतः प्रवचनसारे- वदिवदितो तं देसं तस्सम समओ तओ परो पुव्वो। जो अत्थो सो कालो समओ उप्पण्णपद्धंसी ॥ १ ॥' व्यतिपतन्तं देशं तत्समः समयपर्यायः ततो परः पूर्वो योऽर्थो नित्यः कालाणुर्द्रव्यसमय उच्यते इति वृत्तिः।

वर्त्तनापरिणामस्तु कालस्य स्वत एव परद्रव्यात् न सम्भवति, यथा पुद्गलादीनामवगाहोपकारो नभसो, न पुनः स्वस्याप्यवगाहोऽन्यस्मिन्, सर्वाधारभूतत्वेन चिन्तामणिन्यायशास्त्रे वृत्तेर्निषेधात्, तद्वदस्यापि वर्त्तनापरिणामः परद्रव्याणां तदुपकारकरणात् स्वत एव, यदुक्तं गोमट्टसारसूत्रे वृत्तौ च-'वत्तणहेऊ कालो वत्तणमवि य दव्वानिचयेसु । कालाधारेणेव य वट्टंति य सव्वदव्वाणि ॥ ५५५ ॥' धर्म्मादिद्रव्याणां स्वपर्यायनिर्वृत्तिं प्रति स्वयमेव वर्त्तमानानां बाह्योपग्रहाभावेन तद्वृत्त्यसम्भवात्तेषां प्रवर्त्तनोपलक्षितः काल इतिकृत्वा वर्त्तना कालस्योपकारो ज्ञातव्यः, अत्र णिचोऽर्थः कः ?, प्रवर्त्तते द्रव्यपर्यायस्तस्य वर्त्तयिता काल इति, तदा कालस्य क्रियावत्त्वं प्रसज्यते, न ,अधीते शिष्यस्तमुपाध्यायोऽध्यापयतीत्यादिवत्तन्निमित्तमात्रेऽपि हेतुकर्तृत्वदर्शनात्, तर्हि स कथं निश्चीयते, समयादिक्रियाविशेषाणां समय इत्यादेःसमयादिक्रियानिर्वर्त्यपाकादीनां क इत्यादेश्च स्वसंज्ञया रूढिसद्भावेऽपि तत्र काल इति यदध्यारोप्यते तत् मुख्यं कालास्तित्वं कथयति, गौणस्य मुख्यापेक्षत्वात्, कालाधाराण्येव सर्वद्रव्याणि वर्त्तन्ते-स्वस्वपर्यायैः परिणमन्ते, अनेनकालस्यैव परिणामक्रिया परत्वापरत्वोपकारौ उक्तौ; तथा पुनस्तत्रैव धर्म्माधर्म्मादीनां अगुरुलघुगुणानां षट्स्थानपतितवृद्धिहानिपरिणामे मुख्यकालस्यैव कारणत्वमिति, नन्वेवं स्वस्य कालस्य परिणामिकालान्तरे

---

१ उप्पादट्ठिदिभंगा पुग्गलजीवप्पगस्स लोगस्स । परिणामा जायंते संघादादो व भेयादो ॥ १ ॥' पुद्गलजीवात्मकस्य लोकस्य परिणामा उत्पादस्थितिभंगा जायन्ते संघातात्-मेलनात् विश्लेषाद्वा क्रियया भावेन २ च द्रव्येषु भेदः, स्पन्दात्मिका क्रिया १ परिणाममात्रं भावो २ द्वयमपीदं जीवपुद्गलयोः, शेषद्रव्याणां भाववत्त्वमेवेति प्रवचानसारवृत्तौ ।

हेतावनवस्था, स्वस्यैव हेतुतायां परद्रव्येष्वपि हेतुत्वे लाघवात् कालद्रव्यानर्थक्यं स्यादिति चेत् न, अधर्म्मास्तिकायस्य परेषां स्थिरताहेतुत्वेऽपि स्वस्य स्थैर्ये स्वस्यैव प्रकाशकत्वे दीपस्येव हेतुत्वाभ्युपगमस्तथाऽस्यापीति समाधानात्, यथा प्रदीपः स्वपरप्रकाशकस्तथैव कालः स्वपरप्रवर्त्तकः इति भावनासंग्रहे, तथा "वर्त्तनालक्षणः कालो, वर्त्तना स्वपराश्रया। यथास्वं गुणपर्यायैः, परिणेतृत्वयोजना ॥ १ ॥" इत्यादिपुराणे, अथैवमन्यपरिणामहेतोरभावे कालस्य कथं द्रव्यत्वं ? 'गुणपर्यायवद् द्रव्य' मिति तल्लक्षणे नवनवपर्यायाणामावश्यकत्वात्. तत्त्वे हेत्वन्तरस्यावश्यं मृग्यत्वादिति चेत् माऽस्तु गुणपर्यायवत्त्वं. 'कालश्चे'ति भिन्नसूत्रेण तथैव तात्पर्यात्, अस्तु वा तदपि परेषां द्रव्याणां वर्त्तनाहेतुत्वगुणेन धाराप्रवाहि, अपरापरसमयादिपर्यायेण तथास्वभावात्, न हि समयादिः पर्यायो मुख्यद्रव्यसमयरूपकालद्रव्यादतिरिक्तोऽनतिरिक्तो वा, किन्तु भेदाभेदरूपः, तथा च यः समयो नवनवपर्यायरूपः स एव तदुत्तरवर्त्तिपुद्गलद्रव्यादिवर्त्तनाहेतूभूतसमयापेक्षया द्रव्यं सोऽप्युत्तरसमयस्तृतीयसमयापेक्षया द्रव्यमिति द्रव्यत्वपर्यायत्वयोः सामानाधिकरण्यात्. यथा हि घटपर्यायापेक्षया मृदो द्रव्यत्वं. तस्याः पुनः पार्थिवपरमाण्वाद्यपेक्षया पर्यायत्वं, एवं च सिद्धं-"द्रव्यं पर्यायवियुतं, पर्याया द्रव्यवर्जिताः। क कदा केन किंरूपा, दृष्टा मानेन केन वा? ॥ १ ॥" इति वचनात्, कालस्य परमनिकृष्टोऽशः समयपर्यायः तस्यापि द्रव्यत्वं, अत एव- "अणंताणि य दव्वाणि, कालो पोग्गलजंतुणो" इत्यागमः सूपपादः, 'उत्पादव्ययध्रौव्ययुक्तं सदि' त्यपि लक्षणं समयादिपर्यायश्रेणीनां उत्पादविनाशौ स्पष्टौ कालत्वेन ध्रुवत्वमपीति स्पष्टमेव निष्टंक्यते, यो हि पुमान् पूर्वसमये कार्यापेक्षी स तन्नाशरूपे उत्तरसमयोत्पादे शोकवान्, तदितरस्तु प्रमोदवान् कालसामान्यापेक्षी माध्यस्थ्यवानिति त्रयात्मकत्वात्, नन्वेवं समयादिपर्यायाणामन्वयि द्रव्यमेकमेव

जल्प-
समाधाने
कालद्रव्यं

प्रतीयते, तच्चापसिद्धांतेन दूषितं, अनंतद्रव्यत्वेन प्रागागमोक्त्या दृढीकरणात् इति चेत् न, समयपर्यायस्य मुख्यत्वेन द्रव्यसंज्ञाया अविरोधात्, अत एव परमार्थकालं गौणत्वेन व्यवहारकालं मुख्यत्वेन "समयावली मुहुत्ता" इत्यागमः कथयति, लोकेऽपि मासो जातोऽस्येति मासजातः, न तु कालजात इति, न च सर्वथा ऐक्येऽपि अपसिद्धान्तोऽपि, श्रीउत्तराध्ययनवृत्तौ—"कालमहद्-नागतद्धे" ति, तत्त्वार्थे"कालश्चे"त्यत्रैकवचनमपि तत एव संगच्छते, न चेत् 'जीवाश्च' 'रूपिणः पुद्गलाः' इति पञ्चमाध्याये इति सूत्रद्वयवत्तत्रापि बहुत्वमेवोपादिक्ष्यन् वाचकाः, किंच निष्क्रियत्वादपि तदेकत्वं सिध्यत्येव, सोऽनन्तसमयः प्रवाहरूप इति विशेषणात्, न चैवं देशप्रदेशसम्भवादस्तिकायत्वं कालस्येति वाच्यं, द्रव्यसमयानां परस्परासङ्गमात्, सन्तत्यैवैकत्वात्, यदुक्तं कर्मग्रन्थवृत्तौ श्रीमद्देवेन्द्रसूरिचन्द्रैः-"कालस्य वस्तुतः समयरूपस्य निर्विभागत्वात् न देशप्रदेशसम्भवः, अत एवात्रास्ति-

१ परमार्थकाले भूतादिव्यवहारे गौणो, व्यवहारकाले तु मुख्यः, किमत्र बहुनोक्तेन?, परमार्थकालेन कारणभूतेन षड् द्रव्याणि परावर्तंते कार्यरूपाणि, तेषां द्रव्याणां परिच्छेदकाः समयादयः द्रव्यस्यैकः पर्याय एकः समयो द्वित्रिचतुःसंख्येयासंख्येयानंतपर्यायकलापा द्वित्रिचतुः-संख्येयासंख्येयानंतसमया इति भावनासंग्रहे, यच्चोक्तं प्रवचनसारे—'समओ य अप्पदेसो' इति गाथाव्याख्यायां-समयः कालद्रव्यं सः अप्र-देशः प्रदेशमात्रत्वात्, यद्यपि कालाणवोऽसङ्ख्याताः तथापि परस्परं पुद्गलपरमाणुवन्न तेषां मीलनशक्तिः ततोऽप्रदेशत्वं, स कालाणुः प्रदेश-मात्रस्य पुद्गलपरमाणोः समयपर्यायं प्रकटयति ।

२ द्रव्यैकत्वं जीवादिष्वन्यतमद्रव्ये, क्षेत्रैकत्वं परमाण्ववगाढप्रदेशः कालैकत्वं अभेदसमयः, भावैकत्वं मोक्षमार्ग इति भावनासंग्रहे ।

३ सर्वजघन्यगतिपरिणतस्य परमाणोः स्वावगाढाकाशप्रदेशव्यतिक्रमकालः परमनिरुद्धो निर्विभागः समय इति भावनासंग्रहे ।

कायत्वाभावो बोध्यः, नन्वतीतानागतवर्त्तमानभेदेन कालस्यापि त्रैविध्यमस्तीति किमिति नोक्तं ?, सत्यम्, अतीतानागतयोर्विनष्टानुत्पन्नत्वेनाविद्यमानत्वात्, वार्त्तमानिक एव समयरूप" इति, श्रीअनुयोगद्वारवृत्तावप्येवं-"अद्धा-कालस्तद्रूपः समयो अद्धासमयो, निर्विभागत्वाच्चास्य न देशप्रदेशसम्भवः, आवलिकादयस्तु व्यवहारार्थमेव कल्पिताः, तत्त्वतः पूर्वसमयानिरोधेनैवोत्तरसमयसद्भावेन समुदयसमित्या असम्भवात्" कालाणूनां द्रव्यत्वमतेऽपि रत्नराश्युपमया ताद्रूप्यात्, एवं च अनेकमप्येकं तदप्यनेकमिति सिद्धः स्याद्वादः,—"धम्मो अहम्मो आगासं दव्वमेक्केक" मित्यागमः परस्परस्पर्शतदन्यपरस्परास्पर्शसूचक इति, एतेन नास्य पुद्गलपरमाणुवत्प्रदेशरूपत्वेनानंत्यं नापि स्कंधरूपेणैक्यं द्रव्याणां स्वभावभेदात्, अन्यथा द्रव्यैक्यमापद्येत, किन्तु वेलास्वरूपो गुणपर्यायद्वारा साध्यः, तदेवं कालद्रव्यं समयक्षेत्र एव, न परतः, तत्रैव समयावलिकाद्युपलक्षणात्, यदुक्तं-"समयावलिकापक्षमासर्त्वयनसंज्ञिकः। नृलोक एव कालस्य, वृत्तिर्नान्यत्र कुत्रचित् ॥ १ ॥" परतस्तु परिणामकाल एव पंचास्तिकायानां पर्यायरूपः, तस्यैव तु कालाणुरूपता, लोकाकाशानां असंख्यातप्रदेशत्वेन असंख्यातत्वोपपत्तेः, न तु कालद्रव्यं तत्, न चैवं तत्रत्यधर्म्माधर्म्माकाशादीनां परिणामानुपपत्तिरिति वाच्यं, चक्रकीलिकान्यायेनालोकाकाशपरिणामवत् समयक्षेत्रमध्यस्थेन कालद्रव्येणापि तद्बाह्यवस्तुपरिणामघटनात्, यथा हि-"देवानां पक्खेहिं ऊसासो वाससहस्सेहिं आहारो" इति वचनात् व्यवहारकालस्तत्रापि परिच्छेदकः, न चैतावता तत्र कश्चिद् व्यवहारकालः संजाघट्टि, श्वेताशाम्बरोभयनयेऽपि तन्निषेधात्, तद्वत् समयक्षेत्रस्थकालद्रव्येण सर्वत्र कालः पर्यायः परिणमते, एतेन योगशास्त्रअवान्तरश्लोकेषु "लोकाकाशप्रदेशस्था, भिन्नाः कालाणवस्तु ये। भावानां परिवर्त्ताय, मुख्यः कालः स उच्यते ॥ ८५ ॥ ज्योतिःशास्त्रे यस्य मानमुच्यते समयादिकम्। स व्याव-

हारिकः कालः, कालवेदिभिरामतः ॥ ८६ ॥ नवजीर्णादिभेदेन, यदमी भुवनोदरे । पदार्थाः परिवर्त्तन्ते, तत्कालस्यैव चेष्टितम् ॥ ८७ ॥ वर्त्तमाना अतीतत्वं, भाविनो वर्त्तमानताम् । पदार्थाः प्रतिपद्यन्ते, कालक्रीडाविडम्बिताः ॥ ८८ ॥" इत्यादिना कालाणवः परस्परं विविक्ताः प्रतिपादितास्ते पर्यायरूपा इत्युक्तं, न तु तेषां द्रव्यरूपत्वं, अनंतसमयस्वरूपत्वेन तद्विशेषणस्य सूत्रमात्र आगमेऽप्यनन्तद्रव्यत्वेन कथनाच्च, यद्यनंतसमयाः द्रव्यसमया इत्यर्थः तदा व्याहतिः स्पष्टैव, कालाणूनां द्रव्यत्वे तेषामसंख्यातत्वात्, अथानन्तसमयत्वमनन्तसमयपर्ययत्वं, "भवायुःकायकर्म्मादिस्थितिसंकलनात्मकः । सोऽनन्तसमयस्तस्य, परिवर्त्तोऽप्यनंतधा ॥ १ ॥" इत्यादिपुराणे स्पष्टम्, इति चेत् किं कालस्य विशेषणेन ? सर्वद्रव्याणां पर्यायानन्त्यात् तस्माल्लोकाकाशप्रदेशानां पुद्गलाणूनां च तत्तत्समयवैशिष्ट्यमेव कालाणुत्वं न वस्त्वन्तरं तत्, नन्वेवं 'मुख्यः कालः स उच्यते' इति कथं युक्तमिति चेत् नात्र कालः कालद्रव्यमित्ययमर्थः, नातः परः सूक्ष्मः पर्याय इत्यतः पर्यायापेक्षया मुख्य इति, तत एव गोमट्टसारे "ते कालाणू मुणेयव्वा" इत्येवोक्तं, न तु "दव्वाणि" इति, अत एव "समओ य अप्पदेसो पदेसमेत्तस्स दव्वजायस्स । वदिवददो सो वट्टइ पदेसमागासदव्वस्स ॥ १ ॥" इत्यत्र प्रवचनसारसूत्रे वृत्तौ चैकवचनं कालस्य, अथैवं समयक्षेत्रेऽपि तथैवास्तु किं द्रव्यकल्पनयेति चेत् न, प्रवचनविरोधात्, षड्द्रव्याणामुभयनये सम्मतेः, किंच-कालद्रव्याभावे समयपर्यायवैशिष्ट्यं परद्रव्याणां निर्हेतुकं स्यात्, न तु संततिमात्रेणान्वयिकालद्रव्यस्य साधने समयानामन्योऽन्यासंगत्या जीवस्यापि द्रव्यत्वमनयैव दिशाऽस्तु, ज्ञानक्षणानां स्वयं विशकलितानामेव द्रव्यत्वात्, तथाच बौद्धमतानुप्रवेश इति चेत् न, आकाशस्याप्येवं प्रदेशेभ्योऽपि अतिरिक्तस्यान्यस्यार्थक्रियाकारित्वेनानुपलम्भात् तत्रापि अनैक्यानुषंगात्, तथा च "आ आकाशादेकद्रव्याणि' इति तत्त्वार्थसूत्रम् "धम्मो अहम्मो आगासं

दव्वं एक्केकमाहिय" मिति उत्तराध्ययनं च विरुद्धयेत, तस्माद् द्रव्यस्वभावभेदेनैव सन्तोपात् किं कल्पनानर्थक्येन?, सन्ततेर्द्रव्यसमयानां कथंचिदभेदेन वस्तुरूपत्वाज्जात्यादिवत्, न चैवं बौद्धमतावेशः, संततेर्वस्तुरूपाया अक्षणिकत्वात्, अत एव कालद्रव्यस्य संततिमात्रेण ऐक्यप्रतिपत्त्याशयेन वस्तुतो द्रव्यसमयानामेव विशकलितानामानंत्येन "अजीवकाया धर्म्माधर्म्माकाशपुद्गला द्रव्याणि जीवाश्चे'ति" तत्त्वार्थसूत्रे कालद्रव्यस्य न ग्रहणं द्रव्यलक्षणे 'कालश्चे'ति सूत्रेणानुबंधश्चेत्युभयमपि संसूत्रितं वाचकैरिति, तेनादिपुराणे द्वयमप्युक्तं, सोऽस्ति कायेष्वसम्पातान्नास्तीत्येके विमन्वते । पड्द्रव्येषूपदिष्टत्वात् युक्तियोगाच्च तद्गति ॥१॥ रिति, ननु कालस्य शेषद्रव्यवद्यावल्लोकव्यापित्वं कालाणुद्रव्यत्वानंगीकारे न स्यात्, न चेष्टापत्तिः, लोकनालद्वात्रिंशिकायाम्--"धम्माइछदव्वपडिपुण्णो' इति तत्कथनात्, अन्यत्रापि उत्तराध्ययने—"धम्मो अहम्मो आगासं, कालो पोग्गलजंतवो । एस लोगोत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ १ ॥" किंच-यया वर्त्तनयाऽयं साध्यते सा वर्त्तनापि पदार्थानां तत्रास्ति तत्कथं तन्निषेध इति चेत् सत्यं, अस्ति कालः सर्वत्र, परं यः क्षणिकः समयपर्यायवान् द्रव्यसमयप्रवाहरूपोऽद्धाकालस्तस्यैव निषेधः, परं द्रव्यपर्यायरूप आयुष्ककाल उपक्रमकालश्च द्रव्यकालप्रयोगजन्यः सर्वस्मिल्लोकेऽस्तीति स्वीकारात्, यदिच समयक्षेत्रवत्तत्राप्यद्धाकालः स्यात् तर्हि ऋतुविभागोऽपि स्यात्,तस्य तत्कार्यत्वात्, यदुक्तमुत्तराध्ययनवृत्तौ--"यदमी शीतवातातपादयो भुवनभोग्या भवन्ति तदवश्यममीषां नैयत्येन हेतुना केनापि भवितव्यं, स च काल" इति, न चेष्टापत्तिः, ऋतुप्रमुखनिषेधागमात्, यदुक्तं क्षेत्रसमास-

१ कालपर्यायस्य सर्वव्यापकत्वात् द्रव्यत्वविवक्षया षड् द्रव्याणि सद्रव्यस्य चेतनाचेतनपर्याययोः पृथक् द्रव्यत्वविवक्षावत् ।

सूत्रे श्रीरत्नशेखरसूरिभिः— "नद्यो हृदा घना बादराग्निर्जिनाद्युत्तमपुरुषा नरजन्ममृती कालो मुहूर्त्तप्रहरदिनरात्रिवर्षादिकः
आदिशब्दात् चन्द्रसूर्यपरिवेषादयो मनुष्यक्षेत्रं मुक्त्वा परतो न भवंती" ति, अपिच-व्यवहारकालोऽपि मनुष्यक्षेत्र इत्युभयपक्ष-
सम्मतं, न च व्यवहारः सर्वथा निश्चयाद् भिन्न एव, बादराणां पर्यायाणां व्यवहारगोचरत्वात्, तद्व्यतिरिक्तद्रव्यस्य निश्चयाल-
म्बनात्, निश्चयव्यवहारयोस्तद्विषययोश्च भेदाभेदस्यैव प्रामाण्याच्चेत्युक्तं प्राक्, तेन यस्य यत्र व्यवहारस्तत्रैव तन्निश्चय इति
नियमात्, व्यवहारकालवत् निश्चयतोऽपि कालः समयक्षेत्र एवेति तत्त्वं द्वात्रिंशिकायां, ग्रामे ब्राह्मणादयश्चत्वारो वर्णा वसन्तीति-
वदुपचार एव, न ब्राह्मणाः सर्वग्रामे व्याप्य तिष्ठन्ति, एतत्प्रयोजनं तु साहित्यमेव, अन्यथा आशाम्बरनयेऽपि पञ्चास्तिकाये 'सम-
वाओ पंचण्णं समओत्ति जिणुत्तमेहिं पण्णत्तं । सो चेव हवइ लोओ तत्तो अमिओ अलोओ खं ॥ १ ॥' अत्र पञ्चानामस्तिकाया-
नामन्ययोगव्यवच्छेदफलेनैव कारणेन निर्णयात् षष्ठद्रव्यस्य निषेध एव स्यात् , स्थानान्तरात्तन्निर्णये त्वत्रापि तुल्यता, यद्वा सम-
यक्षेत्रबहिःस्थितवस्तुपरिणामस्थितिकालस्य चक्रकीलिकान्यायेनान्तःस्थिताद्धाकालस्य निमित्तत्वाद् यावल्लोकव्यापित्वमस्तु, सा-
क्षाद्रूपेण कालद्रव्यस्य समयक्षेत्रातिक्रमे समयासमयक्षेत्रव्यवस्थानुपपत्तेः, स्पष्टं चेदं प्रज्ञापनावृत्तौ ।

श्रीमुनिसुव्रतप्रभोर्गणधरोऽश्व इत्येतत्तु न सत्यवचः, तीर्थकराशातनाबलान् मिथ्यादृष्टित्वं तद्वक्तुः ख्यापयति, तत एव द्विष्टता
स्पष्टा तत्प्रमाणयितुः, श्वेताम्बरमते तद्ग्रन्थस्याप्यभावात्, श्रीमुनिसुव्रतस्य प्रथमगणधरो मल्लिनाम्नाऽभूत्, यदुक्तं प्रवचनसा-
रोद्धारसूत्रे-"उसहाइजिणिंदाणं आइमगणहरात्ति द्वारं ८-'सिरिउसहसेण १ पहु सीहसेण २ चारुरु ३ वज्जनाहक्खा ४। चमरो ५
सुज्जोय वियब्भ दिन्नपहुणो वराहो य ॥ १ ॥ पहु नंद कुच्छुहावि य सुभोम मंदर जसो अरिट्ठो य । चक्काउह संब कुंभो भिसय-

मल्ली य सुंभो य ॥ १८ ॥ वरदत्त अज्जदिन्ना तहिंदभूई य गणहरा पढमा । सिस्सा रिसहाईणं हरंतु पावाइं पणयाणं ॥ १९ ॥
एतेन-तुरगगणधरत्वं गर्भसञ्चार रामा, सवसनपरिमुक्ता नायिका तीर्थदेवः । पलरसनविधाने मंदिरे भिक्षुचर्या, समयगहनमेतद्भावितं श्वेतपट्टैः ॥ १ ॥" इति जीर्णाशाम्बरस्यापि दुष्टं वचः संसारवर्द्धनं मिथ्यात्वादित्यावेदितं, यत्तु घोटकस्यापि प्रबोधनं सकलजनसमक्षं कृतं तत्तु न बाधाय, तीर्थकृतां वाण्या सर्वजीवप्रबोधनात्, त्वन्मते ह्यादिपुराणे २३ पर्वणि-'योगीन्द्रा रुद्रबोधा विबुधयुवतयः सार्यिका राजपत्न्यो, ज्योतिर्वन्येशकन्या भवनजवनिता भावना व्यन्तराश्च । ज्योतिष्काः कल्पनाथा नरवरवृषभास्तिर्यगोघैः सहामी, कोष्ठेपूक्तेष्वतिष्ठन् जिनपतिमभितो भक्तिभारावनम्राः ॥ १ ॥' इति तिरश्चां गणत्वेन गणनात्, शतेन्द्रगणनायां सिंहेन्द्रगणनवत् कस्याचित्तिर्यक्चरयानरत्नाश्वस्य गणधरत्वापत्तिः ।

साधोर्मांसग्रहणं तदपि मुग्धप्रतारणमात्रं, श्रीदशवैकालिके-'अमज्जमंसासियऽमच्छरीया' इति, सूत्रकृदङ्गे-'अमज्जमंसासिणो' इत्यागमे मुनिस्वरूपे तन्निषेधभणनात्, यत्तु कुत्रचिच्छब्देन मांसाहारो दृश्यते, तत्र दशवैकालिके-'महुघयं व भुंजिज्जा संजए' इत्यादौ मधुशब्देन खण्डिकादिकमिति व्याख्यानात् सर्वत्र अर्थान्तरमेव प्रतिपादितं दृश्यते प्राचीनानूचानैः, न चार्थान्तरकरणमसङ्गतं, रत्नमालाग्रन्थे ज्योतिषिकैरपि अर्थान्तरकरणात्, तथाहि-अष्टम्यादिषु नाद्यात् ऊर्ध्वगतीच्छुः कदाचिदपि विद्वान् । शीर्षकपालान्त्राणि नखचर्मतिलास्तथा क्रमशः ॥ १ ॥ अत्र शीर्ष-तुम्बकं अन्त्राणि-महत्यो मुद्गरिकाः नखा-वल्लाश्चर्माणि-सेल्लरकानि इत्यर्थः समर्थ्यते, आगमेऽपि प्रज्ञापनायाम्-'एगट्ठिया य बहुबीयगा य' इत्यत्र एकमस्थि-बीजमित्यर्थः, तथा 'वत्थल पोरग मज्जार पोई बिल्ली य पालक्का ॥४१॥ दगपिप्पली य दव्वी मच्छिय (सोत्तिय) साए तहेव मंडुक्की । तथा-बिंटं मंसं

कडाइं एयाइं हवंति एगजीवस्सेति' ( ९९ ) सूत्रलेशः स्पष्ट एव, न चात्र वनस्पत्यधिकारात्तथैवार्थः उपपद्यते नान्यत्रेति वाच्यम्, अन्यत्रापि यत्याहाराधिकारात् तथैव युक्तत्वात्, यतीनामाहारविशेषणानि-'अरसाहारे विरसाहारे अंताहारे पंताहारे' इत्येव प्रवचने भण्यंते, घृतादिविकृतीनामपि परिभोगः कारणिकः, तर्हि स्थानाङ्गसूत्रे महाविकृतित्वेनोक्तस्य 'कुणिमाहारेणे' त्यागमवचनेन नरकायुर्बन्धहेतोः सम्यक्त्ववतोऽपि त्याज्यस्य सर्वाङ्गदयामयश्रीमन्मौनीन्द्रशासनप्रतिषिद्धस्य मुनीनां सर्वजगज्जीवहितानां मांसाहारस्य कदापि न युक्तियुक्ततेत्युत्तंभितहस्ता व्याचक्ष्महे, न च शुद्धाहारगवेषणावतां मांसस्यापि शुद्धत्वेनोपलम्भे तदाहृतिर्न विरुद्धेति चिन्त्यं, द्रव्यस्यैव--'आमासु य पक्कासु य, विपच्चमाणासु मंसपेसीसु। उप्पज्जंति अणंता तव्वण्णा तत्थ जंतुणो ॥ १ ॥' इत्यागमादशुद्धत्वात्, तेन लाघवान्मद्यमांसादिशब्दस्य क्वचित्कथनेऽपि न भ्रमणीयं-"पिट्ठमंसं न खाइज्जा" इति दशवैकालिके निन्दावाक्यस्य, तथा सरसाहारस्यापि मांसशब्दाभिधेयत्वात्, यद्गौडः "आमिषं भोज्यवस्तुनि" आस्तामाहारः "सामिसं कुललं दिस्स, वज्झमाणं निरामिसं । आमिसं सव्वमुज्झित्ता, विहरिस्सामो निरामिसा ॥ १ ॥" इत्युत्तराध्ययने अभिष्वङ्गहेतोर्धनधान्यादेरपि आमिषत्वेन भणनं, तेन भ्रमस्यास्य भवभ्रमहेतुतेत्यन्यत्र विस्तरः ।

प्रतिगृहभिक्षायां तु भवादृशानामश्रद्धालूनां किं प्रत्युच्यते !, श्राद्धानां तु तथैव यतीनामाहारकरणं युक्तं प्रतिभासते; तवागमेऽपि, तदुक्तं प्रवचनसारवृत्तौ "स्वयमनशनस्वभावत्वादेषणादोषशून्यभैक्षत्वाच्च युक्ताहारः साक्षादनाहार एव स्या" दिति, पुनस्तत्रैव "भिक्षाचरणेनैवाहारो युक्ताहारः तस्यैवारम्भशून्यत्वात्, अभैक्षचरणेन त्वारम्भसम्भवात् प्रसिद्धहिंसायतनत्वेन न युक्त" इति, न च भिक्षाकथनादेकगृहे भिक्षाशनमिति चिन्त्यं, भिक्षासमूहो भैक्ष्यमिति व्याकरणनिरुक्तेः, अत एवावदत् कुन्दकुन्दः

ओघप्राभृतसूत्रे,-"उत्तममज्झिमगेहे दारिद्दे ईसरेसु निरवेक्खा। सव्वत्थ गिहियपिंडा पव्वज्जा एरिसा भणियां ॥ १ ॥" यद्येक-गृह एव भिक्षा तर्हि तत्त्वार्थे मुनीनां याचनापरिषहः सोऽपि न संगतिं गाते, प्रतिगृहपर्यटन एव तस्य सम्भवात्, किंच-भ्रामरी मधुकरी गोचरीत्यादिशब्दैरपि प्रतिगृहं भिक्षाभिधेया, भ्रमराणां गवां च सर्वत्राशनप्रतीतेः, भिक्षाशुद्धिपरस्य मुनेरशनं पंचविधं गोचार १ अक्षम्रक्षण २ उदराग्निप्रशमन ३ भ्रमराहार ४ श्वभ्रपूरण ५ नामभेदेन, यथा गौस्तृणानि नानादेशे यथालाभमभ्यव-हरति, तनुशकटं अनवद्यभिक्षारूपाक्षम्रक्षणेन समाधिपुरं प्रापयति २ यथालब्धेन सरसेन विरसेन वाऽऽहारेण उदराग्निं शमयति महानलवत् ३ दातृजनबाधया विना कुशलो मुनिर्भ्रमरवदाहरति ४ गर्त्तापूरणं यद्वत्कचवरकेण स्यात् तद्वत् जठरपूरणं ५ इति भावनासंग्रहे, तथा 'मुनेरेकागारसप्तवेश्मैकरथ्यार्द्धग्रामदातृवेषगृहभाजनभोजनादिविषयः संकल्पो वृत्तिपरिसंख्या वृत्तिसंक्षेपस्तप इत्यपि तत्रैव, अथ पात्रं विना नेदृशी भिक्षा स्यात्, एतद्ग्रहस्तु परिग्रहत्वादेव निषिद्ध इति चेत्, न, तस्यापरिग्रहत्वात्, यदुक्तं विशेषावश्यके- वत्थाइ तेण जं जं संजमसाहणमरागदोसस्स। तं तमपरिग्गहुच्चिय परिग्गहो जं तदुवघाई ॥ १ ॥' अन्यत्रापि-"यत्संयमोपकाराय प्रवर्त्तते प्रोक्तमेव तदुपकरणम्। धर्म्मस्य हि तत् साधनमतोऽन्यदधिकरणमाहार्हन् ॥१॥" यथा चैतद्धर्म्मोपक-रणं तथा निर्लब्धिकानां पाणिपात्रत्वे दोषसद्भावादप्रतिलेखितश्रावकादिपात्रभोजने पश्चात्कर्म्मपुराकर्म्मणोरवश्यंभावाच्च प्राक् साधितमेव, किंच-पात्राभावे गुरुरपि पर्यटति शिष्योऽपि, तथा च द्वयोरेकत्र भिक्षायामवश्यं भिक्षासंकोचः श्रावकस्य चिन्ता वा, एकस्याप्यनादृतप्रत्यावर्त्तनेऽनुतापो वा गृहस्थस्य, गुरुशिष्ययोः 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'ति न्यायावाप्त्या विनयाति-क्रमेण प्रवचनखिंसापि, अत एव प्रवचनसारवृत्तौ-'आहारग्रहणनिषयच्छेदप्रतिषेधार्थमपवादपदेनान्यवस्तुनोऽघटमानत्वात् पात्र-

मेव संगच्छते, पिच्छिकायास्तत्राप्रयोजनात् , अपि च समन्तभद्रकृतश्रावकाचारे-'पात्रं खर्पररूपं लोहमयं वा गृहीत्वा तन्मध्ये पंचगृहभिक्षामाचरेत्" तथा आशाधरकृतश्रावकाचारे-'तत्तद्व्रतास्त्रनिर्भिन्नश्वसन्मोहमहाभटः। उद्दिष्टपिण्डमप्युज्झेदुत्कृष्टः श्रावकोऽन्तिमः ॥ ३० ॥ तद्भेदलक्षणार्थमाह- 'स द्वेधा- प्रथमः श्मश्रुमूर्द्धजानपनापयेत् । सितकौपीनसंव्यानः, कर्त्तर्य्या वा क्षुरेण वा ॥ ३८ ॥ स्थानादिषु प्रतिलेखन्मृदूपकरणेन सः । कुर्यादेव चतुष्पर्व्यामुपवासं चतुर्विधम् ॥ ३९ ॥ स्वयं समुपविष्टोऽद्यात्, पाणिपात्रेऽप्यभाजने । स श्रावकगृहं गत्वा, पाणिपात्रस्तदंगणे ॥ ४० ॥ स्थित्वा भिक्षां धर्म्मलाभं, भणित्वा प्रार्थयेत वा । मौनेन दर्शयित्वाऽगं, लाभालाभे समोऽचिरात् ॥ ४१ ॥ निर्गत्यान्यगृहं गच्छेद्भिक्षोद्युक्तस्तु केनचित् । भोजनायार्थितोऽद्यात्तद्, भुक्त्वा यद्भिक्षितं मनाक् ॥ ४२ ॥ प्रार्थयेतान्यथा भिक्षां, यावत्स्वोदरपूरणीम् । लभेत प्रासु यत्राम्भस्तत्र संशोध्यतां चरेत् ॥ ४३ ॥ आकांक्षन् संयमं भिक्षापात्रप्रक्षालनादिषु । स्वयं यतेत वा दर्प्यः, परथाऽसंयमो महान् ॥ ४४ ॥ ततो गत्वा गुरूपान्तं, प्रत्याख्यानं चतुर्विधम् । गृह्णीयाद्विधिवत्सर्वं, गुरोश्चालोचयेत्पुरः ॥ ४५ ॥ यस्त्वेकभिक्षानियमो, गत्वाऽद्यादनु मुन्यसौ । भुक्त्यलाभे पुनः कुर्यादुपवासमवश्यकम् ॥४६॥ वसेन् मुनिवने नित्यं, शुश्रूषेत गुरूंश्चरेत् । तपो द्विधापि दशधा,वैयावृत्यं विशेषतः ॥ ४७ ॥ तद्वद् द्वितीयः किंत्वार्यसंज्ञो लुंचत्यसौ कचान् । कौपीनमात्रयुग् धत्ते, यतिवत्प्रतिलेखनम् ॥ ४८ ॥' इत्याद्यक्षरैः स्पष्टमेव प्रतिगृहं भिक्षापात्ररक्षणं च प्रतीयते,न चैषा स्थितिःश्रावकाणां न मुनेरिति शंक्यं, सदायावज्जीवं ताद्रूप्येण लुंचनकरणेन पिच्छिकादिमुनिलिंगेन मुनित्वनिर्णयात् ,अन्यथा-'खेडेऽवि न कायव्वं पाणिपत्तं सचेलस्स'इतिषट्प्राभृतवचनात् पाणिपात्रत्वविरोधः,यत्तु तेषु मुनित्वं न श्रद्धीयते तन्मुनेर्नोऽस्माकं वस्त्रधारणमुचितमित्याग्रहबलमेव, न पुनस्तत्त्वं जिज्ञासेति, अत एव भगवतोऽपि गृहस्थपात्रे प्रथमपारणकं

सपात्रो धर्म्मो मया प्रज्ञापनीय इत्यवमर्शेन जज्ञे, न च तत्र मूर्च्छाबाहुल्यं, भवितव्यतासूचनमेतत्, यदवोचुर्वृद्धाः 'निःस्पृहोऽपि भगवान् अनुपयोग्यपि देवदुष्यं यत् शकलीकृत्यार्द्धं ब्राह्मणाय दत्तवान् न्यस्तवाँश्चावशिष्टमर्द्धं स्वस्कन्धे तत् भगवत्सन्ततेर्वस्त्रपात्रादिमूर्च्छासंसूचकं, यद्वा कालानुभावात् ऋद्धिमानपि नौदारचित्तेनौचित्यकर्त्ता भविष्यतीति संसूचकम्-इत्युदीर्य गिरं धीरो, व्यरंसीत्स्वामिपार्थिवः। देवस्तु सस्मितं तस्य, वचः प्रत्यैच्छदोमिति ॥ १ ॥ किमेतत् पितृदाक्षिण्यं ?, किं प्रजानुग्रहेषिता ? । नियोगः कोऽपि वा तादृग् ? येनैच्छत्तादृशं वशी ॥२॥' इत्यादिपुराणे स्पष्टं, दृश्यन्ते च महानुभावानां भवितव्यतावशात्तत्तदाचरणविशेषः, यत उक्तम्-''अवश्यंभाविकार्येषु, मुनिरपि हि मुह्यति''। कथमन्यथाऽतिमुक्तभट्टारकेण जीवयशसो देवकीवसुदेवयोश्च तत्तन्निमित्तमाचष्टे इति हरिवंशपुराणे, तेन भगवत्प्रवृत्तेर्लोकोत्तरत्वान्न कश्चिद्बाध इत्युक्तचरं, तस्माद्धर्मोपकरणानामनुमत्या सिद्धा प्रतिगृहं भिक्षा।

'धर्म्मद्वेषिणो मारणे न पातक' मित्यपि न योग्यानां जैनधार्म्मिणां वक्तुं युक्तं, यत्तु विष्णुकुमारेण महाव्रतिना पञ्चेन्द्रियव्यापादनं कृतं, तत्रापीर्यापथप्रतिक्रमणप्रायश्चित्तेन विशुद्धिः, यदुक्तं गोमट्टसारवृत्तौ-''प्रतिक्रम्यते-क्रमात् प्रमादकृतो दोषो निराक्रियतेऽनेनेति प्रतिक्रमणं, तच्च दैवसिकरात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकेर्यापथिकोत्तमार्थकालभेदात् सप्तविध'' मिति, अथ महाव्रतिनो जीवघातस्त्वसम्भाव्य एवेति चेत् न, प्रागेव समयसारवृत्त्याद्युक्तेन कथनात्, किंच-यदि जीवघातकत्वं न सम्भवति तदा कार्पट्येन वचनच्छलेन वञ्चकत्वमपि न सम्भवेत्, तथा च कथं भवन्नये तदुक्तिः, यतो द्रव्यसंग्रहवृत्तौ वात्सल्याधिकारे-तत्र हस्तिनागपुराधिपतिपद्मराजसम्बन्धेन बलिनाम्ना दुष्टमन्त्रिणा निश्चयव्यवहाररत्नत्रयाराधकपद्माचार्यप्रभृतिसप्तशतयतीनामुपसर्गे

क्रियमाणे सति विष्णुकुमारनाम्ना निश्चयव्यवहारमोक्षमार्गाराधकेन परमयतिना विकुर्वणर्द्धिप्रभावेन वामनरूपं कृत्वा बलिमन्त्रि-पार्श्वे पादत्रयप्रमाणभूमिप्रार्थनं कृत्वा पश्चादेकपादो मेरुमस्तके द्वितीयस्तु मानुषोत्तरपर्वते दत्त्वा तृतीयपादस्यावकाशो नास्तीति वचनच्छलेन मुनिवात्सल्यनिमित्तं बलिमन्त्री बद्ध' इति, अत्र वधबन्धयोर्विवादे नाममालाप्रमाणं, बलिवेश्मेति पातालाभिधानात्, ततोऽनुमीयते मुनिना पादेन चम्पितो, लोकेऽपि तथाप्रतीतेः, एवं विद्याधरश्रवणवज्रकुमारसम्बन्धोऽपि बोध्यः, न चैतयोस्तत्-समये न महाव्रतित्वं, संज्वलनक्रोधादेर्व्रताविघातकत्वात्, तादृशातीचारस्य प्रायश्चित्तगोचरत्वात् ॥ भरतस्य षड्लक्षपूर्वेषु गतेषु जातत्वात् सार्वत्रिकयुगलधर्म्मस्य भगवतैव निषिद्धत्वात् तत्समये सुंदरीविवाहेच्छया तथाऽध्यवसायस्य संभवात्, तत एव नास्य फलवत्ता, तादृग्विवेकोदयात् ॥ परो जल्पः कृतोत्तरः ॥ द्रौपद्याः पञ्चभर्तृकत्वे स्वस्वागमस्वीकारे लोकोक्तिरेव प्रमाणं, पञ्चभिः काम्यते कुन्ती, तद्वधूः पञ्च काम्यति । सतीनामग्रणीः ख्याता यशः पुण्यैरवाप्यते ॥ १ ॥ अन्यथा-'वेश्यां वसन्तसेनाख्यां, पार्थिवानां वरैर्जनैः । वीक्ष्यैवं चैव सौभाग्यं, भूयादिति निदानकम् ॥ १ ॥ धृत्वा बुधजनैर्निन्द्यं, प्रान्ते मृत्वा तपोबलात् । प्रागुक्तसोमभूतेश्च, देवी जाताऽच्युते दिवि ॥ २ ॥' इति हरिवंशे गदितं निदानं निष्फलं समापतति ॥ तत उत्तरजल्पौ प्राग् निरुत्तरौ परमज्ञानिप्रवृत्तेर्लोकोत्तरत्वात् ॥ पञ्चशतचौराणां तथैव प्रतिबोधदर्शनेन उपदेशानुसारेण हस्तपाद्यवयवचालने विहारवदबाधाद्, न चेदाद्यः प्रभुस्त्वन्नये पाण्मासिकयोगात्परं षण्मासीं यावद् ज्ञानवानपि गोचरे प्रत्यहं बभ्राम कथमिति ॥ द्वासप्ततिसहस्रस्त्रीभर्तृत्वे किं बाधनं ?, चक्रिऋद्ध्याधिक्यमिति चेद्बाहुबलिनो बलाधिक्यवददोषात्, दृश्यन्ते च पुण्यप्रकृतीनां नानात्वं, दमयन्तीतिलक-वत्, तत एव नाश्चर्यता बलाधिक्यस्य ॥

कदाह- 'सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खिज्जा । मुच्चइ अइवायायो पुणोवि सोही नयाविरई ॥ १ ॥ तवापि शास्त्रेऽणुमात्रपरिग्रहनिषेधेऽपि पुनः प्रवचनसारनाटके तदपवादभागेव दर्शितं ॥ उपवासे औषधभक्षणं तु न श्वेताम्बरसंमतं, यः पुनः कश्चिदनाहारग्रहः स तु कारणिक इति का चर्चा ?, स्वीयस्वीयसंप्रदायप्रामाण्यात्, अन्यथा यतेः कायेऽपि उत्सर्गात् निरीहस्य किमौषधनिषेवणेन ?, तथा चौषधदानमपि पापायेत्येवाकल्प्यं तेन युक्ताहारोऽपि अनाहार इति तवैव कथनादनिष्टाचित्तवस्तुग्रहणेऽपि अनाहारत्वात् नोपवासविनाशः ॥-विलीयन्ते यथा मेघा, यथाकालं कृतोदयाः । भोगभूमिभुवां देहास्तथाऽन्ते विश्वरारवः ॥ १ ॥ यथा वैक्रियके देहे, न दोषमलसंभवः । तथा दिव्यमनुष्याणां, देहशुद्धिरुदाहृता ॥२॥'[इत्यादिपुराणे ९ पर्वणि मुनिदानभुजां यौगलिकानां पुण्यप्रकृतिवशात् कर्पूरवद् देहोड्डयनं ततो नैर्मल्यं नीहाराभावश्चेत्यादि दिव्यस्थितिः त्वन्मते गीयतेऽस्मन्मते तदसंभवः, तथा पुण्यातिशयाल्लब्धषट्खण्डभरतसाम्राज्यस्य अनेकविद्याधरराजसेव्यस्य मागधादिदेवैर्वैक्रियर्द्धिधरैरप्यभिवन्द्यस्य विद्याबलाद् दिव्यशक्त्या वा प्रागर्जिततपोलब्ध्या वा चतुःषष्टिसहस्रराजकन्यानां तद्द्विगुणवरांगनानां चक्रिणोऽपि नरदेवत्वाद्वैक्रियदेहेन भोगः संबोभवीतु ॥

तथा चारित्राचाररक्षणाय पीठफलकाद्युपकरणं तथेर्यापथदण्डकोच्चारेण प्रतिक्रमणमपि दण्डकस्थापनं विना न युज्यते, लोकेऽपि सर्वक्रियाव्यवहारस्य स्थापनापूर्वकत्वात्, राजव्यवहारवत्, तत एव लोके ब्रह्मचारिणां चातुर्वर्ण्येऽपि दण्डग्रहनियमो, न चैषां मिथ्यादृशां का वार्त्ता ? यथेच्छत्वादिति वाच्यं, श्रीपादब्रह्मचारिनैष्ठिकपिच्छिकाकमण्डलुवेदिकायज्ञपुराणादिपरिभाषया भवतां तत्साम्यस्यापि युक्तत्वात् ॥ कर्णवृद्धिरपि संपातिमसत्त्वरक्षणार्थं मुखवस्त्रावष्टम्भाय हितावहैव, न विच्छेदोऽप्ययं, केशो-

अप
पद
सिध्ध्यादि

प्रबोधिता इति आवश्यकवृत्तौ, कथानकं स्पष्टं ॥ देवक्या गृहे साधुगमनं तु गजसुकुमालाधिकारे तथाविधश्राद्धभावातिशयेऽन्यस्याग्राह्यवस्तुनोऽग्रहणेऽपि सुखभक्षिकामात्रेणापि पात्रप्रतिलाभेनाहमनुग्रहं लभे इत्याशयेनेत्यवगन्तव्यं, तथैवाधुनापि परम्परागमप्रवृत्तेः, अयमर्थस्तु अजुगुप्सनीयेषु अगर्हेषु इति विशेषणद्वये सुलभः, न चेत् यद्गृहे पानीयं पीतं स तद्रूप एवेति लोकविरोधः, अन्यथा चाण्डालादिगृहस्यावर्जनं स्यात् ॥ देवनरादिविजातीयभोगोऽपि साम्प्रतं दृश्यते श्रूयते च स्थानांगादौ, अन्यथा चूडावल्याः पुरुषेण भोगः कथं स्यात् ?, न चै तत् मिथ्या, प्रत्यक्षादेव ॥ षष्टिसहस्रसगरसुतोद्भवप्रत्यये द्वात्रिंशत्सुतानामश्रद्धाने मत एव शरणं ॥ कामस्य जगद्वशीकारसामर्थ्यात् प्रजापतेः स्वतनयाकामुकत्वं शास्त्रान्तरेऽपि गीयते, तत्र वासुदेवोत्पत्तिस्तु नीचैर्गोत्रोदयवशात् नासंभाव्या, विचित्रत्वात् कर्मपरिणतेः, नहि अस्मदादिमन्दबुद्धिवितर्कानुरोधादेव जगत्परिणमते ॥ जल्पद्वये आर्यत्वमनार्यत्वाविनाभावि साधुत्वचौरत्वादिवत्, तेन यत्रार्यास्तत्र अनार्या अपि भवन्त्येव, म्लेच्छानां नानाजातीयत्वात्, विन्ध्यमलकुटजवने खदिरः किरातमुख्यः समाधिगुप्तमुनीन् दृष्ट्वा प्रणतः, तस्मै धर्मलाभ इत्युक्ते कोऽसौ धर्मलाभ इति परिप्रश्ने मांसादिनिवृत्तिधर्म्मस्तत्प्राप्तिर्लाभः ततः सुखमिति चारित्रसारग्रन्थे भिल्लपल्ल्यादीनां तत्रापि शास्त्रे श्रवणात् नानुपपत्तिः ॥ प्रमाणाङ्गुलैरेकक्रोशस्य चतुःशतगुणत्वात् उत्सेधाङ्गुलत्वेन चतुःशतक्रोशा एव भवन्ति, चउसयगुणं पमाणंगुलमुस्सेहंगुलाउ बोद्धव्वमित्यागमात्, यत्तु त्वन्मये पञ्चशतक्रोशा इत्युक्तं तत् कया गणनयेति प्रष्टव्योऽस्ति भवान् ॥ प्राणान्तकष्टेऽपि न व्रतभङ्ग इति उत्सर्गः सम्यगेव मोक्षमार्गः, परं तस्यापवादसापेक्षत्वेनैव प्रामाण्यात् यदा वैमनस्यं तदा पापस्य प्रायश्चित्तविशोध्यत्वादपवादोऽपि मार्गत्वेनैव जिनेनोक्तः, परं पापं न भवतीति न ज्ञानिवचनं, तेन यथामनःसमाधानं व्रतरक्षा विधेया, एतदाशयेन ओघनिर्युक्ति

वैश्यशूद्रभेदाच्चतुर्विधाः-तीर्थक्षत्रियाः स्वजीवनाविकल्पादनेकधा-वानप्रस्था अपरिगृहीतजिनरूपा वस्त्रखण्डधारिणः' इति चारित्रसारे भावनासंग्रहापरनामके, अत एवाशाधरः श्रावकाचारे प्राह- अथ शूद्रस्याप्याचारविशुद्धिमतो ब्राह्मणादिवद्धर्म्यक्रियाधिकारित्वं यथोचितमनुमन्यमानः प्राह-शूद्रोऽप्युपस्कराकारवपुःशुद्ध्याऽस्तु तादृशः । जात्या हीनोऽपि कालादिलब्धौ ह्यात्माऽस्तिधर्म्मभाक् ॥ १ ॥" यत्तु आचारांगसूत्रे- 'से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठे समाणे से जाइं पुण कुलाइं जाणेज्जा, तंजहा-उग्गकुलाणि वा भोगकुलाणि वा राइन्नकुलाणि वा खत्तियकुलाणि वा इक्खागकुलाणि वा हरिवंसकुलाणि वा एसियकुलाणि वा वेसियकुलाणि वा गंडागकुलाणि वा कुट्टागकुलाणि वा गामरक्खकुलाणि वा बोक्कसालियकुलाणि वा अन्नयरेसु वा तहप्पगारेसु अदुगुंछिएसु वा अगरहिएसु वा असणं वा पाणं वा खाइमं वा साइमं वा फासुयं एसणिज्जं मन्नमाणे जाव पडिगाहेज्जा' इति द्वितीयश्रुतस्कन्धे प्रथमाध्ययने द्वितीयोद्देशके इत्यागमोक्त्या अप्राप्तगुरुपारम्पर्यार्थाः केचित् श्वेताम्बरविशेषा भिक्षां सर्वकुलेषु समाददते तदपि भ्रमभूलं, यतस्तत्रैव तृतीयोद्देशके केषांचित् कुलानां निषेधात्, सर्वकुलेषु उच्चनीचमध्यमेषु निरवशेषभिक्षाग्रहनियमविरोधात्, तत्सूत्रं यथा-'से भिक्खू वा भिक्खुणी वा से जाइं पुण कुलाइं जाणेज्जा, तंजहा-खत्तियाणि वा राईणियाणि वा रायपेसियाणि वा रायवंसट्ठियाणि वा अंतो वा बहिं वा गच्छमाणाण वा सन्निविट्ठाण वा निमंतमाणाण वा अनिमंतमाणाण वा असणं वा ४ लाभे संते नो पडिगाहेज्जा ।' तेन सूत्रसन्दर्भसमये साम्प्रतीनज्ञातिव्यवहारवद् व्यवहाराभावात् कर्म्मणैव तत्तद्रूपव्यवहारात् ये पारम्पर्येणाभिगतजीवाजीवादिपरमार्थश्राद्धवंशशुद्धा मिथ्यादृशोऽपि तथा पारम्पर्येण मद्यमांसादिदुष्परिभोगविमुक्तवंश्यास्तेषामेव गृहे यतिना भिक्षा प्राप्नोति परमार्थः, अत एव यावज्जीवमस्माकमनाकुट्टिरिति वचसा साधुना राजपुत्रा

योग्य कुलानि

देहोच्चत्वे भगवतो वृषभदेवस्य जन्मनः प्रारम्भात् पट्लक्षपूर्वगमने बाहुबलिनो जाततया स्तोककालान्तरत्वात् तावत्प्रमाणत्वं न्यायोपेतमेव, न हि पितुरुच्चत्वे सामान्यमाधिक्यं वा पुत्रस्य न स्यादिति, प्रत्यक्षविरोधात्, तेनादिपुराणे 'प्राचीनार्के सह त्विषा' इति प्रागुक्तदृष्टान्ते सुन्दर्या सह बाहुबलिनो युगलजातत्वं दृढीकृतं 'मरुदेव्या समं नाभिराजो राजशतैर्वृतः। अनूत्तस्थौ तथा द्रष्टुं, विभोर्निष्क्रमणोत्सवम् ॥ १ ॥' इति १७ पर्वणि पित्रोर्जीवनं भगवद्दीक्षासमयं यावदुक्तं, अस्मिन् मते भगवन्मातुर्जीवनमपि केवलज्ञानप्रापणं यावदुक्तं, न चैतन्न संगच्छते, यौगलिकत्वान्मातृपुत्रयोः स्तोकान्तरत्वेन तद्गमकत्वं सम्भाव्यते, ततश्च सिद्धिरपि, न चेत् 'संघयणं संठाणं उच्चत्तं कुलगरेहिं सम'मिति आवश्यकनिर्युक्तिवचनात् मरुदेव्याः पंचधनुःशतोच्चत्वे मुक्तिरपि न युक्तिमती, एतेन भाग्यवत्याः स्त्रियाः किंचिदूनत्वं, ततो नाभेः सपादपंचधनुःशतोच्चत्वेऽपि मरुदेव्याः पंचधनुःशतान्येव, तथा हस्त्यारूढत्वेन किंचिन्न्यूनत्वं नाभेस्तनूच्चत्वे सामान्येऽपि सम्भवतीत्यादिविकल्पाः कृतोत्तरा इति, आस्तां बाहुबलिन उच्चत्वं, अष्टानां नप्तॄणामपि तथोच्चत्वमिति, तत एवाश्चर्यता।

शूद्राणां गृहे भिक्षा इत्यत्र किं शूद्रत्वं ?, जात्या आचरणेन वा ?, नाद्यः, जात्या शूद्रत्वं ब्राह्मणैः साम्प्रतीनवणिग्मात्रस्य व्यवह्रियते, तत्र भवतामपि आहारात्, अथाचरणेन शूद्रत्वं चेत् आचरणं मद्यमांसागलितजलपानाद्यं, न च तत्रास्माकं जैनपरम्परागतानामाहारः, किन्तु श्राद्धव्यवहारपारम्पर्यविशुद्धानामेव गृहेऽशनग्रहणमिति नियमात्, "संयमः पंचाणुव्रतप्रवर्त्तनं तपः अनशनादिद्वादशविधानुष्ठानमित्यार्यषट्कर्मनिरता गृहस्था द्विविधा भवन्ति जातिक्षत्रियास्तीर्थक्षत्रियाश्च, तत्राद्याः क्षत्रियब्राह्मण-

त्पाटनवच्च दोपाय, अन्यथा लोमोत्कर्षणमात्रेणापि सूत्रकृदंगे हिंसाप्रतिपादनात् तदपि न कार्यं, स्त्रीमुक्तिस्तु प्राक् साधितैव, पर्यंकसिद्धत्वमपि त्वन्मये सिद्धं तर्हि गजारूढायास्तस्याः पर्यंकासनसंभवात् नायुक्तता, किंच-पत्नी नास्ति कुतः सुतः इतिन्यायात् मुक्तिरेव नांगीक्रियते तर्हि किमासनचर्चयेति, अस्मन्मयापेक्षया तु नासननैयत्यं, जले समुद्रादौ सिद्धिगमनात् ॥ बालवृद्धग्लानादीनां द्विवारभोजने न कश्चिद्बाधः, परं पात्रपरिग्रहभयादयं तवाग्रहो न विचारसहः, तत एव त्वया परिग्रहाशयेन ब्रह्मचारिणां श्राद्धत्वेन श्रद्धानम् आर्यिकाणां महाव्रतारोपेऽपि श्राद्धीश्रद्धानं च क्रियते, तत् सर्वं स्वविकल्पसाधनायैव, न तात्त्विकम्, अन्यथा आशाधराद्युक्त्या प्रागुक्तयावत्स्वोदरपूरणभिक्षायां का गतिः स्यात् ?, गृहे स्थित्वा भोजने द्वित्रिपंचगृहभिक्षायाः पंचशो भुक्तिप्रसंगः, पंचानामपि गृहाणां भिक्षामिलने पाणिपात्रत्वासंगतिरेव, तेन पात्रावश्यंभावे परिग्रहप्रसंगः, न च श्राद्धत्वात् न दोषः, अनया रीत्या सामायिकादिचारित्रवतां स्थविरकल्पिकानामप्यदोषात्, तेषामपि भगवत्यां "पिंगलए नामं नियंठे वेसालियसावए" इत्यागमवाक्यात् तथा भणने सांमत्यात् ॥ तदुत्तरजल्पो गृहस्थसिध्द्या कृतोत्तरः ।

अष्टादशदोषचतुस्त्रिंशदतिशयवैपरीत्ये त्वया स्वाभिमतं संकल्पितमस्माभिर्वेति कोशपानप्रत्यायनीयं, परं तत्त्वार्थसूत्रे क्षुत्पिपासे साक्षादुक्ते अष्टादशदोषमध्ये निषिद्धे सप्तधातुरहितदेहत्वं त्वया उक्त्वा पुनः गोक्षीररुधिरमांसत्वमुक्तं तत् पूर्वापरविरुद्धं स्पष्टमेव ॥ केवलिनः शरीरे कर्पूरवदुड्डीने निर्वाणकल्याणकरणं दुर्घटं, अथ केशानां मृतप्रायत्वात् न तदुड्डयनं तैः कल्याणं क्रियते इति चेन्न, सप्तधातुविवर्जितत्वे तस्याप्यसम्भवात्, किं चैवं निर्वाणस्थानानियमोऽपि न युक्तः, आकाशे स्थिता आकाश एवोड्डीनदेहा इति कस्य कुत्र निर्वाणस्थानमिति, यत्रार्हतां गणभृतां श्रुतपारगाणां, निर्वाणभूमिरिह भारतवर्षजानाम् । तामद्य शुद्ध-

मनसा क्रियेत्यादिपूज्यपादकृतस्तोत्रे भूमिरेवोक्ता, केवलिनामस्तु वा यथा कथंचित्, यौगलिकानां तथास्वीकारे गर्भानुपपत्तिर्वीर्यस्य नीहाररूपत्वात् तेषां तद्भावात्, अथ विचित्रत्वाद्भावानां सर्वमेतन्न्याय्यमेवेति चेद्गर्भापहारादौ कथं क्षोद इति समः समाधिः । एवं तीर्थकराणामपि वीर्यजन्यत्वं न स्यात्तत्पितॄणामपि नीहाराभावात्,-स एव पुण्यवाँल्लोके, सैव पुण्यवती सती। ययोरयोनिजन्माऽसौ, वृषभो भवितात्मजः ॥ १ ॥' इत्यादिपुराणे १२ पर्वणि अयोनिजन्मकथनात्, एवं सति 'नोदरे विकृतिः कापि, स्तनौ नो नीलकंचुकौ। नो पाण्डु वदनं तस्या, गर्भोऽप्यवृद्धदद्भुतम् ॥१॥' इत्यपि तत्रैवासंगतं, तथा च येषां चक्र्यादीनां नीहाराभावस्त्वयाऽभ्युपेयते तेषामपि कर्पूरवद्गुड्डयनेऽतिप्रसंगो बोध्यः, यौगलिकानां शरीरं भारुण्डपक्षिणः क्षेत्रकालस्वाभाव्यात् जलधौ प्रक्षिपन्ति, तीर्थकराणां सामान्यकेवलिनां च देहं देवा नरा वाऽग्निना संस्कारं नयन्ति, न चेद्गजसुकुमालाद्यन्तकृत्केवलिनां दाहानुपपत्तिरिति ॥

केवलिनः शरीराज्जीववधे केषांचिद्विप्रतिपत्तावपि अयोगिगुणस्थाने आचारांगवृत्तौ शैलेश्यवस्थायां मशकादिकायसंस्पर्शप्राणत्यागेऽपि नास्ति तदुपादानकारणाभावाद्बन्ध इत्यक्षरैस्तत्प्रतिपत्तेः न त्वदभीष्टसाधनं, दंशमशकपरीषहबाधायां तत्सन्तर्पणवत्परेषां विनाशस्याप्युपपादनात्, दंशादिकृतदेहबाधाभावे परीषहाघटनात्, पाण्डवादीनां त्वन्मते तप्तायःशृंखलासंयोगे बाह्यजीवबाधा, न चेदुपसर्गेऽपि अनाबाधायामुपसर्गस्वरूपव्याघात इति ॥ अस्मन्नये जिनदेहस्य सप्तधातुमयत्वाद्दंष्ट्राणां सद्भावस्तत्पूजनं भक्तिभाजां देवानां युक्तमेव, न चानन्ततीर्थकृतां दंष्ट्रार्चने स्वर्गेऽपि संकीर्णता, पुद्गलानां विशीर्णतावश्यकत्वात्, तिर्यग्लोकादभिषेकार्थमानीयमानतुवरद्रव्यमृत्तिकादिवत् ॥ शाश्वत्या रत्नप्रभायाः प्रत्यक्षेण कम्पोपलब्धिवन्मेरुप्रकम्पोऽपि न विरुद्धस्तीर्थ-

कराणां त्वन्येऽप्यनन्तवीर्यत्वसहजातिशयात् यस्य प्रभावात् अचलं शाश्वतमिन्द्रासनं प्रकम्पते, तेन स्वयं मेरुचालनं काऽसंगतिरिति ॥ चतुर्दशस्वप्नानां नियम एव, अन्यथा श्रीनेमिमात्रारिष्ठरत्नमयं चक्रं श्रीसुपार्श्वपार्श्वमात्रा सर्पश्चाद्राक्षिं तेनाधिक्येऽपि न शंका, नियमोऽपि चतुर्दशरज्ज्वात्मकलोकस्वामिता गर्भस्य भाविनीति सूचनहेतुः, वृद्धानां तथाम्नायात्, सिंहासनस्य विमाने मीनयुगस्य पद्मसरसि आवश्यकत्वात्, पृथग्गणनेऽनुपयोगाच्च ॥ गंगाभोगः पुण्यप्रकृतित्वाद्भरतस्य युक्त एव, देवदेवीनां सामान्यनृपसेवा साम्प्रतमपि प्रतीयते, तर्हि चाक्रिणः किं चर्च्यम्?, तत्राऽप्यादिपुराणे- 'पतद्गंगाजलावर्त्तपरिवर्धितकौतुकः। प्रत्यायाहि स तत्पाते, गंगादेव्या धृतार्थया ॥१॥ इत्यादिना स्नानालंकारवाद्यनाट्यादिना गंगादेव्या भरतः परिषेवितः इत्युक्तं ॥ षण्णवतिर्भोगभूमयस्तु अनवकाशान्नांगीक्रियते ॥ चर्मजलपाने दोषो नेति लोकप्रतीतिमात्रं, न पुनः सिद्धान्तप्रतीतिबीजम्, अशक्यत्यागतया ताम्बूलिकताम्बूलजलवत्, तेन यदि त्यज्यते तदाऽपि वरमेव, न कापि विप्रतिपत्तिः, एवं हिंगुभोजनेऽपि पावित्र्यापावित्र्यस्य लोकानुसारात्, पक्ष्मपटीकस्तूर्यादिपरिभोगवत्, शुचित्वं द्विविधं- लौकोत्तरं लौकिकं, तत्रात्मनो विशुद्धध्यानव्यपोढमलस्य स्वस्मिन्नेव परिणाम आद्यं तत्साधनानि सम्यग्दर्शनादीनि, तद्वन्तश्च साधवः तदधिष्ठानानि निर्वाणभूम्यादीनि तत्प्राप्त्युपायाः शुचयो द्वितीयं, शुचित्वं कालअग्निभस्ममृद्गोमयसलिलाशननिर्विचिकित्सभावभेदादष्टविधं, कालेन शुचि यथा रजस्वला स्त्री चतुर्थदिने, यावद् घृणा नोत्पद्यते तावन्निर्विचिकित्सत्वमित्यर्थः, तिर्यक्शरीरजा अपि गोमयगोरोचनादन्तीवन्तीचमरीवालमृगचर्ममृगनाभिषंगिविषाणमयूरपिच्छसर्पमणिशुक्तिमुक्ताफलादयो लोके शुचित्वमुपागताः, नात्र पुनः शरीरे किंचित् शुचिः इति भाव-

१ विजयंतु वीरचलणग्गचंपिए मंदरंमि थरहरिए। कलसुच्छलंततोए सुभरणिलग्गंतबिंदुछंकारं ॥ १ ॥ इति ण्हवणपूजापाठे दिक्पटमते।

नासंग्रहवचनात् ॥ देवानामपि प्रीतिर्लोकानुसाराद्गोरोचनादिवत्, तथा च यदि भवद्भिस्त्यज्यते तदा सुखेन त्यज्यतां, नकश्चिद्विशेषः, अथ कैश्चिन्न त्यज्यते तदापि नाशौचं, तथा व्यवहारात्, मत्स्यकच्छपादिकलेवरस्पृष्टजलवत् ॥ यत एव घृतपक्वे न पर्युषितत्वं लोकाचरणात् स्याद् अस्यानिष्टत्वात् ॥ अक्षतफलभोगस्तु नास्माकं सम्मतः, प्रत्युत तन्निषेध एवेष्टः, तत्र वृन्ताकादिभोजनेऽक्षतफलस्योपभोगस्तु दृश्यतेऽपि प्रसह्यानिषेधात् सोऽपि बहुशः सर्वत्राचरणात् ॥ ऋषभप्रभोर्वैराग्यं वस्तुतः स्वत एव, जीतकल्पानुरोधाद्देवा लौकान्तिका अपि तद्धेतवः, प्रबोधांकुरे प्रोज्जृम्भमाणे भूयसां देवदेवीनां नृत्यादिप्रमोदपात्राचरणे न किमपि विचार्यं, तत्समये तु नृत्यं नीलांजनाख्यायाः, पश्यतः सुरयोषितः । उदपादि विभोर्भोगवैराग्यमनिमित्तकम् ॥ १ ॥ इत्यादिपुराणे स्पष्टमेव, श्रीवीरस्य भगवतो लोकोत्तरप्रवृत्तित्वेन न दीक्षाभिग्रहे विस्मयः, तत्र शासनेऽपि कायवाक्यमनसां प्रवृत्तय इत्यादिना अचिन्त्यकथनात् ॥

बाहुबली यवन इत्यपि न शास्त्रीयं वचः, तदा साम्प्रतीनयवनव्यवहाराभावात्, येऽपि म्लेच्छा अनार्यास्ते अन्यरूपा एव, देशकालभेदात् ॥ शुक्तिकावयवमौक्तिकादीनामिव नापावित्र्यं स्थापनाया द्वीन्द्रियतनोः, अन्यथा श्रीनेमिना शंखः स्वमुखप्रत्यासत्त्या कथं वादित इति ॥ श्रीवृषभदेवात्पूर्वं प्रतिश्रुत्यादिकुलकरैर्व्यवस्था कृता साऽऽदिपुराणे तवापि प्रतीता, यदि युगलजातयोरन्योऽन्यभोगनिषेधोऽभविष्यत्तदा सोऽप्यवक्ष्यत, तेन भगवतः कौमारं यावत् यौगलिकप्रवृत्तिसद्भावात्, नाभिमरुदेव्योस्तत्त्वे न संशयः, तथा चोक्तं प्राक्, तत एवादिपुराणे 'प्रसेनजित् परस्तस्मान्नाभिराजः चतुर्दशः । वृषभो भरतेशश्च, तीर्थचक्रभृतौ मनू ॥ १ ॥' इति सुष्ठूक्तं ३ पर्वणि, तथा-तौ दम्पती तदा तत्र, भोगैकरसतां गतौ । भोगभूमिश्रियं साक्षाच्चक्रतुर्विभुतामपि ॥ १ ॥' इत्यादिनापि साक्षाद्यौगलिकत्वकथनात् ॥ भोगभूमिजादीनां नीहाराभावे किं नियामकम् ?, आहारसद्भावे तस्यावश्यकत्वात्, अथ

तेषां पुण्यप्रकृतिकत्वेन तत्प्रायःस्थजलबिन्दुवत् न नीहार इति चेत् न, धान्यादीनां भस्मारम्भकत्वनियमात्, मलग्रहे प्रत्यहं रोगापादनात् ॥ यादवानां मांसभक्षणं जैनानां न सम्भवति, सम्यक्त्ववतां विशुद्धपरिणामारुरुक्षायां तदयोगात्, मूलगुणस्तु अयमेवेति संमतेः, प्रतिपित्सूनां सूनां पुरस्कृत्य प्रवर्त्तमानानां न कापि वार्त्ता इत्युक्तं प्राक् ॥

मानुषोत्तरपर्वतात् परतो मनुष्यगतिरपि न विरुद्धा, तपःशक्त्या विद्याशक्त्या वा यथा ऊर्द्ध्वलोकेऽधोलोके वा मनुष्या गच्छन्ति, न चैतदपि कथमित्याशंक्यम्, 'उड्डमहतिरियलोए' इत्यादिना क्रियाकलापे सिद्धत्ववचनात्, द्रव्यसंग्रहवृत्तावेकः पादो मेरुमस्तके द्वितीयस्तु मानुषोत्तरपर्वते दत्त्वा इति प्रागुक्तश्च, तपःशक्तिस्तु (जंघाचारणादीनां) तवापि शास्त्रेषु प्रतीता, विद्याभराणां नभोगमनशक्तिर्नन्दीश्वरादियात्रयैव फलवतीति ॥ कामदेवा भोगविशेषप्रसिद्धा शालिभद्राद्या भवन्ति तथापि न विरोधः, शास्त्रान्तरान्निर्णये चतुर्विंशतिरिति नियमोऽप्यस्तु, चतुर्विंशतियक्षवत्, परं त्रिषष्टिशलाकापुरुषमध्ये त्वयापि न गण्यन्ते, रुद्रवत्, नहि सर्वाणि शास्त्राणि केनापि संप्रति प्रतिज्ञयानि, तथा च यज्जिनवचनादविरुद्धं तत्तीर्थान्तरीयशास्त्रोक्तमपि प्रमाणं, तर्हि तव शास्त्रोक्तं कथमेकान्तेनाप्रमाणं स्यात् ?, यदुक्तं स्थानांगवृत्तौ- 'परसमओ उभयं वा सम्मदिट्ठिस्स ससमओ जेणं। तो सव्वज्झयणाइं ससमयवत्तव्वनिययाइं ॥ १ ॥' न चास्मच्छास्त्रे तद्वर्णनमस्तीति वाच्यम्, आदिपुराणे 'पुराणं संग्रहीष्यामि, त्रिषष्टिपुरुषाश्रितम्। तीर्थेशामपि चक्रेशां, हलिनामर्धचक्रिणाम् ॥ १ ॥ त्रिषष्टिलक्षणं वक्ष्ये, पुराणं तद्द्विषामपि' इति प्रथमपर्वणि वचनात् ॥ नवनवोत्तरा यद्यभविष्यंस्तर्हि तत्त्वार्थसूत्रे उभयनयसंमते ह्युपादिक्ष्यन् श्रीवाचकाः, अथोपरितनग्रैवेयकेषु एकत्रिंशत् सागराः स्थिति-

१ श्रीआदिपुराणे स्वयंबुद्धमन्त्रिणोऽपि मेरूपरिगतिः खचारिमुन्योस्तत्र संगतिश्च ।

स्थानं पंचानुत्तरेषु त्रयस्त्रिंशत् सागरा उत्कृष्टस्थितिस्थानं तर्हि विचाले द्वात्रिंशत्सागरस्थितिस्थानेन तदावश्यकत्वमिति चेन्न, जघन्यस्थितिस्थानापेक्षया तद्बाधात्, अनुत्तरचतुष्के एकत्रिंशत्सागरास्थितिस्थानसद्भावात्, न चेत्तत्रापि द्वात्रिंशत्सागरजघन्य-स्थितिस्थानं क्वापि संभाव्यं, अथ नरकेषु आवलिकावासेषु प्रथमप्रस्तरे दिक्षु एकोनपंचाशदावासा विदिक्षु चाष्टचत्वारिंशत्ततः पर-मेकैकहान्या नवोत्तरावासवत् देवेष्वपि नवोत्तराणां संभव इति चेन्न, नरकप्रस्तरादिस्थित्यपेक्षया देवलोकप्रस्तरादिस्थितीनां वैषम्यात् ॥

कामाभिलाषे मुनेः स्त्रीदानेनापि श्राद्धस्य स्थिरीकरणमित्येतत् क्वापि शास्त्रे प्ररूपणा नास्ति, भवति चेत्तथापि सूत्राणां विचि-धत्वाद्गाम्भीर्याद्वा भवादृशैः तदर्थानुपलम्भ एव, किंच-तव शास्त्रे सकलकीर्तिकृतश्रावकातिचारे-कन्यादानं निषिद्धं, तदेव पुनरा-शाधरेण स्वकृतश्रावकाचारे समुपदिष्टं, तत्फलं तद्बीजं च दर्शनस्थैर्यमेव, यदुक्तं- निस्तारकोत्तमायाथ, मध्यमाय सधर्मणे। कन्या-भूहेमहस्त्यश्वरथरत्नादि निर्वपेदि' ॥१॥ ति, गृहस्थाचार्याय तदभावे मध्यमपात्राय वा कन्यादि निर्वपेदिति कुलस्त्रीपरिग्रहं लोक-द्वयाभिमतफलसम्पादकत्वात्त्रैवर्गिकस्य विधेयतयोपदिशति-'धर्म्मसन्ततिमक्लिष्टां, रतिं वृत्तकुलोन्नतिम् । देवादिसत्कृतिं चेच्छन्, सत्कन्यां यत्नतो वहेत् ॥ १ ॥ दुष्कलत्रस्याकलत्रस्य वा पात्रस्य भूम्यादिदानान्न कश्चिदुपकारः स्याद् इत्यमुमर्थमवश्यं सत्कन्याविनियोगेन सधर्म्माणमनुगृह्णीयादिति विधिव्यवस्थापनार्थमर्थान्तरन्यासेन समर्थयति—सुकलत्रं विना पात्रे, गृहेऽन्नादि-व्ययो वृथा । कीटैर्दंदश्यमानेऽन्तः, कोऽम्बुसेकाद् द्रुमे गुणः ? ॥१॥ सुखोपभोगेनैव चारित्रमोहोदयो प्रतीकारत्वात्तद्द्वारेणैव तमप-वर्त्यात्मानमिव साधर्मिकमपि विषयेभ्यो व्युपरमयेत् इत्युपदेशार्थमाह-विषयेषु सुखभ्रान्तिं, कर्म्माभिमुखपाकजाम्। छित्त्वा तदुपभोगेन,

त्याजयेत्तान् स्ववत्परम् ॥ १ ॥ इत्यादि, यद्यत्र कन्यादानमपि चारित्रमोहोपशमादिधर्म्मफलं समुपदिष्टं, तत्रापि शास्त्रे सकलकीर्तिकृतश्रावकाचारे वारिषेणेन स्वस्त्रीदानेन साधर्मिकः स्थिरीकृत इत्युक्तम्, तेन स्थिरीकरणं सांसारिकव्यवहारेणापि श्रावकेण कार्यमितिसिद्धम् ॥ लघुसमुद्रा भरतैरावतक्षेत्रेषु जगती बहिष्टसमुद्राम्भःसमुद्गिरणरूपा नियता ये कवित्वरीत्योपनिबद्धाः ॥

ततः परेऽपि चर्चाविषयाः प्रतिष्ठारम्भः, नागकेतोर्विरतिः, भगवत्प्रतिमातिलकमित्यपि समर्थ्यते-प्रतिष्ठितं पूजयेदिति लौकिकवाक्यात् प्रतिष्ठा मान्यैव, उभयनयसम्मतत्वात्, अस्मन्नये प्रतिष्ठाकल्पे त्वन्नयेऽपि महापुराणे-'कारयन्ति जिनेन्द्रार्चाश्चित्रा मणिमयीर्बहूः।तासां हिरण्मयान्येव, विश्वोपकरणान्यपि ॥१॥ तत्प्रतिष्ठाभिषेकान्ते, महापूजां प्रकुर्वते।'इति सकलकीर्तिकृतश्रावकाचारेऽपि'न प्रतिष्ठासमो धर्मो, विद्यते गृहिणां क्वचित्। बहुभव्योपकारत्वाद्धर्म्मसागरवर्द्धनात् ॥१॥ यः प्रतिष्ठां विधत्ते ना, शक्रत्वं चक्रवर्त्तिताम्। प्राप्य मुक्तिं प्रयात्यत्र, सद्धर्म्मोदयकारणात् ॥१॥ अथ प्रतिष्ठा नमस्कारदण्डकोच्चारमात्रादेव न पुनर्जलौषधिस्नात्रादिमहारम्भेणेति चेत्, न, चित्रमात्रेणार्हद्बिम्बभक्तेरौचित्यान्महाप्रासादानां प्रत्यक्षलक्ष्याणां निषेधापत्तेः, एवं च कुन्दकुन्देन प्राभृते कथमुक्तम् 'चेइहरं जिणमग्गो छक्कायहियंकरं भणियमिति' एतेन महापूजाप्यष्टप्रकारापि भावविशेषात् धर्म्मविशेषकारिणी श्राद्धैर्विधेयेत्यावेदितम्, तेनाभिषेकावश्यकत्वादष्टोत्तरशततीर्थजलौषधीसमानयनं समहोत्सवं स्नात्रकरणं न्याय्यमेव, कारणवैशिष्ट्ये कार्यवैशिष्ट्यात्,नेत्रोन्मीलनवासक्षेपौ सूरिकार्यं,इयमेव प्रतिष्ठा चतुर्विधसंघमध्ये वृद्धत्वान्निरारम्भत्वाच्च मुनिकार्यं, स्नात्राभिषेकादिगृहस्थाचार्यकार्यं प्रभावनांगं महोत्सवात्, शेषं पूजांगं फलनैवेद्यादि दशदिक्पालक्षेत्रपालादिसन्तोषणं धर्म्मक्रियानिर्विघ्नताजनकं

मुहूर्त्ताद्यालोकवत् ॥ नागकेतोर्विरतौ जातिस्मृतरेव कारणता, तत एव तिरश्चामपि देशविरतिः, यच्च कर्म्मग्रन्थवृत्त्यादौ वर्षाष्टकादुपरि विरतिसम्भवस्तद्धर्म्मोपदेशादिसामग्र्याः प्राधान्यख्यापको बाहुल्यात्तथैव प्रवृत्तेः, अन्यथाऽतिमुक्तकादीनां वर्षषट्के सर्वविरतिर्न घटते, अयमेवार्थः पंचवस्तुकवृत्तौ- 'तदहो'गाहा व्याख्या-तदधः परिभवहेतुरित्यष्टवर्षेभ्यः आरादसौ परिभवभाजनं, न चरणपरिणामो-न चारित्रं परिणमते, प्रायो-बाहुल्येनामीषां तदधोवर्त्तिनां बालानामिति, आह-एवं सति सूत्रविरोधः, 'छम्मासियं छसुजय'-मित्यादिश्रवणात्, नैव चरणपरिणाममन्तरेण भावतः षट्सु यतो भवतीति, अत्रोत्तरमाह- 'आहच्च भाव' इति कथनं कादाचित्कत्वसूचकं सूत्रं पुनः षाण्मासिकमित्यादि भवति ज्ञातव्यम्, तच्च प्रायोग्रहणेन व्युदस्तमिति ॥ भगवत्प्रतिमायास्तिलकमप्याश्रित्य प्रागेव सविस्तरं जन्मावस्थाकल्याणकेन स्थापितं, अथ जगत्तिलकस्य पुनः किं तिलकमिति चेज्जगच्छत्रस्य पुनः छत्रं किमिति तस्यापि किमंगीकरणं ?, एवं जगद्दीपस्य दीपोऽपि किमिति वाच्यम् ?, अथ पूजकस्यापि तिलकं पूज्यस्यापीति साम्यप्रतीतेः दोष इति चेत् भगवतोऽपि स्नातत्वं सेवकस्यापि तथेति एवमप्यभेदः, किंच- भगवतः षोडशाभरणपूजा तपस उद्यापनायां तव नयेऽपि सम्मता, तथा च तिलकस्यापि सिद्धिरेवेति ॥ श्रीश्वेताम्बरशासनादनुपदं भेदः परैः कल्पितः, सर्वाशाम्बरशाम्बरस्थितिधरैर्जल्पैरनल्पैरलम् । त्रातुं तान् भववारिधौ निपततो न स्याद् बलद्विड् बली, जाग्रन्मोहमहीमहेन्द्रमहिमोत्साहाद्विबुद्धात्मनः ॥ १ ॥

अथ श्वेताम्बरदिगम्बरयोः कथमयं मतभेदो ?, द्वयोरपि जिनवचःप्रामाण्यात् इति चेत्, आवश्यकमेतत्, श्रूयतां, इहैव

१ आदिपुराणे दण्डराजजीवाजगरस्यानशनप्रतीतेः ।

भरतक्षेत्रे रथवीरपुरं नगरं, तत्र दीपकं नाम उद्यापनं, तस्मिन् कृष्णाचार्याः समवसृताः, तत्रैकः सहस्रयोधी शिवभूतिः नृपेण सम्यक् परीक्षितोऽतिवल्लभस्तस्याज्ञया यथेच्छं भ्रमन् उद्वेजितया मात्रा रात्रौ तिरस्कृतो मानभंगात् सूरिपार्श्वे दीक्षां ललौ, ततो विहृता सूरयः, कालान्तरे पुनरपि गुरवोऽभ्युपेताः राज्ञा समहोत्सवं वन्दिताः, शिवभूतये प्रणम्य पूर्वप्रेम्णा रत्नकम्बलं प्रतिलाभितं, तस्य च तस्मिन् मनो मूर्च्छितं दृष्ट्वा सूरिभिस्तमनापृच्छ्य पादप्रौंछनकानि कृतानि, तद् वीक्ष्य जातकोपः शिवभूति-र्मन्त्रादिरुद्धवीर्यभोगीव मनसि सूरीणां प्रति प्रतिघोत्पत्तिनिमित्तं चिन्तयामास, अत्रान्तरे श्रीसूरिभिः कदाचिज्जिनकल्पो व्याख्यातः, तं श्रुत्वा सोऽभाणीत्-भवद्भिरपि स कथं नाद्रियते ?, तैरवाचि-भो महानुभाव! सोऽधुना व्यवच्छिन्नः, तादृक्संहननाभावात्, तेन प्रत्यवाचि-धीराणां न किमपि विच्छिन्नं, मयैष एव सेवनीयः, तत्रापि सर्वथा निष्परिग्रहेणैव भाव्यं, परिग्रहस्य क्रोधकारणताऽनु-भवात् , ततः सूरिभिः धर्मोपकरणं न परिग्रह इति प्रागुक्त्या निषिद्धोऽपि नग्नीभूय उद्याने गतः, तद्भगिन्यपि नग्नाऽभूत् , तां वीक्ष्य वेश्या माऽस्मासु लोको विरागो भूदिति महावटवृक्षाऽप्रकटदेशे स्थित्वा तस्या उपरि वसनं मुमोच, सापि तदनिच्छन्ती देवेन दत्तमिदं मा मुंचेति भ्रातुर्वाचा उवास, ततः सवस्त्रावस्त्रधर्मयोः फलभेदार्थं स्त्रीमोक्षं न्यवारयत्, पात्रे परिग्रहधिया केवलिनः कवलभुक्तिं च, ततो विहरन् क्वापि वने चैत्यं दृष्ट्वा तत्र जिनान्नन्तुं ययौ, विचाले म्रियमाणं कंचिन्मयूरं नमस्कारान् श्रावयामास, स मयूरजीवः तत्प्रभावेन देवीभूय पूर्वोपकारित्वात् तं प्रत्यागत्य ननाम, सोऽपि शिवभूतिज्ञापितस्वरूपं तं स्वाभीष्टमतप्रवृत्तये त्वं मां संनिधेहीति ययाचे, देवोऽपि मम पिच्छानि बिभ्राणस्त्वं सर्वत्रादेयवाक्यो भविष्यसीति वरं दत्त्वाऽन्तर्दधे, अन्यदा तेन समं कस्यचित् श्रीपादस्य मैत्रीभवने अनेकान्तव्यवस्थाव्यवहारो जैने वेदपुराणयज्ञब्रह्मचारीत्यादिपरिभाषा शैवी रक्षणीयेति प्रति-

ज्ञाय द्वाभ्यां संयुज्य दिगंबरधर्मः प्रादुष्कृतः, शिवभूतिः क्रमेण वायुनोड्डीयमानतृणपुंजाधो निरुद्धश्वासः स्वर्ययौ, तद्दीक्षितकौण्डिण्य-कोट्टवीराभ्यां स धर्मः प्रवर्तितः, तद्धार्मिकरूपचन्द्रादिसंसर्गेण वाणारसीदासेन नाटकप्रकटनादिना तद्धर्मश्रद्धया नवीनवासनोद्भावेन केचिच्छ्लोका वाणारसीयाः कृता इति गाथार्थः ॥ २३ ॥ अथ नटसमाजः—

**पाएण कालदोसा भवन्ति दाणा परम्मुहा मणुआ । देवगुरूणमभत्ता पमादिणो तेसिमित्थ रुई ॥ २४ ॥**

इति निष्क्रान्ताः सर्वे ॥ प्रायेण कालदोषात् भवन्ति दानात् पराङ्मुखा मनुजाः । देवगुरूणामभक्ताः प्रमादिनस्तेषामत्र रुचिः॥२४॥ अवसर्पिणीसमयानुभावात् धनस्य न महती उत्पत्तिः तदभावात् केचिद्धनोपार्जनेऽपि मतिवैक्लव्यात् कार्पण्यपरवशा दानात् स्वत एव निवर्तन्ते, देवेषु गुरुषु चैत्यपूजाऽऽहारदानादिना व्ययभयात्, अभक्ता न मनागपि रागभाजः, अत एव प्रमादिनो यथेच्छाहारविहारादिपराः तेषामत्र मते रुचिः-श्रद्धा स्यात्, कारणं तु प्रागुक्तमिति गाथार्थः ॥ २४ ॥

**इय जाणिऊण सुअणा ! वाणारसीयस्स मयवियप्पमिणं । जिणवरआणारसिआ हवंतु सुहसिद्धिसंवसिआ ॥२५॥**

इति ज्ञात्वा सुजना वाणारसीयस्य मतिविकल्पमिमम् । जिनवरआज्ञारसिका भवंतु सुखसिद्धिसंवासिताः ॥ २५ ॥

एवं मतस्य विकल्पः-कल्पनारूपस्तं ज्ञात्वा हे सुजनाः जिनवराणामाज्ञायामेव रसिका यज्जिनागमे प्रोक्तं तदेव प्रमाणीकार्यं न कल्पनया इदं संभवति इदं न संभवतीति चिन्तनीयं, तद्विचारणायामश्रद्धालुताप्रसंगात्, एतेन प्रतिमतं हेतवोऽन्ये चाहेतवः प्रवर्तन्ते, कुत्र आद्रियते कुत्र वा नाद्रियते, तेन स्वधर्मे दृढतैव परं ज्ञानमितिसूचितं, न चैवं मिथ्यादृशां स्वधर्मे दृढतोपदेशः स्यादितिवाच्यं, जिनवरेत्यनेन तन्निरासात्, नन्वेवमपि जैनेषु मतान्तरीयाणां स्वधर्मदार्ढ्यमुपदिष्टं स्यात्, तेषामपि स्वस्वमता-

भिप्रायेण व्याख्यानघटनाद्वयमेव जिनाज्ञातत्परा इतिबुद्ध्या प्रवर्तनादिति चेन्न, रसिका इत्यनेन ज्ञानक्रियातात्पर्यपरंपरागमाभिप्रायनैपुण्याभ्यां सद्गुरुं निर्णीय तन्निषेवणया मार्गामार्गविवेकज्ञानरसविद्वांस एव जिनाज्ञातत्परा इत्यर्थध्वननात्, तथाच सम्यग्ज्ञानं विना प्रवृत्तिनिवृत्ती न कार्ये इति फलितोऽर्थः, तेन जिनवराज्ञारसिका भवन्तु, सुखयतीति सुखा पचाद्यच्, स चासौ सिद्धिः-कृत्स्नकर्मक्षयलक्षणा तया संवासिताः--तद्रूपतां प्रापिता भवन्तु सुखानां सिद्ध्या-निष्पत्त्या संवासिता भवन्तु वेत्यर्थः, प्रमाणनयनिक्षेपाद्यनभिज्ञानां सम्यग्ज्ञानाभावात् विकल्पैरितस्ततो भ्रमणात् भवभ्रम एव, सम्यग्ज्ञानादेव प्रवृत्तेर्निवृत्तेश्च बहुफलसिद्धिरिति ॥

बाणारसीयैर्विहिता य एव, प्रश्नाः प्रबोधेन समाहितास्ते । न्यायागमज्ञैर्गुरुभिर्मदीयैर्लिपिर्मया तद्वचसां कृताऽस्मिन् ॥ १ ॥ शास्त्रं दर्पणवद्विचारचतुराः संशोध्य तद्ग्राहिणीं, कृत्वा बुद्धिमपास्य दूषणगणं बालानुकम्पाशया । नित्यानन्दमयात्मबोधसरसि स्नानं सृजन्तश्चिरं, सन्तस्तोषभुजो भवन्तु सफलास्तन्मे प्रयासा अपि ॥२॥ सन्तः कृपाढ्या मनसोल्लसन्तः, प्रयान्ति तोषं विनयन्ति दोषम् । बालस्य लीलामपि निष्प्रमीलां, वीक्ष्यैन्दवीं कान्तिमिवापगेशाः ॥ ३ ॥ ससौभाग्यं भाग्यं भजतु सुजनोऽस्यादरभरात्, सवैगुण्यं गुण्यं स्खलितमथवाऽवैतु च खलः । सनैपुण्यं पुण्यं प्रथयतु तथाऽप्यार्हतमतेऽवदानं दानं वा प्रतिवचनदातुर्भवतु मे ॥४॥ कल्याणेन मया प्रमेयमणयः सिद्धान्तदुग्धाम्बुधेः, कल्याणाह्वयसाधुबोधविधयाऽभ्युद्धृत्य राशीकृताः । कल्याणात्मसुवर्णयोजनिकयाऽलंकारबीजं सतां, कल्याणाय भवन्त्वमी भगवतां यावत्तपःशासनम् ॥ ५ ॥ ननु मनुर्जनुषा धनुषा समोऽभ्युदयतां शुचिवंशगुणाश्रयात् । सकलतात्त्विकसात्त्विकनन्दनोऽभजदयं मम यत् सहकारिताम् ॥ ६ ॥ जिनवचनविरुद्धं यत्र बुद्धं च शुद्धं, तदिह

यदि निबद्धं दुर्द्धरावशैर्बुद्ध्या । सकलजनसमक्षं न्यक्षमालोचयेऽहं, त्रिकरणपरिशुद्ध्या दुष्कृतं मेऽस्तु मिथ्या ॥ १ ॥ चतुःसहस्री श्लोकानां, शतत्रयसमन्विता । प्रमाणमस्य ग्रन्थस्य, निर्मितं तत्कृता स्वयम् ॥ १ ॥ श्रीतपागणविभुर्भुवि भूयःकीर्त्तिपूर्त्तिधवलीकृतलोकः । सूरिरानतसुरासुरदेवः, प्रोल्ललास विजयादिमदेवः॥९॥ तत्पट्टपूर्वाचलचित्रभानुर्दुर्वादिवादेन्धनचित्रभानुः। जेजीयते श्रीविजयप्रभाह्वः, सूरिः स्वबुद्ध्या जितदेवसूरिः ॥ १० ॥ तत्पट्टभूपा महसातिपूपा सुवर्णनैर्मल्यविधानमूषा । विराजते श्रीविजयादिरत्नः, प्रभुः प्रभाध्यापितदेवरत्नः ॥ ११ ॥ तेषां राज्ये मुदाऽकारि, वाङ्मयं युक्तिबोधनम् । मेघाद्विजयसंज्ञेन, वाचकेन तपस्विना ॥ १२ ॥ तत्परम्परा चैवम्—“श्रीमत्तपागणपतिर्यतिमार्गधीरः, श्रीहीरहीरविजयो जयवान् बभूव । यः प्रत्यबूबुधदकब्बरराजराजं, वाक्यैः सुधातिमधुरैर्यवनाधिराजम् ॥ १३ ॥ श्रीवाचकः कनकतो विजया बभूवुर्विद्यानवद्ययशसो भुवि तद्विनेयाः । तेषां सुशीलविजयाः कवयो विनेयाः, शिष्यौ बभूवतुरतुल्यमती तदीयौ ॥ १६ ॥ आद्यः श्रीकमलादिमश्च विजयस्तस्यानुजन्मा बुधः, श्रीसिद्धेर्विजयोऽत्र तौ मम गुरोर्दीक्षानुशिक्षागुरू। श्रीसन्मानकनाम्नि धाम्नि महसोद्रंगे विजित्य क्षणाल्लुम्पाकेन्द्रगणान् जयश्रियममू सम्प्रापतुर्विश्रुताम् ॥ ११ ॥ यः षट्तर्कवितर्ककर्कशमतिः साहित्यसिद्धान्तवित्, प्राणप्रक्षितिपः कृपादिविजयः प्राज्ञो विनेयस्तयोः । तत्पादाम्बुजभृंगमेघविजयोपाध्यायलब्धात्मना, ग्रन्थो मेरुमहीधरावधिरयं सिद्धिश्रियै नन्दतात् ॥ १६ ॥ इतिश्रीमहोपाध्यायमेघविजयगणिविरचितः सवृत्तिर्युक्तिप्रबोधः ग्रन्थः सम्पूर्णः

इति वाणारसीयमतखण्डनपरः श्रीमेघविजयोपाध्यायरचितः सवृत्तिकः श्रीयुक्तिप्रबोधः संपूर्णः